VA-I-02



मुक्तस्वाध्यायपीठम्
(Institute of Distance Education)
राष्ट्रियसंस्कृतसंस्थानम्
( मानितविश्वविद्यालयः )

# महाभाष्यम्

( प्रथमाध्यायस्य प्रथम पादे ५ तः ९ आह्निकं यावत् )

नव्यव्याकरणाचार्यः, प्रथमवर्षम्
द्वितीयपत्रम्

खण्डः

# २

## सर्वादीनीत्यारभ्य नवेतिविभाषान्तः

**समीक्षणम्**

**डा. बोधकुमारझाः**
व्याकरणविभागः
रा.सं.सं., के.जे.सोमैय्यापरिसरः, मुम्बई

**पाठलेखनम्**

| **प्रो. सुरेश्वरझाः** | **डा. विष्णुकान्तपाण्डेयः** | **प्रो. अर्कनाथचौधरी** | **डा. एस्.एल्.पी. आञ्जनेयशर्मा** |
| --- | --- | --- | --- |
| का.सि.द.सं.वि., दरभङ्गाः (बिहार) | रा.सं.सं., जयपुरपरिसरः, जयपुरम् | रा.सं.सं., जयपुरपरिसरः, जयपुरम् | पाण्डिचेरी |
| (८-९ पाठौ) | (१०-११ पाठौ) | (१३ पाठः) | (१२-१४ पाठाः) |

**सम्पादनम्**

**प्रो. अर्कनाथचौधरी**
प्राचार्यः
जयपुरपरिसरः, राजस्थानम्

**संयोजनम्**

**डा. रत्नमोहनझाः**
वरिष्ठसहायकाचार्यः, दूरस्थशिक्षा
राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली

**साहाय्यम्**

**श्री कु. वेङ्कटेशमूर्तिः**
सहायकाचार्यः, दूरस्थशिक्षा
राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली

***प्रकाशनम्***

**प्रो. रमाकान्तपाण्डेयः**
निदेशकः, मुक्तस्वाध्यायपीठम्
राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली

प्रथममुद्रणम् – **२०१० (५० प्रतयः)**

पुनर्मुद्रणम् – **२०१२ (१०० प्रतयः), २०१४ (५० प्रतयः), २०१५ (५०० प्रतयः)**

ISBN : 978-93-82091-35-6



प्रयुक्तकागदम् – Agro-based environment Friendly.

**पृष्ठविन्यासः**

**श्रीराजीवकुमारसिंहः**
राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली

**मुद्रकः**

**सत्यम पब्लिशिंग हाऊस**
एन-३/२५, मोहन गार्डन, उत्तम नगर,
नई दिल्ली-११००५९

## खण्डपरिचयः

पाठक! प्रथमखण्डे प्रगृह्यसंज्ञा-घुसंज्ञा घसंज्ञा संख्यासंज्ञाषट्संज्ञानिष्ठासंज्ञाविषये भवान् अपठत्। अस्मिन् खण्डे सर्वादीनि सर्वनामानि इति सर्वनामसंज्ञासूत्रं पठिष्यति। सर्वशब्दस्य सर्वनामसंज्ञायै सर्वादीनि इत्यत्र तद्गुणसंविज्ञानबहुव्रीहिविषये ज्ञास्यति। सर्वनामपदे णत्वं कथं नेति ज्ञास्यति। संज्ञा शब्दानाम् उपसर्जनीभूतानां कथं न सर्वनाम संज्ञा इति च ज्ञास्यन्ति। उभशब्दस्य सर्वनामसंज्ञाया प्रयोजनविषये च निर्णेष्यति। सर्वनामसंज्ञाविषये एव विभाषादिक्समासे बहुव्रीहौ इत्यपि पठिष्यति। न बहुव्रीहौ, तृतीयासमासे, विभाषा जसि इति सूत्राणि पठित्वा कुत्र सर्वनामसंज्ञा न भवतीति वेत्स्यति। स्वमज्ञातिधनाख्यायाम्, अन्तरं वहिर्योगोपसंव्यानयोरिति सूत्रपठनेन स्वशब्दः अन्तरशब्दश्च कुत्रार्थे सर्वनामसंज्ञकौ कुत्र नेति ज्ञात्वा शुद्धं प्रयोगं कर्तुमर्हति। अत्रैव खण्डे अव्ययसंज्ञाविषये स्वरादिनिपातमव्ययम्, तद्धितश्चासर्वविभक्तिः, कृन्मेजन्तः, अव्ययीभावश्चेति सूत्राणि पठित्वा अव्ययशब्दान् ज्ञास्यति।

सर्वनामस्थानम्, सुडनपुंसकस्येति सूत्रं पठित्वा सर्वनामस्थानसंज्ञाया प्रयोजनं ज्ञास्यति। संज्ञा अर्थस्य शब्दस्य वेति भोत्स्यति। नवेति विभाषा इति परिभाषासूत्रमाध्यमेन विभाषासंज्ञां ज्ञास्यति। न वा कुण्डिकेत्यादौ कथं न विभाषा संज्ञा, विभाषायाः प्रकारत्रयं– प्राप्ताप्राप्तोभयत्रविभाषां चेति सर्वम् अवगमिष्यति। विभाषाविषये त्रिसंशयान् ज्ञात्वा कीदृशी विभाषा कुत्रेति निश्चेष्यति।

बोधप्रश्नमाध्यमेन स्वयमेव उत्तराणि अन्वेषयिष्यति। कठिनशब्दानामर्थान् ज्ञास्यति। अभ्यासप्रश्नानामुत्तराणि अन्विष्य स्वाध्ययनं परिपोषयिष्यति।



# अष्टमः पाठः [सर्वादीनि सर्वनामानि ( १-१-२६ ) इत्यारभ्य संज्ञोपसर्जनप्रतिषेधं यावत्]



## ८.१ प्रस्तावना

सर्वादीनि सर्वनामानि इति सर्वनामसंज्ञाविधायकं सूत्रम्। सूत्रे सर्वादीनि इति पदेन सर्वादिगणपठितानि सर्वविश्वेत्यादीनि पञ्चविंशच्छब्दस्वरूपाणि गृह्यन्ते। तेषां सर्वेषां शब्दानाम् अनेन सूत्रेण सर्वनामसंज्ञा भवति। सर्वनामसंज्ञाकारणात् अदन्तप्रातिपदिकस्य जसि ङयि ङसि आमि ङौ विभक्तौ च आदेशागमयोः वैशिष्ट्यात् रामादिशब्दादितः भिन्नानि रूपाणि भवन्ति। पाणिनिः लाघवेन शास्त्रप्रवृत्यर्थं संज्ञाः लघुभूताः करोति, तत्र सर्वनामेति महती संज्ञा। महत्याः संज्ञायाः करणे प्रयोजनमस्ति– अन्वर्थसंज्ञा विज्ञानमिति। तेन सर्वेषां नामानि सर्वनामानि इत्यर्थबोधात् संज्ञोपसर्जनीभूतानां सर्वादिगणपठितानां सर्वनामसंज्ञा न भवति। सर्वनामसंज्ञात्वाभावादेव तत्र सर्वनामसंज्ञाप्रयुक्तानि कार्यविशेषाणि अपि न भवन्ति। एतत्सूत्रस्य भाष्ये निम्नलिखितविषयाः विचारिताः सन्ति–

१. सर्वादीनि इति पदे तद्गुणसंविज्ञानो बहुव्रीहिः इति स्वीकारेण बहुव्रीहेरन्यपदार्थप्रधानत्वेऽपि सर्वशब्दस्यापि सर्वनामसंज्ञा भवति।

२. सर्वनाम इति संज्ञावाचके शब्दे 'पूर्वपदात् संज्ञायामगः' इति सूत्रेण प्राप्तमपि णत्वं निपातनान्न भवति।

३. निपातनपदार्थविचारः।

४. संज्ञाभूतानाम्, उपसर्जनीभूतानां च सर्वादीनां सर्वनामत्वाभावविचारः।

५. उभशब्दस्य पाठः सर्वादिगणे आवश्यको न वा? इति विचारः।

६. भवच्छब्दस्य सर्वनामसंज्ञायाः प्रयोजनविचारः।
अन्तिमविषयद्वये प्रस्तुतस्य महाभाष्यस्य विवेचनमग्रिमे पाठे भवान् द्रक्ष्यति। अस्मिन् पाठे तु आदितश्चत्वारो विषयाः विवेचिताः सन्ति।

## ८.२ उद्देश्यम्

अस्य पाठस्य पठनानन्तरं भवान्–

- सर्वादीनि सर्वनामानि इति सूत्रस्यार्थेन, उदाहरणेन च परिचितो भविष्यति।
- सर्वादीनि इति पदे बहुव्रीहिसमासेनापि कथं सर्वशब्दस्यापि सर्वनामसंज्ञा भवति? इति जिज्ञासायाः समाधानं प्राप्स्यति।
- बहुव्रीहेः तद्गुणसंविज्ञानः, अतद्गुणसंविज्ञानश्चेति भेदद्वयेन सह परिचितो भविष्यति।
- सर्वनामशब्दे णत्वं कथं न भवति इति जिज्ञासायाः समाधानं प्राप्स्यति।
- निपातनपदार्थेन सह परिचितो भविष्यति।
- सहैव ज्ञास्यति यद् व्याकरणान्तरस्य 'लुम्पेदवश्यमः कृत्ये' इत्यादिवचनमपि शब्दानां साधुत्वज्ञानाय प्रमाणं भवति।
- संज्ञोपसर्जनीभूतानां सर्वादीनां सर्वनामसंज्ञा कथं न भवति? इति जिज्ञासायाः समाधानं प्राप्स्यति।
- सर्वनामेति महत्याः संज्ञायाः करणेन अन्वर्थानामेव सर्वादिशब्दानां सर्वनामसंज्ञा भवति।

## ८.३ सर्वादीनि सर्वनामानि ॥ १-१-२६ ॥

### ८.३.१ सूत्रविमर्शः

'सर्वादीनि सर्वनामानि' इति पदद्वयात्मकं संज्ञासूत्रम्। सर्वादीनि इति संज्ञि, सर्वनामानि इति संज्ञा। सर्वादीनि इति पदे सर्वः आदिर्येषां तानीमानि इति विग्रहे बहुव्रीहिसमासः। तेन सूत्रस्यार्थो भवति–

सर्वादीनि = सर्व, विश्व, उभ इत्यादीनि शब्दस्वरूपाणि सर्वनामसंज्ञानि भवन्ति।

उदाहरणम्– सर्वे, सर्वस्मै, सर्वस्मात्, सर्वेषाम्, सर्वस्मिन्, सर्वकः।

सर्वनामसंज्ञाकारणात् सर्वे इत्यत्र 'जसः शी' इत्यनेन जसः श्यादेशः। सर्वस्मै इत्यत्र 'सर्वनाम्न स्मैः' इति सूत्रेण स्मै इत्यादेशः। सर्वस्मात् इत्यत्र 'ङसिङ्योः स्मात्स्मिनौ' इत्यनेन ङसेः स्मात् इत्यादेशः। सर्वेषाम् इत्यत्र 'आमि सर्वनाम्नः सुट्' इत्यनेन आमः सुडागमः। सर्वस्मिन् इत्यत्र 'ङसिङ्योः स्मात्स्मिनौ' इत्यनेन ङिविभक्तेः स्थाने स्मिन् इत्यादेशः। सर्वकः इत्यत्र 'अव्यय-सर्वनाम्नामकच् प्राक् टेः' इति सूत्रेण अकच् प्रत्ययः।

## ८.३.२ 'सर्वादीनि' इति पदे बहुव्रीहिभेदप्रदर्शनं, णत्वाभावश्च

[सर्वादीनि सर्वनामानि (१-१-२६) इत्यारभ्य संज्ञोपसर्जनप्रतिषेधं यावत्]

'सर्वादीनि सर्वनामानि' इति सूत्रेण सर्वादिगणपठितानां सर्वसहितविश्वादिशब्दानां सर्वनामसंज्ञा इष्टा। 'सर्वादीनि' इति पदे यदि बहुव्रीहिसमासः क्रियते, तर्हि बहुव्रीहौ अन्यपदार्थस्य प्रधानत्वात् सर्वशब्दस्य सर्वनामसंज्ञा न प्राप्नोति। तद्यथा– 'चित्रगुः' इत्यत्र बहुव्रीहिसमासेन 'चित्रगुरानीयताम्' इत्युक्ते यस्य चित्रा गावः भवन्ति स आनीयते, न तु चित्राः गावः।

अतः विश्वादिशब्दैः सह सर्वशब्दस्यापि सर्वनामसंज्ञार्थं 'सर्वादीनि' इति पदे गौरवास्पदोऽपि बहुव्रीहि-तत्पुरुषयोः एकशेषः स्वीकार्यः। तत्र सर्व आदिर्येषाम् इति विग्रहे बहुव्रीहिसमासेन सर्वादीनि इति पदं सेत्स्यति, अनेन पदेन विश्वादीनां ग्रहणं भविष्यति। सर्वश्चासौ आदिश्च इति विग्रहे 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन' इति सूत्रेण तत्पुरुषे समासे कृते सर्वादिः इति पदं सेत्स्यति। अनेन पदेन केवलं सर्वशब्दस्य ग्रहणं भविष्यति। सर्वादीनि च सर्वादिश्च इति विग्रहे 'नपुंसकमनुपंसकेनैकवच्चास्यान्तरस्याम्' इति सूत्रेण नपुंसकस्य सर्वादिशब्दस्यैकशेषे सर्वादीनि इति पदं सेत्स्यति। एकशेषेण निष्पन्नेन 'सर्वादीनि' इति पदेन विश्वादिभिः सह सर्वशब्दस्यापि ग्रहणेन सर्वशब्दस्यापि निर्बाधरूपेण सर्वनामसंज्ञा भविष्यति।

एवं हि केवलं बहुव्रीहिसमासे सर्वशब्दस्य सर्वनामसंज्ञाया अप्राप्तिशङ्कया, बहुव्रीहि-तत्पुरुषयोरेकशेषस्वीकारे च गौरवमनुभूय भाष्ये जिज्ञासा कृता यत् 'सर्वादीनि' इति कोऽयं समासः? इति। अस्या जिज्ञासायाः समाधानाय भाष्यकारेणोक्तं यत् अत्र केवलं बहुव्रीहिसमास एव स्वीकार्यः। केवलं बहुव्रीहिसमासस्यैव स्वीकारे सर्वनामसंज्ञायाः अप्राप्तिरूपदोषनिराकरणाय समाहितं यद् बहुव्रीहौ तद्गुणसंविज्ञानमपि भवति।

एवमेव तद्गुणसंविज्ञाने बहुव्रीहौ 'सर्वादीनि' इति पदेन विश्वादिभिः सह सर्वशब्दस्यापि सर्वनामसंज्ञा भविष्यति।

प्रसङ्गादत्र बहुव्रीहिसमासस्य निम्नलिखितौ द्वौ भेदौ प्रदर्श्येते–

१. तद्गुणसंविज्ञानो बहुव्रीहिः

२. अतद्गुणसंविज्ञानो बहुव्रीहिश्च।

तद्गुणसंविज्ञानो बहुव्रीहिः– तस्य = अन्यपदार्थस्य, ये गुणाः विशेषणीभूताः वर्तिपदार्थाः (समस्यमानानां पदानामर्थाः), तेषामपि संविज्ञानम् = ग्रहणं भवति यस्मिन् बहुव्रीहौ स तद्गुणसंविज्ञानो बहुव्रीहिः। यथा– चित्रवाससमानय। चित्रवाससम् इत्यस्य विग्रहो भवति– चित्राणि वासांसि यस्य य चित्रवासाः, तमिति। तद्गुणसंविज्ञाने बहुव्रीहौ तु अप्रधानस्यापि पदार्थस्य क्रियायामन्वयो भवति। तेन चित्रवाससमानय इत्यत्र प्रधानभूतस्य अन्यपदार्थस्य पुरुषस्यापि आनयनक्रियायामन्वयो भवति, अप्रधानस्य वस्त्रस्यापि पदार्थस्य।

तद्गुणसंविज्ञानेऽपि बहुव्रीहौ क्वचित् अप्रधानस्य पदार्थस्योपस्थितिस्तु भवति, परन्तु तस्य क्रियायामन्वयो न भवति। यथा– शुक्लवाससं भोजय इत्यत्र अन्यपदार्थेन सह अप्रधानस्य वाससः उपस्थितिस्तु भवति, परन्तु भोजनक्रियायां तस्यान्वयो न भवति।

अतद्गुणसंविज्ञानो बहुव्रीहिः– यत्र अन्यपदार्थस्य ये गुणाः वर्तिपदार्थाः (समस्यमानपदानामर्थाः) तेषां संविज्ञानम् = ग्रहणं न भवति सोऽतद्गुणसंविज्ञानो बहुव्रीहिः। न तद्गुणसंविज्ञानः इति हि तस्य विग्रहः।

अतद्गुणसंविज्ञानस्य बहुव्रीहेरुदाहरणम्– दृष्टसागरं पुरुषमानय, पश्य वा।

अत्र अन्यपदार्थस्य यः वर्तिपदार्थः सागरः, तस्य ग्रहणाभावेन न च तस्य क्रियायामन्वयो भवति, न वा क्रियायामन्वयकाले तस्योपस्थितिरेव भवति।

कुत्र तद्गुणसंविज्ञानो बहुव्रीहिः, कुत्र च अतद्गुणसंविज्ञानो बहुव्रीहिः?

यत्र अन्यपदार्थस्य, वर्तिपदार्थस्य च मध्ये संयोगसम्बन्धः, समवायसम्बन्धो वा भवति, तत्र तद्गुणसंविज्ञानो बहुव्रीहिः भवति।

'सर्वादीनि सर्वनामानि' इत्यत्र 'सर्वादीनि' इति पदे अन्यपदार्थः समुदायः, सर्वशब्दश्च तस्य समुदायस्य अवयवः। अवयवावयविनोः समवायसम्बन्धो भवति। अतः अत्र अन्यपदार्थस्य समुदायस्य, वर्तिपदार्थस्य सर्वस्य च समवायसम्बन्धः। अतः अत्रापि तद्गुणसंविज्ञान एव बहुव्रीहिः। एतदेव सूचयितुं भाष्ये 'सर्वादीनि' इति पदस्य विग्रहे 'सर्वशब्दः आदिर्येषां तानीमानि' इत्यत्र सर्वनामद्वयस्य उपादानं कृतम्।

यत्र अन्यपदार्थस्य, वर्तिपदार्थस्य च मध्ये संयोगसम्बन्धः, समवायसम्बन्धो वा न भवति, तत्र अतद्गुणसंविज्ञानो बहुव्रीहिर्भवति। यथा– चित्रगुरानीयताम्। अत्र अन्यपदार्थस्य पुरुषस्य, गोश्च मध्ये संयोगसमवायाभ्यां भिन्नः स्व-स्वामिभावसम्बन्धोऽस्ति। अतः इदम् अतद्गुणसंविज्ञानस्य बहुव्रीहेरुदाहरणम्।

आक्षेपः– 'सर्वादीनि सर्वनामानि' इति सूत्रे 'सर्वनाम' इति संज्ञाबोधकं पदम्। सर्वेषां नामेति विग्रहे तत्पुरुषसमासे कृते 'सर्वनाम' इति पदं सिद्ध्यति। अतः अन्तर्वर्तिविभक्त्या 'सर्व' इति पूर्वपदम्, नामेति इति चोत्तरपदम्। 'पूर्वपदस्थान्निमित्तात्परस्य नस्य णः भवति संज्ञायाम्, न तु गकारव्यवधाने' इत्यर्थकेन 'पूर्वपदात् संज्ञायामगः' इति सूत्रेण नामघटकनकारस्य णत्वं प्राप्नोति। अतः 'सर्वनाम' इति पदे णत्वप्रतिषेधाय 'पूर्वपदात् संज्ञायामगः' इति सूत्रे 'सर्वनामशब्दे णत्वस्य प्रतिषेधो वक्तव्यः' इत्येवं वार्तिकं करणीयम् इत्याक्षेपः कृतो भाष्ये।

समाधानम्– उक्ताक्षेपस्य समाधानाय भाष्यकारेणोक्तं यत् अत्र निपातनाण्णत्वं न भविष्यति। निपातनं नाम अन्यादृशे प्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणम्। यद्यप्यत्र सौत्रत्वान्न णत्वमित्यपि कथयितुं शक्यते स्म, तथापि निपातनाण्णत्वं न भविष्यति इति यदुक्तं भाष्ये तस्यायमाशयः– लोकेऽपि सर्वनामशब्दः णत्वरहित एव साधुः इति प्रतिपादनाय सौत्रत्वाद् इत्यनुक्त्वा निपातनाद् इत्युक्तं भाष्ये।

**मूलग्रन्थपाठो व्याख्या च**

**सर्वादीनि सर्वनामानि ।।१-१-२६।।**

**'सर्वादीनीति' कोऽयं समासः?।। बहुव्रीहिरित्याह।। कोऽस्य विग्रहः?।।**

**व्याख्या–** 'सर्वादीनि' इति पदं बहुव्रीहिसमासे कृतेऽपि सेत्स्यति, बहुव्रीहितत्पुरुषयोः एकशेषेऽपि। अतः अत्र प्रश्नः कृतः– 'सर्वादीनिति' कोऽयं समासः? इति।

उक्तप्रश्नस्य समाधानायोक्तम्– बहुव्रीहिरित्याहेति। अर्थात् 'सर्वादीनि' इति पदे बहुव्रीहिसमासः इति ब्रूते आचार्यः।

'कोऽस्य विग्रहः? इति ग्रन्थेन सर्वादीनि इति पदस्य विग्रहं पृच्छति।

**मूलग्रन्थपाठः**

**सर्वशब्द आदिर्येषां तानि-इमानि।। यद्येवं सर्वशब्दस्य सर्वनामसंज्ञा न प्राप्नोति। किं कारणम्? अन्यपदार्थत्वाद् बहुव्रीहेः।**

**बहुव्रीहिरन्यपदार्थे वर्तते, तेन यदन्यत् सर्वशब्दात् तस्य सर्वनामसंज्ञा प्राप्नोति। तद्यथा 'चित्रगुरानीयताम्' इत्युक्ते यस्य ता गावो भवन्ति स आनीयते, न गावः॥**

**नैष दोषः, भवति हि बहुव्रीहौ तद्गुणसंविज्ञानमपि। तद्यथा– 'चित्रवाससमानय' 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इति तद्गुण आनीयते, तद्गुणाश्च प्रचरन्ति॥**

**व्याख्या–** सर्वादीनि इति पदे विग्रहं प्रदर्शयति–सर्वशब्द आदिर्येषां तानि– इमानि। अत्र तानि इमानि इति कथनेन बहुव्रीहेः अन्यपदार्थस्य प्रधानत्वं प्रदश्र्यते। अन्यथा यथा चित्रा गावोऽस्य इति कथनेन गवां तद्विशेष्यत्वं, तद्वतः स्वामिनश्च विशेषणत्वमवगम्यते, तथैव सर्वशब्द आदिर्येषामित्येतावन्मात्रकथने सर्वशब्दस्य विशेष्यत्वम्, सर्वादिगणपाठस्य च विशेषणत्वमवगम्येत। अत एव बहुव्रीहिसमासे अन्यपदार्थस्य प्रधानत्वप्रदर्शनाय 'चित्रा गावो यस्य सः' इत्येवं विग्रहः क्रियते। यद्यपि अन्यत्र यस्य, ययोः, येषामित्यनन्तरम् एकस्यैव सर्वनाम्नः प्रयोगो दृश्यते, यथा– चित्रगुः इति पदस्य विग्रहे 'चित्रा गावो यस्य सः' इत्यत्र 'यस्य' इत्यनन्तरमेव 'सः' इत्येकस्यैव सर्वनाम्नः प्रयोगो दृश्यते। तथापि 'सर्वादीनि' इति पदस्य 'सर्वशब्द आदिर्येषां तानि– इमानि' इति विग्रहे तु 'येषाम्' इत्यनन्तरं 'तानि', 'इमानि' इति सर्वनामद्वयोपादानेन 'इदम्' शब्दस्य प्रत्यक्षविषयत्वाद् गणपठितेषु सर्वशब्दस्यान्तर्भावात् अत्र तद्गुणसंविज्ञानो बहुव्रीहिः इति सूचयति।

बहुव्रीहिसमासस्वीकारे दोषं प्रदर्शयति– यद्येवमिति। बहुव्रीहिसमासस्वीकारे सर्वशब्दस्य सर्वनामसंज्ञा न प्राप्स्यति, बहुव्रीहेः, अन्यपदार्थत्वात्।

प्रदर्शितापत्तिं स्पष्टयति– बहुव्रीहेरन्यपदार्थत्वादिति। बहुव्रीहिः अन्यपदार्थस्य बोध को भवति, तेन सर्वादिपदेन सर्वशब्दस्याग्रहणात् 'सर्वादीनि सर्वनामानि' इति सूत्रेण सर्वशब्दं विहाय ये अन्ये विश्वादयः शब्दाः तेषां सर्वनामसंज्ञा भविष्यति, न तु सर्वशब्दस्यापि। यथा– 'चित्रगुरानीयताम्' इत्युक्ते यस्य ता गावो भवन्ति स आनीयते, न तु गावः।

बहुव्रीहिसमासस्वीकारे प्रदर्शितस्य दोषस्याभावं प्रदर्शयति– नैष दोष इति। अयमाशयः–बहुव्रीहौ तस्य = अन्यपदार्थस्य ये गुणाः = विशेषणानि तेषामपि संविज्ञानम् = ग्रहणं भवति। यथा 'चित्रवाससमानय' 'लोहितोष्णीषाः ऋत्विजः प्रचरन्ति' इत्यत्र तद्गुणोऽपि आनीयते, तद्गुणाश्च प्रचरन्ति। एवमेव सर्वादिपदेन विश्वादिशब्दानामपि सर्वनामसंज्ञा भविष्यति, अन्यपदार्थस्य यः गुणः सर्वशब्दस्तस्यापि। अतः 'सर्वादीनि' इति पदे बहुव्रीहिसमास एव स्वीकार्यः।

**मूलग्रन्थपाठः**

**इह सर्वनामानीति 'पूर्वपदात् संज्ञायामगः' इति णत्वं प्राप्नोति, तस्य प्रतिषेधो वक्तव्यः॥**

**(वा.) सर्वनामसंज्ञायां निपातनाण्णत्वाभावः**

**सर्वनामसंज्ञायां निपातनाण्णत्वं न भविष्यति॥**

**व्याख्या–** इह = 'सर्वादीनि सर्वनामानि' इति सूत्रे प्रयुक्तं यत् 'सर्वनामानि' इदं पदम्, तत्र 'पूर्वपदात् संज्ञायामगः' इति सूत्रेण णत्वं प्राप्नोति, सर्वनामशब्दस्य संज्ञावाचकशब्दत्वात्। अतः अत्र सर्वनामशब्दे णत्वं मा भूदित्यर्थम् उपायं कथयति– तस्येति। अर्थात् 'पूर्वपदात् संज्ञायामगः' इति सूत्रे 'सर्वनामशब्दे णत्वस्य प्रतिषेधो वक्तव्य' इत्येवं वार्तिकं पठनीयम्।

समादधाति– सर्वनामसंज्ञायाम् = सर्वनामसंज्ञाविधायके 'सर्वादीनि सर्वनामानि' इति सूत्रे णत्वरहितस्य सर्वनामशब्दस्य निपातनेन = प्रयोगकरणेन ज्ञायते यत् 'सर्वनामशब्दे' णत्वं न भवति इति। निपातनशब्दस्यार्थः एवमुक्तः नागेशेन 'अस्थिदधि' इति सूत्रे लघुशब्देन्दुशेखरे निपातनं नामान्यादृशे प्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणम्' इति।

यद्यपि अत्र णत्वाभावाय 'सौत्रत्वान्न णत्वम्' इत्यपि कथयितुं शक्यते स्म तथापि 'निपातनाण्णत्वाभावः' इति यत् समाधानं कृतं तस्यायमाशयः–णत्वरहितः एव सर्वनामशब्दः लोकेऽपि साधुः यथा स्यादिति।

**बोधप्रश्नः**

१. सर्वादीनि इति पदे कस्य कस्य समासस्य संभावना विद्यते?

२. तद्गुणसंविज्ञानो बहुव्रीहिः कुत्र भवति?

३. सर्वनामशब्दे णत्वं कथं न भवति?

### ८.३.३ निपातनपदार्थविचारः

महाभाष्ये निपातनपदार्थविचारप्रसङ्गे सिद्धान्तः स्थापितो यत् प्रतिषेध इव निपातनमपि सामान्यसूत्रेण प्राप्तस्य कार्यस्य बाधनं करोति इति बाधकान्येव निपातनानि भवन्ति। अत्र आक्षेपः, समाधानं चैवं दृश्यते भाष्ये–

आक्षेपः– निपातनस्य तात्पर्यं भवति सूत्रेण यादृशं रूपं प्राप्यते, तद्भिन्नस्य रूपस्य साधुत्वप्रतिपादनम्। एवं हि निपातनेन णत्वरहितस्य सर्वनामशब्दस्य साधुत्वप्रतिपादने सूत्रकारस्य तात्पर्यसत्त्वेऽपि प्राप्तणत्वस्य प्रतिषेधे तस्य तात्पर्याभावात् निपातनेन सर्वनामशब्दस्य साधुत्वं स्यात्। एवं हि सर्वनामशब्दस्य वैकल्पिकप्रयोगः प्राप्नोति। भवति तु णत्वरहितस्यैव सर्वनामशब्दस्य साधुत्वम्। अतः अत्र प्रश्नः क्रियते– किमेतन्निपातनं नाम? इति।

आक्षेपकर्तारं प्रति भाष्यकारस्य प्रश्नः अथ कः प्रतिषेधो नाम?।

आक्षेपकर्तुः उत्तरम्– यत्र सामान्यरूपेण किंचिदुक्त्वा 'न' इत्युच्यते, तत्र आचार्यस्य अयमभिप्रायो गम्यते यत् एतद्विषये सामान्यसूत्रं न प्रवर्तते इति।

किमेतन्निपातनं नाम? इति प्रश्नस्य भाष्यकारस्य समाधानम्

निपातनमपि एवंप्रकारकमेव भवति। तद्यथा– 'पूर्वपदात् संज्ञायामगः' इति सूत्रेण सामान्यरूपेणोक्तेऽपि णत्वे निपातनद्वारा 'सर्वनामानि' इति शब्दस्य प्रयोगेण आचार्यस्याऽभिप्रायो गम्यते यत् सर्वनामशब्दे णत्वं न भवति, इति।

आक्षेपः– प्रतिषेधस्थले 'न' इति शब्दस्य प्रयोगेण प्राप्तकार्यस्य निवृत्तावेव प्रतिषेधस्य तात्पर्यमवगम्यते, निपातनस्थले 'न' इति शब्दस्य प्रयोगाऽदर्शनेन कथं प्राप्तस्य कार्यस्य निवृत्तिर्भविष्यति। तेन निपातनस्य तात्पर्यं तद्रूपस्य साधुत्वप्रतिपादने एव मन्तव्यम्, न तु रूपान्तरनिवृत्तौ। अतः सर्वनामशब्दे एकदा निपातनेन णत्वं न स्यात्। एकदा च यथाप्राप्तं णत्वं स्यात्। एवं हि णत्वसहितस्य, तद्रहितस्य च सर्वनामशब्दस्य साधुत्वं स्यात्?

आक्षेपकर्तारं प्रति भाष्यकारस्य प्रश्नः– अन्येऽपि एवं प्रकारका विधयो भवन्ति, यत्र यथाप्राप्तमपि कार्यं भवति, विशेषवचनेन प्राप्तमपि।

आक्षेपकर्तुः उत्तरम्– भवन्ति। तद्यथा– रामाय इत्यत्र यादेशे स्थानिवद्भावेन सुप्त्वम्, आदेशे स्वतः स्थितं यञादित्वं च तिष्ठति। अतः यञादौ सुपि विधीयमानो दीर्घः 'सुपि च' इत्यनेन भवति।

आक्षेपः– यद्येवं भवति तर्हि सुध्युपास्य इत्यादावपि 'इको यणचि' इति वचनाद् यण् श्रूयेत, यथाप्राप्तः इक् च श्रूयेत। एवं हि सुधी उपास्य इति प्रयोगस्यापि साधुत्वापत्तिः स्यात्?

आक्षेपकर्तुः उत्तरम्– 'इको यणचि' इत्यत्र 'इकः' इति षष्ठ्या निर्देशः कृतः। अतः 'षष्ठी स्थानेयोगा' इति परिभाषासूत्रसहकारेण षष्ठी इति स्थानिनं निवर्तयिष्यति।

आक्षेपकर्तारं प्रति भाष्यकारस्य प्रश्नः– एवं तर्हि दिवादिभ्यः सामान्यरूपेण 'कर्तरि शप्' इत्यस्यापि प्राप्तिः, विशेषरूपेण 'दिवादिभ्यः श्यन्' इत्यस्यापि। एवं हि विशेषवचनेन श्यन्नपि भविष्यति, यथाप्राप्तश्च शबपि?

आक्षेपकर्तुः उत्तरम्– 'दिवादिभ्यः श्यन्' इत्यनेन न साक्षात् श्यनो विधानम्, अपि तु शपः स्थाने श्यन् इत्यादेशस्य विधानं क्रियते।

आक्षेपकर्तारं प्रति भाष्यकारस्य प्रश्नः– शपः श्यन् इत्यादेशस्वीकारे 'दिवादिभ्यः श्यन्' इत्यत्र 'शपः' इत्येवं निर्देशः कर्तव्यः स्यात्?

आक्षेपकर्तुः उत्तरम्– 'शपः' इति निर्देशस्य तत्र नावश्यकता, 'कर्तरि शप्' इत्यतः तदनुवृत्तेः।

आक्षेपकर्तारं प्रति भाष्यकारस्य प्रश्नः– 'कर्तरि शप्' इत्यत्र 'शप्' प्रथमया निर्दिष्टम्, अत्र यदि षष्ठ्या निर्देशः स्यात्तदैव श्यना शपो निवृत्तिर्भवितुमर्हति?

आक्षेपकर्तुः उत्तरम्– 'दिवादिभ्यः' इति पञ्चम्यन्तं पदम्, अतः 'तस्मादित्युत्तरस्य' इति सूत्रेण अनुवृत्तं 'शप्' इति पदं षष्ठ्यन्तत्वेन विपरिणमिष्यते।

आक्षेपकर्तारं प्रति भाष्यकारस्य प्रश्नः– अयं हि प्रत्ययविधिः। प्रत्ययविधौ च पञ्चम्यः षष्ठीप्रकल्पिकाः न भवन्ति?

आक्षेपकर्तुः उत्तरम्– दिवादिभ्यः श्यन् इति नायं प्रत्ययविधिः, अपि तु आदेशविधिः, अर्थात् अनेन शपः स्थाने श्यन् इत्यादेशस्य विधानं क्रियते।

आक्षेपकर्तारं प्रति भाष्यकारस्य प्रश्नः– एवं हि भाष्यकारः सर्वेषां प्रश्नानामुत्तरं श्रुत्वा यथाप्राप्तमपि कार्यं भवति, विशेषवचनेन प्राप्तमपि इति पक्षस्य स्वीकारे पुनः नवीनं प्रश्नम् उत्थापयति यत् 'अज्ञाते' इत्यादिसूत्रैः अज्ञाताद्यर्थे स्वार्थे क प्रत्ययोऽपि विधीयते, 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इति अकच्प्रत्ययोऽपि। एवं हि अव्ययसंज्ञकेभ्यः, सर्वनामसंज्ञकेभ्यश्च विशेषरूपेण विहितः अकच् प्रत्ययः श्रूयेत, यथाप्राप्तश्च कप्रत्ययोऽपि?

अवश्यप्राप्ते कप्रत्यये अकचो विधानं दृश्यते। अतः 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' इति परिभाषया अकच्प्रत्ययः अपवादो भूत्वा कप्रत्ययस्य बाधको भविष्यति।

आक्षेपकर्तुः प्रदत्तमुत्तरं श्रुत्वा भाष्यकारः निपातनविषये सिद्धान्तं कथयति – निपातनमपि अपवादस्वरूपमिव भवति, यतो हि अवश्यप्राप्ते णत्वे निपातनमारभ्यते। अतः अत्रापि 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' इति परिभाषया अपवादत्वाद् इदं निपातनं णत्वस्य बाधकं भविष्यति।

निपातनस्यापि बाधकत्वस्वीकारे दोषप्रदर्शनम्– यदि निपातनस्यापि बाध कत्वं स्वीक्रियते तर्हि समस्तते दोषो भवति। अयमाशयः–अन्ये वैयाकरणाः सततम्, सन्ततम् इति रूपद्वयसिद्ध्यर्थं 'समो मकारस्य लोपो वा भवति हितशब्दे, ततशब्दे च परे' इत्यर्थकं 'समो वा हित-ततयोः' इति वचनं पठन्ति। तेन संततम्, सततम्, संहितम्, सहितम् इत्येवं मकारसहितम्, मकाररहितं च रूपं दृश्यते।

पाणिनीयव्याकरणे तादृशसूत्रस्याभावेन 'अपरस्पराः क्रियासातत्ये' इति सूत्रे 'सातत्ये' इति प्रयोगं दृष्ट्वा कल्पयिष्यते यत् निपातनेन ततशब्दे परे समो मकारस्य लोपो

भवतीति। एवं हि निपातनेन मकाररहितस्यैव सततशब्दस्य पाणिनीयव्याकरणानुसारेण साधुत्वं स्यान्न संततमिति मकारसहितस्यापि।

दोषस्य निराकरणम्– 'समो वा हिततयोः' इति तु एकस्य श्लोकस्यांशो विद्यते। सम्पूर्णश्लोकश्चैवं वर्तते–

**लुम्पेदवश्यमः कृत्ये तुंकाम-मनसोरपि।**
**समो वा हित-ततयोर्मांसस्य पचियुड्-घञोः॥**

अस्य श्लोकस्यायमर्थः– अवश्यम् इति पदस्थितमकारस्य कृत्यसंज्ञके प्रत्यये परे लोपो भवति। एवमेव तुम् (तुमुन्) घटकमकारस्य कामशब्दे परे, मनस्शब्दे च परे लोपो भवति। समो मकारस्य च हितशब्दे, ततशब्दे च परे विकल्पेन लोपो भवति। मांसघटकाकारस्य च युट्प्रत्ययान्ते, घञ्प्रत्ययान्ते च पच्धातौ परे लोपो भवति।

क्रमेण उदाहरणम्– अवश्यगन्तव्यः। गन्तुकामः, गन्तुमनाः। सहितम्, संहितम्। सततम्, संततम्। मांस्पचनम्, मांस्पाकः इति।

पाणिनीयव्याकरणेऽयं श्लोको न विद्यते। अतः अवश्यगन्तव्यः इत्यादिप्रयोगाणां सिद्धये श्लोकस्य अंशान्तराणामिव 'समो वा हिततयोः' इत्यंशस्यापि पाणिनीयव्याकरणे निवेशस्य आवश्यकता विद्यते। अतः व्याकरणान्तरस्य वचनं पाणिनीयव्याकरणे स्वीक्रियते तर्हि निपातनस्य बाधकत्वस्वीकारे यः दोषः प्रदर्शितः, तस्य निराकरणं स्वतः भविष्यति।

निपातनस्य बाधकत्वस्वीकारे कस्यचिद्दोषस्याभावेन भाष्यकारेण सिद्धान्तः स्थापितो यत् 'बाधकान्येव निपातनानि भवन्ति' इति।

**मूलग्रन्थपाठो व्याख्या च**

**किमेतन्निपातनं नाम?॥ अथ कः प्रतिषेधो नाम?॥**

**अविशेषेण किंचिदुक्त्वा विशेषेण 'न' इत्युच्यते, तत्र व्यक्तमाचार्यस्याभिप्रायो गम्यते- 'इदं न भवति' इति॥**

**व्याख्या–** सर्वनामशब्दे निपातनाण्णत्वाभावः उक्तः। निपातनेन सर्वनामशब्दस्य साधुत्वं तु सेत्स्यति, निपातनस्य प्रतिषेधे तात्पर्याभावात् एकदा 'पूर्वपदात् संज्ञायामगः' इति सूत्रेण णत्वमपि भविष्यति। एवं हि निपातेन णत्वरहितस्य, सूत्रेण च कृतणत्वस्य सिद्धत्वात् सर्वनामशब्दस्य विकल्पेन प्रयोगः प्राप्नोति। अतः अत्र पृच्छयते-किमेतन्निपातनं नाम? इति।

प्रतिषेधेन यद् भवति, तदेव निपातनेनापि इति मत्वा प्रश्नकर्तारं प्रति भाष्यकारः पृच्छति-अथ कः प्रतिषेधो नाम? इति।

अविशेषेण = सामान्यरूपेण, किंचिदुक्त्वा विशेषणरूपेण 'न' इति कथ्यते, तत्र आचार्यस्य = पाणिनेः, व्यक्तम् = स्पष्टम्, अभिप्रायो गम्यते = बुध्यते यत् 'इदं न भवति' इति। निपातनस्थले तु प्रतिषेधवाचकस्य कस्यापि प्रयोगाभावात् 'इदं न भवति' इति कथं कथयितुं शक्यते? इति प्रश्नकर्तुराशयः।

**मूलग्रन्थपाठः**

**निपातनमप्येवंजातीयकमेव। अविशेषेण णत्वमुक्त्वा विशेषेण निपातनं क्रियते, तत्र व्यक्तमाचार्यस्याभिप्रायो गम्यते– 'इदं न भवति' इति॥**

**व्याख्या–** प्रतिषेधेन सह निपातनस्य साम्यं दर्शयति-निपातनमपि = अन्यादृश-प्रयोगकरणम् अपि, एवंजातीयकमेव = प्रतिषेधप्रकारकमेव भवतीति शेषः। सामान्यरूपेण

णत्वमुक्तं पाणिनिना, अत्र विशेषरूपेण णत्वरहितस्य सर्वनामशब्दस्य प्रयोगः क्रियते। तेन अत्रापि आचार्यस्य स्पष्टम् अभिप्रायो गम्यते– 'इदं न भवति' इति।

**मूलग्रन्थपाठः**

**ननु च– निपातनाच्चाणत्वं स्यात्, यथाप्राप्तं च णत्वम्॥ किमन्येऽप्येवं विधयो भवन्ति? भवन्ति॥ इह– 'इको यणचि' इति वचनाद् यण् स्यात्। यथाप्राप्तश्चेक् श्रूयेत॥ नैष दोषः। अस्त्यत्र विशेषः। षष्ठ्यात्र निर्देशः क्रियते। षष्ठी च पुनः स्थानिनं निवर्तयति॥**

**व्याख्या–** प्रतिषेधस्थले तु नञः प्रयोगेण प्रतिषेधो भविष्यति। निपातनस्थले तु नञः प्रयोगाभावेन सर्वनामशब्दे निपातनाद् णत्वाभावः स्यात्, यथाप्राप्तं तु णत्वं स्यात्। एवं हि वैकल्पिकप्रयोगे एव पाणिनेः तात्पर्यं प्राप्नोति, न तु प्रतिषेधे।

अत्र भाष्यकारः प्रश्नकर्तारं पृच्छति यत् पाणिनीयव्याकरणे अन्यत्रापि एवं भवति किम्? यत्र विशेषरूपेण विहितमपि कार्यं भवति, सामान्यतः यथाप्राप्तमपि?

भवन्ति इति। पाणिनीयव्याकरणे अन्यत्रापि एवं भवति, यत्र विशेषरूपेण कथितमपि कार्यं भवति, सामान्यतः यथाप्राप्तमपि। तद्यथा 'रामाय' इत्यत्र यादेशे स्थानिवत्सूत्रेण अतिदेशेन सुप्त्वमपि आयाति, पूर्वतः स्थितं तत्र यञादित्वमपि अवतिष्ठते। तेन 'सुपि च' इत्यनेन दीर्घः सिद्ध्यति।

विशेषरूपेण कथितमपि कार्यं भवति, सामान्यतः यथाप्राप्तमपि इति स्वीकारे दोषं दर्शयति। इहेति। अयमाशयः– 'इको यणचि' इत्यत्र स दोषः न भविष्यति? अस्ति अत्र विशेषः = वैशिष्ट्यम्। षष्ठ्येति– 'इको यणचि' इति सूत्रेण इकः इत्यस्य स्थाने यणः साधुत्वं प्रतिपाद्यते, न तु इकः निवृत्तिः क्रियते, अतः सुध्युपास्यः इत्यादौ 'इको यणचि' इति सूत्रेण यणचि स्यात्, यथाप्राप्तश्चेगपि श्रूयेत। एवं ह्यत्रापि वैकल्पिकप्रयोगस्यापत्तिः स्यात्।

उपरिप्रदर्शितदोषं निराकरोति– नैष दोष इति। 'इको यणचि' इत्यत्र स दोषः न भविष्यति। अस्ति अत्र विशेषः = वैशिष्ट्यम्। षष्ठ्येति– ''इको यणचि'' इति सूत्रे 'इकः' इति पदस्य निर्देशः षष्ठ्या = षष्ठीविभक्त्या कृतो विद्यते। अतः 'इको यणचि' इति सूत्रं 'षष्ठी स्थानेयोगा' इति परिभाषासूत्रसहकारेण स्थानिनम् इकं निवर्तयति। अतः सुध्युपास्यः इत्यादौ यथाप्राप्तस्य इकः श्रवणं न भवति।

**मूलग्रन्थपाठः**

**इह तर्हि 'कर्तरि शप्' दिवादिभ्यः श्यन्' इति वचनाच्च श्यन् स्यात् यथाप्राप्तश्च शप् श्रूयेत॥ नैष दोषः। शबादेशाः श्यन्नादयः करिष्यन्ते॥**

**तत् तर्हि शपो ग्रहणं कर्तव्यम्? न कर्तव्यम्। प्रकृतमनुवर्तते॥ क्व प्रकृतम्? कर्तरि शप् इति। तद्वै प्रथमानिर्दिष्टम्। षष्ठीनिर्दिष्टेन चेहार्थः॥**

**दिवादिभ्यः इत्येषा पञ्चमी शबिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति 'तस्मादित्युत्तरस्य' इति॥**

**व्याख्या–** विशेषरूपेण कथितमपि कार्यं भवति, सामान्यतः यथाप्राप्तमपि इति स्वीकारे प्रदर्शितदोषस्य निराकरणं समीक्ष्यापरं दोषं दर्शयति–इह तर्हि 'कर्तरि शप्' इति। 'दिवादिभ्यः श्यन्' इति सूत्रेण दीव्यति इत्यत्र श्यन् स्यात्, यथाप्राप्तश्च 'कर्तरि शप्' इत्यनेन शप् अपि स्यात् इत्याक्षेपे उत्तरति–

नैष दोष इति– 'दिवादिभ्यः श्यन्' इति सूत्रेण शपः स्थाने श्यन् इत्यादेशो भवति इति स्वीकारेण उपरिप्रदिर्शतदोषो न भविष्यतीत्यर्थः।

'दिवादिभ्यः श्यन्' इति शपः स्थाने श्यन् इत्यादेशं करोति इति स्वीकारे 'दिवादिभ्यः श्यन्' इति सूत्रे 'शपः' इति पदस्य ग्रहणं कर्तव्यं स्यादिति प्रश्ने 'दिवादिभ्यः श्यन्' इति सूत्रे 'शपः' इति पदस्य ग्रहणस्य अकर्तव्यतां दर्शयति– न कर्तव्यमिति। 'कर्तरि शप्' इत्यतः अनुवर्तयिष्यते इत्यर्थः।

तत् = शप् इति पदम् (कर्तरि शप् इति सूत्रे) वै = स्पष्टम्। प्रथमानिर्दिष्टम् = प्रथमान्तम्। षष्ठीनिर्दिष्टेनेति– 'दिवादिभ्यः श्यन्' इति सूत्रे च 'शपः' इति षष्ठ्यन्तेन पदेन अर्थः = प्रयोजनं सेत्स्यति?

अत्रोच्यते– दिवादिभ्यः इति पदे पञ्चमी विभक्तिः वर्तते, सा पञ्चमी विभक्तिः अनुवृत्ते 'शप्' इति पदे वर्तमानां प्रथमां विभक्तिं 'तस्मादित्युत्तरस्य' इति परिभाषासूत्रसहकारेण षष्ठीं प्रकल्पयिष्यति = परिवर्तयिष्यति इत्यर्थः।

**मूलग्रन्थपाठः**

**प्रत्ययविधिरयम्। न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति॥**

**नायं प्रत्ययविधिः। विहितः प्रत्ययः। प्रकृतश्चानुवर्तते॥**

**व्याख्या–** प्रत्ययविधिरिति– 'दिवादिभ्यः श्यन्' इति सूत्रं प्रत्ययविधायकम्। प्रत्ययविधायके सूत्रे स्थितस्य पदस्य पञ्चम्यः परिवर्तिका न भवन्ति इत्यर्थः।

नायं प्रत्ययविधिरिति- 'दिवादिभ्यः श्यन्' इति सूत्रं नास्ति प्रत्ययविधायकम्, यतो हि प्रत्ययस्य विधानं 'कर्तरि शप्' इति सूत्रेण कृतमेव, तस्य शपश्च अत्र अनुवृत्तिर्भवति, अनुवृत्तस्य शपः स्थाने अनेन श्यन् इत्यादेशो विधीयते, 'दिवादिभ्यः श्यन्' इति सूत्रेण इत्याशयः।

**मूलग्रन्थपाठः**

**इह तर्हि ' 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इति वचनाच्चाकच् स्याद्, यथाप्राप्तश्च कः श्रूयेत। नैष दोषः, नाप्राप्ते हि केऽकजारभ्यते, स बाधको भविष्यति॥ निपातनमप्येवंजातीयकमेव। नाप्राप्ते णत्वे निपातनमारभ्यते, तद्बाधकं भविष्यति॥**

**व्याख्या–** एवं हि भाष्यकारः सर्वेषां प्रश्नानामुत्तरं श्रुत्वा 'यथाप्राप्तमपि कार्यं भवति, विशेषवचनेन प्राप्तमपि' इति पक्षस्य स्वीकारे पुनः नवीनं प्रश्नम् उत्थापितवान् यत् 'अज्ञाते' इत्यादिसूत्रैः अज्ञाताद्यर्थे स्वार्थे कप्रत्ययोऽपि विधीयते, 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इति सूत्रेण अकच्प्रत्ययोऽपि। एवं हि अव्ययसंज्ञकेभ्यः, सर्वनामसंज्ञकेभ्यश्च विशेषरूपेण विहितः अकच्प्रत्ययः श्रूयेत, यथाप्राप्तश्च कप्रत्ययोऽपि?

अत्रोच्यते-नैष दोष इति। उपरि यो दोषः प्रदर्शितः, सः अकज्विषये न भविष्यति, यतो हि अवश्यप्राप्ते कप्रत्यये अकचो विधानं दृश्यते। अतः 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' इति परिभाषया अकच्प्रत्ययः अपवादो भूत्वा कप्रत्ययस्य बाधको भविष्यति।

आक्षेपकर्तुः प्रदत्तमुत्तरं श्रुत्वा भाष्यकारः निपातनविषये सिद्धान्तं कथयति-निपातनमपीति। अयमाशयः-निपातनमपि अपवादस्वरूपमिव भवति, यतो हि अवश्यप्राप्ते णत्वे निपातनमारभ्यते।

अतः अत्रापि 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' इति परिभाषया अपवादत्वाद् इदं निपातनं णत्वस्य बाधकं भविष्यति।

**मूलग्रन्थपाठः**

**यदि तर्हि निपातनान्यप्येवंजातीयकानि भवन्ति, समस्तते दोषो भवति।**

**इहान्ये वैयाकरणाः समस्तते विभाषा लोपमारभन्ते- 'समो हिततततयोर्वा' इति। सततम्- संततम्, सहितम्-संहितमिति॥**

**इह पुनर्भवान्निपातनाच्च लोपमिच्छति– 'अपरस्पराः क्रियासातत्ये' इति। यथाप्राप्तं चालोपम्-संततमिति। एतन्न सिध्यति॥**

**कर्तव्योऽत्र यत्नः। बाधकान्येव हि निपातनानि भवन्ति॥**

**व्याख्या–** निपातनस्यापि बाधकत्वस्वीकारे दोषं प्रदर्शयति– यदि तर्हीति। अयमाशयः- अन्ये वैयाकरणाः सततम्, सन्ततम् इति रूपद्वयसिद्ध्यर्थं 'समो मकारस्य लोपो वा भवति हितशब्दे ततशब्दे च परे' इत्यर्थकं 'समो वा हित–ततयोः' इति वचनं पठन्ति। तेन संततम्, सततम्, संहितम्, सहितम् इत्येवं मकारसहितम्, मकाररहितं च रूपं दृश्यते।

पाणिनीयव्याकरणे तादृशसूत्रस्याभावेन 'अपरस्पराः क्रियासातत्ये' इति सूत्रे 'सातत्ये' इति प्रयोगं दृष्ट्वा कल्पयिष्यते यत् निपातनेन ततशब्दे परे समो मकारस्य लोपो भवतीति। एवं हि निपातनेन मकाररहितस्यैव सततशब्दस्य पाणिनीयव्याकरणानुसारेण साधुत्वं स्यान्न तु संततमिति मकारसहितस्यापि॥

पाणिनीयव्याकरणेऽयं श्लोको न विद्यते। अतः अवश्यगन्तव्य इत्यादिप्रयोगाणां सिद्धये श्लोकस्य अंशान्तराणामिव 'समो वा हिततततयोः' इत्यंशस्यापि पाणिनीयव्याकरणे निवेशस्याऽऽवश्यकता विद्यते। अतः व्याकरणान्तरस्य वचनं पाणिनीयव्याकरणे यदि स्वीक्रियते तर्हि निपातनस्य बाधकत्वस्वीकारे यः दोषः प्रदर्शितः, तस्य निराकरणं स्वतः भविष्यति।

एवं हि व्याकरणान्तरे स्थितस्य 'लुम्पेदवश्यमः कृत्ये' इत्यादिवचनस्य पाणिनीयव्याकरणे निवेशरूपं यत्नं विधाय निपातनस्य बाधकत्वस्वीकारे आपतितस्य दोषस्य निराकरणं जायते। अतः भाष्यकारेण सिद्धान्तः स्थापितः-यत् 'बाधकान्येव निपातनानि भवन्ति' इति।

**बोधप्रश्नः**

४. निपातनप्रतिषेधयोः को भेदः?

५. 'समो वा हित–ततयोः' इति श्लोकांशः सप्रसङ्गं व्याख्यायताम्।

### ८.३.४ संज्ञोपसर्जनीभूतानां सर्वादीनां सर्वनामत्वाभावविचारः

'सर्वादीनि सर्वनामानि' इति सूत्रेण सर्वादिगणपठितानां शब्दानां सर्वनामसंज्ञा विधीयते। सा सर्वनामसंज्ञा सर्वाद्यर्थवाचकानामिव संज्ञावाचकानामपि सर्वादिशब्दानां प्राप्नोति। एवं हि सर्वो नाम कश्चित्तस्मै देहि सर्वाय देहि इत्यत्रापि 'सर्वनाम्नः स्मै' इति सूत्रेण ङेः स्मै इत्यादेशः प्राप्नोति।

एवमेव सर्वमतिक्रान्त इति अतिसर्वः, तस्मै अतिसर्वाय देहि इत्यत्रापि सर्वशब्दान्तस्य अतिसर्वशब्दस्य सर्वनामसंज्ञा प्राप्नोति। सर्वनामसंज्ञायां सत्यां तु अत्रापि ङेः स्मै

इत्यादेशः प्राप्नोति। न च सर्वादिगणे अतिसर्वशब्दस्य पाठाभावेन सर्वनामसंज्ञा न भविष्यतीति वाच्यम्, 'द्वन्द्वे च' इति निषेधेन तदन्तस्यापि सर्वनामसंज्ञेति ज्ञापनात्। तेन परमसर्वत्र इत्यत्र त्रल्, परमभवकान् इत्यत्राकच् च सिद्ध्यति।

एवं हि संज्ञोपसर्जनीभूतानां सर्वादीनां प्राप्तायाः सर्वनामसंज्ञायाः वारणाय 'सर्वादीनि सर्वनामानि' इति सूत्रे 'संज्ञोपसर्जनप्रतिषेधः' इत्येवं वार्तिकं करणीयम् इति पूर्वपक्षिणा आक्षेपः कृतः

आक्षेपकर्तारं प्रति भाष्यकारस्य जिज्ञासा 'संज्ञोपसर्जनप्रतिषेधः' इति वार्तिकेन स्पष्टं न भवति यत् तेन वार्तिकेन संज्ञोपसर्जनीभूतानां सर्वादीनां किं प्रतिषिध्यते, सर्वादित्वं, सर्वनामसंज्ञा वा?

आक्षेपकर्तुः उत्तरम् संज्ञोपसर्जनीभूतानां सर्वादीनां सर्वादित्वमेव प्रतिषेध नीयम्। संज्ञोपसर्जनीभूतानां सर्वादीनां सर्वादित्वस्य प्रतिषेधे तेषां सर्वनामसंज्ञा स्वतो न भविष्यति।

आक्षेपकर्तारं प्रति भाष्यकारस्य जिज्ञासा किं सर्वादिगणपठितेषु सर्वादिषु, डतरादिषु, त्यदादिषु च यत् सामान्यरूपेण सर्वादित्वं तिष्ठति, तस्यैव प्रतिषेधो भविष्यति, किं वा सर्वाद्यन्तर्गणपठितेषु डतरादिषु विशेषरूपेण यत् डतरादित्वम्, त्यदादिषु च विशेषरूपेण यत् त्यदादित्वम् तिष्ठति, तस्यापि प्रतिषेधो भविष्यति?

आक्षेपकर्तुः उत्तरम् सामान्यरूपेण स्थितस्य सर्वादित्वस्य प्रतिषेधो भवत्येव, सहैव विशेषरूपेण स्थितस्य डतरादित्वस्य, त्यदादित्वस्यापि प्रतिषेधो भविष्यति 'संज्ञोपसर्जनप्रतिषेधः' इति वार्तिकेन।

विशेषरूपेण स्थितस्य डतरादित्वस्यापि प्रतिषेधस्य फलमस्ति– अतिक्रान्तमिदं ब्राह्मणकुलं कतरद् इति अतिकतरम् ब्राह्मणकुलमित्यत्र 'अद्ड् डतरादिभ्यः पञ्चभ्यः' इति सूत्रेण स्वमोः अद्ड् इत्यादेशस्याभावः। त्यदादित्वस्यापि प्रतिषेधस्य फलमस्ति–अतिक्रान्तोऽयं ब्राह्मणस्तम् इति अतितद् ब्राह्मणः इत्यत्र 'त्यदादीनामः' इति सूत्रेण अकारादेशस्याभावः।

'संज्ञोपसर्जनप्रतिषेधः' इति वार्तिकस्य प्रत्याख्यानम्– भाष्यकारेण 'संज्ञोपसर्जन-प्रतिषेधः' इति वार्तिकस्याऽऽवश्यकतां प्रदर्शयतः आक्षेपकर्तुः सर्वं तर्कं श्रुत्वा अग्रे प्रतिपादितं यत् अस्य वार्तिकस्य नास्त्यावश्यकता। तत्र प्रथमं संज्ञाप्रतिषेधस्याऽनावश्यकता प्रतिपादिता, पश्चात् उपसर्जनप्रतिषेधस्यापि।

संज्ञाप्रतिषेधस्याऽनावश्यकताप्रदर्शनम्– सर्वादिगणे अग्रे यत् 'पूर्वपरावर-दक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्' इति गणसूत्रं विद्यते, तत्र 'असंज्ञायाम्' इत्यंशस्य योगविभागं कृत्वा गणपाठस्यैवं व्याख्या करिष्यते– सर्व, विश्व इत्यादिक्रमेण यानि पञ्चत्रिंशत् शब्दस्वरूपाणि सर्वादिगणे पठितानि तानि असंज्ञाविषयकाणि बोध्यानि। एवं हि सर्वादित्वं, डतरादित्वं, त्यदादित्वं च असंज्ञायां प्रयुक्तानामेव सर्वादीनां, डतरादीनां, त्यदादीनां च भविष्यति। एवंप्रकारेण तेषां सर्वनामसंज्ञा, तत्तद्गणप्रयुक्तं कार्यं च स्वतः संज्ञावाचकानां न भविष्यति। अतः संज्ञाप्रतिषेधाय अतिरिक्तं वार्तिकं न करणीयं भवति।

उपसर्जनप्रतिषेधस्याऽनावश्यकताप्रदर्शनम्– अनुपसर्जनानां प्रतिषेधायापि अतिरिक्तं वार्तिकं न करणीयम्। चतुर्थाध्याये स्त्रीप्रत्ययप्रकरणे 'अनुपसर्जनात्' (**४.१.१४**) इत्यधिकारसूत्रं पठितं विद्यते। तत्र प्रदर्शितप्रयोजनानाम् अन्यथासिद्धिं प्रदर्श्य भाष्ये प्रत्याख्यानं कृतम्। स्त्रीप्रत्ययप्रकरणे अनुपयुज्यमानं तत्सूत्रं परिभाषासूत्रं स्वीकृत्य तस्यैवं विग्रहः करिष्यते– 'अनुपसर्जन अ अत्' इति। तत्र 'अनुपसर्जन' इति पदे 'सुपां सुलुक्' इत्यादिना षष्ठ्या लुग्

ज्ञेयः। तस्य सूत्रस्य चैवं व्याख्या करिष्यते– 'अनुपसर्जन अ अत्' इति। अष्टाध्यायां यत्र कुत्रापि 'अ' (त्यदादीनामः इत्यनेन अः) इत्यस्य, अत् (अद्ड्) इत्यस्य विधानं दृश्यते तत् अनुपसर्जनस्य ज्ञेयम् इति। एवं हि अतिक्रान्तमिदं ब्राह्मणकुलं कतरद् इति अतिकतरं ब्राह्मणकुलमित्यत्र अद्ड् डतरादिभ्यः पञ्चभ्यः' इति सूत्रेण स्वमोः अद्ड् इत्यादेशस्याभावः, अतिक्रान्तोऽयं ब्राह्मणस्तम् इति अतितद् ब्राह्मणः इत्यत्र 'त्यदादीनामः' इति सूत्रेण अकारादेशस्याभावश्च सूत्रेणैव सिद्धो भविष्यति, अतः उपसर्जनप्रतिषेधायापि वार्तिकं न करणीयम्।

आक्षेपः– अनुपसर्जनस्यैव सर्वादेः अत् इत्यस्य विधाने सति युष्मान् अतिक्रान्तेभ्यः इति अतियुष्मत् इत्यत्र अतियुष्मद् भ्यस् इत्यवस्थायाम्, अस्मान् अतिक्रान्तेभ्यः इति अत्यस्मत् इत्यत्र अत्यस्मद् भ्यस् इत्यवस्थायाम्, च 'पञ्चम्या अत्' इति सूत्रेण यः भ्यसः अत् इत्यादेशो भवति, स न भविष्यति?

समाधानम्– 'अनुपसर्जनात्' इति सूत्रे अपरस्यापि अकारस्य प्रश्लेषं मत्वा सूत्रस्य विगृहीतं स्वरूपं भविष्यति अनुपसर्जन अ अ अत्। तत्र अनुपसर्जन इति पदे 'सुपां सुलुक्.' इति सूत्रेण षष्ठ्या, 'अ' इति पदे च 'सुपां सुलुक्'. इति सूत्रेणैव पञ्चम्याश्च लुकं मत्वा सूत्रस्यार्थः एवं करिष्यते– अकारात् परौ विधीयमानौ अकारात्कारौ अनुपसर्जनस्य द्रष्टव्यौ इति। एवं हि अतियुष्मत् इत्यत्र अकारात् परत्वाभावेन उपसर्जनयोरपि युष्मदस्मदोः भ्यसः अत् भविष्यत्येव।

समाधानान्तरम्– 'अनुपसर्जनात्' इत्यस्य अनुपसर्जन अ अत् इति, अनुपसर्जन अ अत् इति वा व्याख्याने कृतेऽपि 'अतिसर्वाय' इत्यत्र प्रदिर्शितो दोषोऽपरिहृत एवास्ति। अतः समाधानान्तरं प्रदर्शितमत्र एकदेशिना। तच्च समाधानमेवम्– 'अङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद् भवति' इत्येवं परिभाषा करिष्यते। अस्याः परिभाषायाश्च अयमर्थः– अङ्गाधिकारे यत्कार्यं विहितं तद् सूत्रे गृह्यमाणाद् विहिता या विभक्तिः, तस्यास्तत्कार्यं भवति। अतिकतरं ब्राह्मणकुलम् इत्यत्र अतिकतर सु इत्यवस्थायां दृश्यमाना या सुविभक्तिः, सा अतिकतरशब्दात् विहिताऽस्ति, न तु डतरान्तकतरशब्दात्। अतः अत्र अद्ड् इत्यादेशो न भवति। एवमेव अतितद् ब्राह्मण इत्यत्रापि 'अ' इत्यादेशो न भविष्यति, तच्छब्दात् विभक्तेरविहितत्वात्।

आक्षेपः– 'अङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद्भवति' इति स्वीकारे परमपञ्च इत्यत्र अङ्गाधिकारे पठितेन 'षड्भ्यो लुक्' (७.१.२२) इति सूत्रेण जश्शसोर्लुग् न प्राप्नोति, सूत्रे गृह्यमाणं यत् 'षड्भ्यः' इति पदं, ततः जश्शसोरविहितत्वात्।

समाधानम्– नैष दोषः। अङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद् भवति इत्यस्याः परिभाषायाः अयमर्थः स्वीकरिष्यते– 'अङ्गाधिकारे यत्कार्यं विहितं तत् सूत्रे गृह्यमाणानां स्वार्थद्वारेण सम्बन्धिनी या विभक्तिस्तदर्थगतसंख्याकर्मादिवाचिनी, तस्यास्तत्कार्यं भवति। परमपञ्चेत्यादौ षट्प्रधानः समासः। अतः षडर्थगतसंख्याकर्मवाचिनी एव जस् इति, शस् इति च विभक्तिः। अतः 'षड्भ्यो लुक्' इत्यनेन तयोर्लुग् भविष्यत्येव।

आक्षेपः– ''अङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद्भवति'' इति परिभाषा स्वीकारे प्रियं सक्थि यस्य सः प्रियसक्थिः ब्राह्मणः इत्यत्र अङ्गाधिकारपठितेन 'अस्थिदधि सक्थ्यक्ष्णामनङुदात्तः' (७.१.७५) इति सूत्रेण टादावजादौ विभक्तौ विधीयमानो योऽनङ्, स न भविष्यति, सूत्रे गृह्यमाणात् सक्थिशब्दात् टाविभक्तेः विहितत्वाभावात्।

समाधानम्– 'अङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद् भवति' इत्यत्र 'सप्तमीनिर्दिष्टे यदुच्यते, प्रकृतविभक्तौ तद् भवति' इति कथनेन प्रियसक्थ्ना ब्राह्मणेन इत्यत्र

अनङ्भावरूपदोषो न भविष्यति। 'सप्तमीनिर्दिष्टे' इति परिभाषायां प्रकृतशब्देन अङ्गस्य ग्रहणात् तस्याः परिभाषायाः अर्थो भविष्यति– सप्तमीनिर्दिष्टं कार्यम् अङ्गाद् विहितायां विभक्तौ परतः भवति, न तु गृह्यमाणाद् विहितायां विभक्तौ परतः।

आक्षेपः– 'सप्तमीनिर्दिष्टे यदुच्यते प्रकृतविभक्तौ तद् भवति' इति परिभाषास्वीकारे अतितद् अतितदौ, अतितदः इत्यत्रापि 'त्यदादीनामः' इति सूत्रेण अत्वं प्राप्नोति, 'त्यदादीनामः' इति सूत्रे 'अष्टन आ विभक्तौ (७.२.८४) इति सूत्रात् 'विभक्तौ' इत्यस्याप्यनुवृत्या तेन विहितं कार्यमत्वं विभक्तौ परतो भवति, इति अत्वस्य सप्तमीनिर्दिष्टत्वात्।

समाधानान्तरम्– एवं च अतितद्, अतितदौ, अतितदः इत्यत्र अत्वप्रतिषेध ाय 'अङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद् भवति' इति वचनम्, अतिसक्थ्ना इत्यत्र अनङ्सिद्धये 'सप्तमीनिर्दिष्टं यदुच्यते, प्रकृतविभक्तौ तद् भवति' इति च वचनं कर्तव्यं स्यात्। एवं हि वचनद्वयकरणे गौरवमनुभूय एकदेशिना एव समाधानान्तरमुक्तम्। तच्चैवम्– इह तावत् 'अद्ड् डतरादिभ्यः पञ्चभ्यः' इति सूत्रम् 'अङ्गस्य' इत्यधिकारे पठितम्। अतः सूत्रेऽस्मिन् अनुवृत्त्या 'अङ्गस्य' इति षष्ठ्यन्तं वर्तते, 'डतरादिभ्यः' इति च पञ्चम्यन्तं पदम्। अतः उपायान्तराभावेन 'अङ्गस्य' इति षष्ठ्यन्तं पदं 'डतरादिभ्यः' इति पञ्चम्यन्तस्य विशेषणं भविष्यति। 'डतरादिभ्यः' इति पञ्चम्यन्तं पदं ततो विहितस्य प्रत्ययस्य विशेषणं भविष्यति। एवं हि 'अद्ड् डतरादिभ्यः पञ्चभ्यः' इति सूत्रस्यार्थो भविष्यति-अङ्गसम्बन्धिनो ये डतरादयः ततो विहतौ यौ स्वमौ, तयोः अद्ड् इत्यादेशो भवति इति। अतिकतरं ब्राह्मणकुलम् इत्यत्र डतरादिभ्यः स्वमोर्विहितत्वाभावात् अद्डादेशो न भविष्यति।

'अङ्गस्य' इत्यधिकारे पठिते 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इति सूत्रे 'अस्थिदधिसक्थ्यक्ष्णाम्' इत्यपि षष्ठ्यन्तं पदम्, अनुवृत्तम् 'अङ्गस्य' इत्यपि षष्ठ्यन्तं पदम्। तत्र स्वेच्छया विभक्तेः विशेषणं गृह्यमाणमपि कर्तुं शक्यते, अङ्गमपि। तत्र प्रयोगानुसारेण 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इति सूत्रे अङ्गस्य इति 'विभक्तौ' इत्यस्य विशेषणमिति स्वीकृत्य सूत्रस्यार्थः एवं करिष्यते– अङ्गस्य या विभक्तिः तस्यां परतः अस्थ्यादीनामनङ् भवति इति। 'त्यदादीनामः' इति सूत्रे गृह्यमाणं यत्पदं त्यदादि तद् विभक्तौ इत्यस्य विशेषणं स्वीकृत्य सूत्रस्यार्थः एवं करिष्यते– त्यदादीनां या विभक्तिः, तस्यां परतः अङ्गस्य अकारादेशो भवति इति। एवं हि प्रियसक्थ्ना ब्राह्मणेन इत्यत्र अङ्गसम्बन्धिविभक्तौ परतः सक्थिशब्दस्य अनङ् भविष्यति, अतितद्, अतितदौ इत्यादौ च त्यदादिसम्बन्धिविभक्तेरभावात् तस्यां परतः अङ्गस्य अकारादेशो न भविष्यति।

आक्षेपः– उक्तरीत्या 'त्यदादीनामः' त्यदादीनां या विभक्तिः, तस्यां परतः अङ्गस्य अकारादेशो भवति इत्यर्थस्वीकारे शोभनः सः इत्यर्थे अतिशब्देन तच्छब्दस्य समासे कृते सौ विभक्तौ इष्टस्य 'अतिसः' इति प्रयोगस्य सिद्धिर्न भविष्यति, सुविभक्तेः अतितद् इति शब्दात् विहितत्वेन तस्याः त्यदादिसम्बन्धित्वाभावात्?

समाधानम्– एष त्यदादिप्रधानः समासः इति विभक्तेः त्यदाद्यर्थनिष्ठसंख्याभिध ायकत्वेन अतिसः इत्यत्र सुः त्यदादिसम्बन्धिविभक्तिः इति कथयितुं शक्यते। अतः अत्र अत्वं भविष्यत्येव।

संज्ञोपसर्जनानां सर्वनामत्वाभावाय भाष्यकारस्य सिद्धान्तः–संज्ञोपसर्जनानां सर्वनामत्वाभावाय भाष्यकारेण उपायद्वयं प्रदर्श्य 'संज्ञोपसर्जनप्रतिषेध' इति वार्तिकं प्रत्याख्यातम्।

तत्र प्रथमः उपायः एवं प्रदर्शितः– 'सर्वादीनि सर्वनामानि' इति सूत्रेण सर्वनामसंज्ञा न विधीयते, अर्थात् इदं नास्ति सर्वनामसंज्ञाविधायकं सूत्रम् अपि तु सूत्रमिदं बोधयति यत् कीदृशानि सर्वादिशब्दस्वरूपाणि सर्वादीनि कथ्यन्ते। एतदर्थं सूत्रस्यैवं व्याख्या

करिष्यते– 'सर्वनामानि' इति पदं सर्वादिगणपठितानां सर्वविश्वेत्यादिशब्दस्वरूपाणां विशेषणम्। 'सर्वनामानि' इत्यस्य च चैवं विग्रहः-सर्वेषां नामानि इति। अतः सूत्रस्यार्थो भवति– सर्वविश्वेत्यादिशब्दस्वरूपाणि यदा सर्वेषां नामानि भवन्ति, अर्थात् यदा एषां प्रयोगः सर्वेषां कृते भवितुमर्हति तदैव एतानि सर्वादीनि कथ्यन्ते इति। संज्ञोपसर्जनीभूताः सर्वादयश्च विशेषेऽर्थे प्रयुज्यन्ते, अतः ते सर्वादयः न कथयिष्यन्ते।

आक्षेपः– एवं हि सर्वनामसंज्ञाया विधानाभावेन सर्वनामसंज्ञाप्रयुक्तानि यानि कार्याणि-सर्वनाम्नः स्मै, आमि सर्वनाम्नः सुट् इत्यादीनि, तानि कथं भविष्यन्ति?

समाधानम्– 'सर्वनाम्नः स्मै' इत्यादौ अन्वर्थसर्वनामशब्दस्य ग्रहणमिति मत्वा 'सर्वनाम्नः स्मै' इत्यस्यार्थो भविष्यति-सर्वेषां यन्नाम तत्सर्वनाम, सर्वनाम्नः शब्दात् परस्य ङेः स्मै भवति इति। एवमेव 'आमि सर्वनाम्नः सुट्' इत्यस्यार्थो भविष्यति-सर्वनाम्नः शब्दाद् विहितस्य आमः सुट् भवति इति।

एवं हि सर्वनामसंज्ञायाः विधानाभावेऽपि सर्वस्मै, सर्वेषाम् इत्यादिप्रयोगाणां सिद्धिर्भवितुमर्हति।

आक्षेपः– एवं हि सकलं, कृत्स्नं जगत् इत्यत्रापि 'सर्वनाम्नः स्मै' इत्यादिसूत्रैः स्मै इत्यादीनां प्रवृत्तिः स्यात्। सहैव सर्वादीनां शब्दानां येन येन अभेदसम्बन्धो भविष्यति, तस्य तस्य अपि सर्वनामकार्यं स्यात्। तद्यथा– 'सर्वस्मिन् ओदने' इत्यत्र ओदनशब्दस्यापि सर्वनामकार्यं प्राप्स्यति, अनयोः सामानाधिकरण्यात्?

समाधानम्– एवं हि सर्वनामसंज्ञाया विधानाभावे दोषं दृष्ट्वा अत्र भाष्यकारेण समाहितं यत्– 'सर्वादीनि सर्वनामानि' इति सूत्रेण सर्वनामसंज्ञाया अपि विधानं करिष्यते, सहैव इदं सूत्रमेतदपि बोधयिष्यति यत् कीदृशानि सर्वादिशब्दस्वरूपाणि सर्वादीनि कथ्यन्ते। तत्र 'सर्वादीनि' इति पदे सर्वादीनि च सर्वादीनि च इति विग्रहे, 'सर्वनामानि' इति पदे च सर्वनामानि च सर्वनामानि च इति विग्रहे एकशेषं कृत्वा 'सर्वादीनि सर्वनामानि' इत्यस्यार्थद्वयं करिष्यते– सर्वविश्वेत्यादिशब्दस्वरूपाणि यदा सर्वेषां नामानि भवन्ति, तदैव एतानि सर्वादीनि कथ्यन्ते इत्येकोऽर्थः, सर्वादीनि सर्वनामसंज्ञानि भवन्ति इति द्वितीयोऽर्थः।

एवं हि 'सर्वादीनि सर्वनामानि' इति सूत्रेणैव पाठश्चैव विशेषयिष्यते, सर्वनामसंज्ञा च करिष्यते। एवं हि 'संज्ञोपसर्जनप्रतिषेधः' इति वार्तिकस्याभावेऽपि कश्चिद्दोषो न भविष्यति। अतः 'संज्ञोपसर्जनप्रतिषेधः' इति वार्तिकं भाष्यकारेण प्रत्याख्यातम्।

वार्तिकस्य प्रत्याख्यानाय भाष्यकारस्य द्वितीयः उपायः-संज्ञा च तादृशी कर्तव्या यतो लघीयसी न भवितुमर्हति। यथा– टि, घु, घि इत्यादयः। यतो हि लघ्वर्थं संज्ञाकरणम् इति सर्वमान्यसिद्धान्तानुसारेण व्यवहारे लाघवाय संज्ञा क्रियते। 'सर्वनाम' इति चतुरक्षरा महती संज्ञा कृता पाणिनिना। महत्याः संज्ञायाः करणे अवश्यमेव पाणिनेः कश्चित् प्रयोजनविशेषो भवेत्। स प्रयोजनविशेषस्तु एवमस्ति– अन्वर्थेयं संज्ञा। अन्वर्थसंज्ञाशब्दस्याऽर्थो भवति अर्थमनतिक्रम्य वर्तमाना या संज्ञा सा। सर्वनामशब्दस्य व्युत्पत्त्या अर्थो भवति– सर्वेषां यन्नाम तत्सर्वनाम। अतः सर्वनामशब्दार्थानुकूलानि यानि सर्वादीनि शब्दस्वरूपाणि तेषामेव 'सर्वादीनि सर्वनामानि' इति सूत्रेण सर्वनामसंज्ञा भविष्यति। संज्ञाभूतानाम्, उपसर्जनीभूतानां च सर्वादिशब्दानां प्रयोगः व्यक्तिविशेषाणां कृते भवति, न तु सर्वेषां कृते। अतः संज्ञोपसर्जनीभूतानां सर्वनामसंज्ञा सूत्रेण न प्राप्स्यति। 'प्राप्तौ सत्यां निषेधः' इति प्रसिद्धवचनानुसारेण सूत्रस्य प्राप्तौ सत्यामेव प्रतिषेधः आवश्यको भवति, प्राप्त्यभावे तु प्रतिषेधोऽनर्थको भवति। अतः 'संज्ञोपसर्जनप्रतिषेधः' इत्यनेन क्रियमाणः प्रतिषेधोऽपि अनर्थकः इति कृत्वा भाष्यकारेण वार्तिकमिदं प्रत्याख्यातम्।

**मूलग्रन्थपाठो व्याख्या च**

**( वा. ) संज्ञोपसर्जनप्रतिषेधः**

**संज्ञोपसर्जनीभूतानां सर्वादीनां प्रतिषेधो वक्तव्यः॥ सर्वो नाम कश्चित्तस्मै सर्वाय देहि। अतिसर्वाय देहि॥ स कथं कर्तव्यः?**

**( वा. ) पाठात् पर्युदासः, पठितानां संज्ञाकरणम्**

**पाठादेव पर्युदासः कर्तव्यः। शुद्धानां पठितानां संज्ञा कर्तव्या। सर्वादीनि सर्वनामसंज्ञानि भवन्ति, संज्ञोपसर्जनानि न सर्वादीनि।**

**व्याख्या–** सर्वो नाम कश्चित्तस्मै सर्वाय देहि, अतिसर्वाय देहि इत्यादौ सर्वनामसंज्ञा मा भूदित्यर्थं वार्तिककारः अत्र वार्तिकस्यावश्यकतां प्रदर्शयति– संज्ञोपसर्जनप्रतिषेध इति। संज्ञोपसर्जनीभूतानामिति– ये विषयान्तरे दृष्टास्त एव इमामवस्थां प्राप्ताः इति विवक्षया महाभाष्यकारेण 'संज्ञोपसर्जनप्रतिषेधः' इति वार्तिकस्य व्याख्यायां च्विप्रत्ययान्तस्य 'संज्ञोपसर्जनीभूतानाम्' इत्येवं पदस्य प्रयोगः कृतः।

'संज्ञोपसर्जनप्रतिषेधः' इति वार्तिकेन सामान्येन कथितं यत् संज्ञायाः, उपसर्जनस्य च प्रतिषेधः कर्तव्य इति। अनेन च ज्ञायते यत् अनेन संज्ञाभूतानाम्, उपसर्जनभूतानां च सर्वादीनां सर्वनामसंज्ञायाः प्रतिषेधः कर्तव्यः, अथवा सर्वादित्वस्य? अतः जिज्ञासा कृता– स कथं कर्तव्यः? इति।

उपरिकृतजिज्ञासायाः समाधानाय वार्तिककारः कथयति– पाठादिति। अर्थात् संज्ञोपसर्जनभूतानां सर्वादिशब्दानां पाठादेव पर्युदासः = प्रतिषेधः कर्तव्यः। अतः तादृशानां सर्वादीनां सर्वादित्वस्य प्रतिषेधात् तेषां सर्वनामसंज्ञा स्वतो न भविष्यति।

**मूलग्रन्थपाठः**

**किमविशिषेण? नेत्याह। विशेषेण च॥ किं प्रयोजनम्?**

**( वा. ) सर्वाद्यानन्तर्यकार्यार्थम्**

**सर्वादीनामानन्तर्येण यदुच्यते कार्यं तदपि संज्ञोपसर्जनीभूतानां मा भूदिति॥**

**व्याख्या–** प्रश्नस्यायमाशयः–किं सर्वादिगणपठितेषु सर्वादिषु, डतरादिषु, त्यदादिषु च यत् सामान्यरूपेण सर्वादित्वं तिष्ठति, तस्यैव प्रतिषेधो भविष्यति?

नेत्याहेति– सर्वादिगणपठितेषु सर्वादिषु, डतरादिषु, त्यदादिषु च यत् सामान्यरूपेण सर्वादित्वं तिष्ठति, तस्यैव प्रतिषेधो न भविष्यति, अपि तु सर्वाद्यन्तर्गणपठितेषु डतरादिषु त्यदादिषु च विशेषरूपेण यत् डतरादित्वम्, त्यदादित्वम् तिष्ठति, तस्यापि प्रतिषेधो भविष्यति।

विशेषरूपेण डतरादित्व-त्यदादित्वयोः यः प्रतिषेधः उक्तः, तस्य प्रयोजनं पृच्छति– किं प्रयोजनमिति।

सर्वादीनाम् = तदन्तर्भूतानां त्यदादिप्रभृतीनाम्। आनन्तर्येण = आनन्तर्योपलक्षितत्यदादीना-मित्येवंरूपेणेत्यर्थः। अर्थात् 'त्यदादीनामः' अद्ड्डतरादिभ्यः पञ्चभ्यः' इत्यादिसूत्रेण त्यदादिप्रभृतिमुद्दिश्य विहितं यत्कार्यं' तदपि संज्ञोपसर्जनीभूतानां मा भूदित्यर्थं = सर्वाद्यन्तर्गणे यत् त्यदादीत्वं, डतरादित्वं तस्यापि प्रतिषेधो भवतु, इत्यर्थं डतरादिषु विशेषरूपेण यत् डतरादित्वम्, त्यदादिषु च विशेषरूपेण यत् त्यदादित्वम् तिष्ठति, तस्यापि प्रतिषेधः आवश्यकः।

**मूलग्रन्थपाठः**

**किं प्रयोजनम्?**

**(वा.) प्रयोजनं डतरादीनामद्ड्भावे**

**डतरादीनामद्ड्भावे प्रयोजनम्। अतिक्रान्तमिदं ब्राह्मणकुलं कतरद् अतिकतरं ब्राह्मणकुलमिति॥**

**(वा.) त्यदादिविधौ च**

**त्यदादिविधौ च प्रयोजनम्। अतिक्रान्तोऽयं ब्राह्मणस्तम् अतितद् ब्राह्मण इति॥**

**व्याख्या–** अविशेषणेन तेषां पाठात्पर्युदासप्रकरणप्रयोजनस्थलम् प्रदर्शितम्, सर्वाय देहि, अतिसर्वाय देहि इत्यत्र। अतः विशेषेण तेषां पर्युदासकरणप्रयोजनस्थलं पृच्छति– किं प्रयोजनमिति। अत्र किम् इति अव्ययम् 'क्व' इत्यर्थे प्रयुक्तम्, अतः क्व प्रयोजनमित्यर्थः।

प्रयोजनम् इत्यनेन डतरादित्वम् प्रतिषेधस्य फलमिति प्रदिर्शतम्।

अनेन च त्यदादित्वस्य प्रतिषेधस्य फलं प्रदर्शितम्।

**मूलग्रन्थपाठः**

**संज्ञाप्रतिषेधस्तावन्न वक्तव्यः। उपरिष्टाद् योगविभागः करिष्यते– 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायाम्'। ततः 'असंज्ञायाम्' इति। सर्वादीनीत्येवं यान्यनुक्रान्तानि, असंज्ञायां तानि द्रष्टव्यानि॥**

**व्याख्या–** 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्' इति सूत्रस्य योगविभागेन संज्ञाप्रतिषेधस्य सिद्धत्वात्, भाष्यकारेण प्रदर्शितं यत् संज्ञायाः प्रतिषेधाय विशेषवचनस्य आवश्यकता नास्ति। 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्' इति सूत्रम् अष्टाध्याय्यामपि पठितम्, गणसूत्रे चापि। कस्य योगविभागः? इति जिज्ञासायाः समाधानाय वक्तव्यं यत् योगविभागः गणसूत्रस्य कर्तव्यः, नाष्टाध्यायीस्थस्य सूत्रस्य, तस्य जसि विभाषाविधायकत्वात्।

**मूलग्रन्थपाठः**

**उपसर्जनप्रतिषेधश्च न कर्तव्यः। 'अनुपसर्जनात्' इत्येष योगः प्रत्याख्यायते।**

**तमेवमभिसंभन्त्स्यामः-अनुपसर्जन अ अदिति॥ किमिदम् अ अदिति?**

**अकारात्कारौ शिष्यमाणावनुपसर्जनस्य द्रष्टव्यौ॥**

**व्याख्या–** उपसर्जनप्रतिषेधायापि विशेषवचनस्य आवश्यकता नास्ति। 'अनुपसर्जनात्' इति प्रत्याख्यातं यत् सूत्रम् तत् एवम् अभिसंभत्स्यामः = व्याख्यास्यामः-अनुपसर्जन अ अत् इति विच्छिद्य सूत्रस्य एवमर्थो भविष्यति, अकारः, अत्कारश्च यत्र क्वापि उक्तः, स अनुपसर्जनस्य भवति इति। अतः 'त्यदादीनामः' इति सूत्रेण विहितः अकारः, डतरादिसूत्रेण च विहितः अत्कारः उपसर्जनस्य न भविष्यति।

**मूलग्रन्थपाठः**

**यद्येवम्– अतियुष्मद् अत्यस्मद् इति न सिद्ध्यति॥**

**प्रश्लिष्टनिर्देशोऽयम्– अनुपसर्जन अ अ अदिति। अकाराद् अकारात्कारौ शिष्यमाणावनुपसर्जस्य द्रष्टव्यौ।।**

**व्याख्या–** अनुपसर्जनात् इत्यस्य अनुपसर्जन अ अत् इत्येवं विच्छिद्य व्याख्याने दोषं दर्शयति– यद्येवमिति। अयमाशयः– अनुपसर्जनस्यैव सर्वादेः अत् इत्यस्य विधाने सति युष्मान् अतिक्रान्तेभ्यः इति अतियुष्मत् इत्यत्र अतियुष्मद् भ्यस् इत्यवस्थायाम्, अस्मान् अतिक्रान्तेभ्यः इति अत्यस्मत् इत्यत्र अत्यस्मद् भ्यस् इत्यवस्थायाम् च 'पञ्चम्या अत्' इति सूत्रेण यः भ्यसः अत् इत्यादेशो भवति, स न भविष्यति?

उपरिप्रदर्शितस्य आक्षेपस्य समाधानं करोति– प्रश्लिष्टनिर्देशोऽयमिति। अयमाशयः– 'अनुपसर्जनात्' इति सूत्रे अपरस्यापि अकारस्य प्रश्लेषं मत्वा सूत्रस्य विगृहीतं स्वरूपं भविष्यति– अनुपसर्जन अ अ अत्। तत्र अनुपसर्जन इति पदे 'सुपां सुलुक्.' इति सूत्रेण षष्ठ्याः, 'अ' इति पदे च पञ्चम्याः लुकं मत्वा सूत्रस्यार्थः एवं करिष्यते– अकारात् परौ विधीयमानौ अकारात्कारौ अनुपसर्जनस्य द्रष्टव्यौ इति। एवं हि अतियुष्मत् अत्यस्मत् इत्यत्र अकारात् परत्वाभावेन उपसर्जनयोरपि युष्मदस्मदोः भ्यसः अत् भविष्यत्येव।

**मूलग्रन्थपाठः**

**अथवा अङ्गाधिकारे यदुच्यते, गृह्यमाणविभक्तेस्तद् भवति।। यद्येवम्, परमपञ्च परमसप्त। 'षड्भ्यो लुग्' इति लुग् न प्राप्नोति।।**

**नैष दोषः, षट्प्रधान एष समासः।।**

**व्याख्या–** 'अनुपसर्जनात्' इत्यस्य अनुसर्जन अ अत् इति, अनुपसर्जन अ अ अत् इति वा व्याख्याने कृतेऽपि 'अतिसर्वाय' इत्यत्र प्रदर्शितो दोषोऽपरिहृत एवास्ति। अतः समा- ध ानान्तरं प्रदर्शितमत्र एकदेशिना। तच्च समाधानमेवम्– 'अङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद् भवति' इत्येवं परिभाषा करिष्यते। अस्याः परिभाषायाश्चायमर्थः– अङ्गाधिकारे यत् कार्यं विहितं तद् सूत्रे गृह्यमाणं यत् शब्दस्वरूपं, तस्मात् विहिता या विभक्तिः, तस्यास्तत्कार्यं भवति।

अतिकतरं ब्राह्मणकुलम् इत्यत्र अतिकतर सु इत्यवस्थायां दृश्यमाना या सुविभक्तिः, सा अतिकतरशब्दात् विहिताऽस्ति, न तु डतरान्तकतरशब्दात्। अतः अत्र अद्ड् इत्यादेशो न भवति। एवमेव अतितद् ब्राह्मण इत्यत्रापि 'अ' इत्यादेशो न भविष्यति, तच्छब्दात् विभक्तेरविहितत्वात्।

यद्येवमिति– 'अङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद्भवति' इति स्वीकारे परमपञ्च, परमसप्त इत्यत्र अङ्गाधिकारे पठितेन 'षड्भ्यो लुक्' इति सूत्रेण जश्शसोर्लुग् न प्राप्नोति, सूत्रे गृह्यमाणं यत् 'षड्भ्यः' इति पदं, ततः जश्शसोरविहितत्वात्।

उपरिप्रदर्शितदोषं निराकरोति– नैष दोषः इति। अयमाशयः– 'अङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद् भवति' इत्यस्याः परिभाषायाः अयमर्थः स्वीकरिष्यते– अङ्गाधिकारे यत्कार्यं विहितं तत् सूत्रे गृह्यमाणानां स्वार्थद्वारेण सम्बन्धिनी या विभक्तिस्तदर्थगत- संख्याकर्मादिवाचिनी, तस्यास्तत्कार्यं भवति।

परमपञ्चेत्यादौ षट्प्रधानः समासः। अतः षडर्थगतसंख्याकर्मवाचिनी एव जस् इति, शस् इति च विभक्तिः। अतः 'षड्भ्यो लुक्' इत्यनेन तयोर्लुग् भविष्यत्येव।

**मूलग्रन्थपाठः**

**इह तर्हि प्रियसक्थ्ना ब्राह्मणेन, अनङ् न प्राप्नोति।।**

**सप्तमीनिर्दिष्टे यदुच्यते, प्रकृतविभक्तौ तद् भवति।।**

**यद्येवम्, अतितद् अतितदौ अतितद इति अत्वं प्राप्नोति॥ तच्चापि वक्तव्यम्॥**

**व्याख्या–** 'अङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद् भवति' इति परिभाषास्वीकारे दोषं दर्शयति इह तर्हीति। अयमाशयः– प्रियं सक्थि यस्य सः प्रियसक्थिः ब्राह्मण इत्यत्र अङ्गाधिकारपठितेन 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इति सूत्रेण टादावजादौ विभक्तौ विधीयमानो योऽनङ्, स न भविष्यति, सूत्रे गृह्यमाणात् सक्थिशब्दात् टाविभक्तेः विहितत्वाभावात्।

प्रदर्शितदोषस्य समाधानं करोति– सप्तमीनिर्दिष्टे इति। अयमाशयः– 'अङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद् भवति' इत्यत्र 'सप्तमीनिर्दिष्टे यदुच्यते, प्रकृतविभक्तौ तद् भवति' इति कथनेन प्रियसक्थ्ना ब्राह्मणेन इत्यत्र अनङभावरूपदोषो न भविष्यति। 'सप्तमीनिर्दिष्टे' इति परिभाषायां प्रकृतशब्देन अङ्गस्य ग्रहणात् तस्याः परिभाषायाः अर्थो भविष्यति– सप्तमीनिर्दिष्टं कार्यम् अङ्गाद् विहितायां विभक्तौ परतः भवति, न तु गृह्यमाणाद् विहितायां विभक्तौ परतः।

'सप्तमीनिर्दिष्टे यदुच्यते प्रकृतविभक्तौ तद् भवति' इति परिभाषास्वीकारे दोषं दर्शयति– अतितद्, अतितदौ, अतितदः इत्यत्रापि 'त्यदादीनामः' इति सूत्रेण अत्वं प्राप्नोति, 'त्यदादीनामः' इति सूत्रे 'अष्टन आ विभक्तौ' इति सूत्रात् 'विभक्तौ' इत्यस्याप्यनुवृत्त्या तेन विहितं कार्यमत्वं विभक्तौ परतो भवति, इति अत्वस्य सप्तमीनिर्दिष्टत्वात्।

एवं हि 'सप्तमीनिर्दिष्टे यदुच्यते प्रकृतविभक्तौ तद् भवति' इत्यपि वक्तव्यं स्यात्, 'अङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद् भवति' इत्यपि। एवं हि वचनद्वयकरणे गौरवं स्यात्।

**मूलग्रन्थपाठः**

**न वक्तव्यम्। इह तावद् 'अद्ड् डतरादिभ्यः पञ्चभ्यः' इति पञ्चमी, अङ्गस्य इति षष्ठी, तत्राशक्यं विभिन्नविभक्तित्वाद् डतरादिभ्य इति पञ्चम्याऽङ्गं विशेषयितुम्। तत्र किमन्यच्छक्यं विशेषयितुमन्यदतो विहितात् प्रत्ययाद्– डतरादिभ्यो यो विहित इति॥**

**व्याख्या–** न वक्तव्यमिति। अनेन ग्रन्थेन कस्यापि अतिरिक्तवचनस्य आवश्यकता नास्ति इति प्रदर्शितम्। अयमाशयः– इह तावत् 'अद्ड् डतरादिभ्यः पञ्चभ्यः' इति सूत्रम् 'अङ्गस्य' इत्यधिकारे पठितम्। अतः सूत्रेऽस्मिन् अनुवृत्त्या 'अङ्गस्य' इति षष्ठ्यन्तं वर्तते, 'डतरादिभ्यः' इति च पञ्चम्यन्तं पदम्। अतः उपायान्तराभावेन 'अङ्गस्य' इति षष्ठ्यन्तं पदं 'डतरादिभ्यः' इति पञ्चम्यन्तस्य विशेषणं भविष्यति। 'डतरादिभ्यः' इति पञ्चम्यन्तं पदं ततो विहितस्य प्रत्ययस्य विशेषणं भविष्यति। एवं हि 'अद्ड् डतरादिभ्य पञ्चभ्यः' इति सूत्रस्यार्थो भविष्यति– अङ्गस्य = अङ्गसम्बन्धिनो ये डतरादयः ततो विहितौ यौ स्वमौ, तयोः अद्ड् इत्यादेशो भवति। इति। अतिकतरं ब्राह्मणकुलम् इत्यत्र डतरादिभ्यः स्वमोर्विहितत्वाभावात् अद्डादेशो न भविष्यति।

**मूलग्रन्थपाठः**

**इहेदानीम्– 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इति त्यदादीनामो भवतीति। अस्थ्यादीनामित्येषा षष्ठी, अङ्गस्येत्यपि। त्यदादीनामित्यपि षष्ठी, अङ्गस्येत्यपि।**

**तत्र कामचारः गृह्यमाणेन वा विभक्तिं विशेषयितुमङ्गेन वा। यावता कामचारः, इह तावद् 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इत्यङ्गेन विभक्तिं विशेषयिष्यामः, अस्थ्यादिभिरनङ्–अङ्गस्य विभक्तावनङ् भवति, अस्थ्यादीनामिति।**

**इहेदानीं त्यदादीनामो भवतीति, गृह्यमाणेन विभक्तिं विशेषयिष्यामः, अङ्गेनाकारम्-त्यदादीनां विभक्तौ अः भवति, अङ्गस्येति॥**

**व्याख्या–** उपसर्जनस्य प्रतिषेधाय उक्तस्य वार्तिकस्य खण्डने अन्यत्रापि दोषो न भवति इति प्रदर्श्यते– इहेदानीमिति। अयमाशयः– 'अङ्गस्य' इत्यधिकारे पठिते 'अस्थिदधि सक्थ्यक्ष्णामनङुदात्तः' इति सूत्रे 'अस्थिदधिसक्थ्यक्ष्णाम्' इत्यपि षष्ठ्यन्तं पदम्। तत्र स्वेच्छया विभक्तेः विशेषणं गृह्यमाणमपि कर्तुं शक्यते, अङ्गमपि। तत्र प्रयोगानुसारेण 'अस्थिदधि सक्थ्यक्ष्णामनङुदात्तः' इति सूत्रे अङ्गस्य इति 'विभक्तौ' इत्यस्य विशेषणमिति स्वीकृत्य सूत्रस्यार्थः एवं करिष्यते– अङ्गस्य या विभक्तिः तस्यां परतः अथ्यादीनामनङ् भवति इति। त्यदादीनामः इति सूत्रे गृह्यमाणं यत्पदं त्यदादि तद् विभक्तौ इत्यस्य विशेषणं स्वीकृत्य सूत्रस्यार्थः एवं करिष्यते– त्यदादीनां या विभक्तिः, तस्यां परतः अङ्गस्य अकारादेशो भवति इति। एवं हि प्रियसक्थ्ना ब्राह्मणेन इत्यत्र अङ्गसम्बन्धिविभक्तौ परतः सक्थिशब्दस्य अनङ् भविष्यति, अतितद्, अतितदौ इत्यादौ च त्यदादिसम्बन्धिविभक्तेरभावात् तस्यां परतः अङ्गस्य अकारादेशो न भविष्यति।

**मूलग्रन्थपाठः**

**यद्येवम्, 'अतिसः' अत्वं न प्राप्नोति॥ नैष दोषः, त्यदादिप्रधान एष समासः॥**

**अथवा– नेदं संज्ञाकरणम्, पाठविशेषणमिदम्– सर्वेषां यानि नामानि तानि सर्वादीनि। संज्ञोपसर्जने च विशेषेऽवतिष्ठेते॥**

**यद्येवं, संज्ञाश्रयं यत्कार्यं तन्न सिद्ध्यति– 'सर्वनाम्नः स्मै' 'आमि सर्वनाम्नः सुट्' इति॥**

**व्याख्याः–** 'त्यदादीनामः' इत्यस्य उक्तरीत्या त्यदादीनां या विभक्तिः, तस्यां परतः अङ्गस्य अकारादेशो भवति इत्यर्थस्वीकारे दोषं दर्शयति। यद्येवमिति। अतिसः इत्यत्र विभक्तेः त्यदादितो विहितत्वाभावाद् दोषो भवति। अतिसः इत्यत्र शोभनः सः इति विग्रहे प्रादिसमासो बोध्यः।

उक्तदोषं निराकरोति–नैष दोषः। अयमाशयः–अतिसः इत्यत्र शोभनः सः इति विग्रहे प्रादिसमासः, अतः त्यदादिप्रधान एष समासो भवति। ततः विहिता या विभक्तिः, सा त्यदाद्यर्थनिष्ठसंख्याभिधायिनी। अतः साऽपि विभक्तिः त्यदादिसम्बन्धिनी विद्यते। अतः अत्रापि अत्वं भविष्यत्येव।

'संज्ञोपसर्जनप्रतिषेधः' इति वार्तिकस्य खण्डनाय अपरमपि समाधानं दर्शयति भाष्यकारः' अथवेति। 'सर्वादीनि सर्वनामानि' इति नास्ति सर्वनामसंज्ञाविधायकम्, अपि तु गणपाठं विशेषयितुमिदं सूत्रम्। सूत्रस्य च अयमर्थः– सर्वेषां यानि नामानि तानि सर्वादीनि कथ्यन्ते। संज्ञोपसर्जने च विशेषेऽर्थे प्रयुज्येते, अतस्तयोः सर्वादित्वं न भविष्यति।

'सर्वादीनि सर्वनामानि' इति सूत्रस्य सर्वनामसंज्ञाविधायकत्वास्वीकारे दोषं दर्शयति– यद्येवमिति। 'सर्वादीनि सर्वनामानि' इति सूत्रस्य सर्वनामसंज्ञायाः विधायकत्वास्वीकारे संज्ञाश्रयं यत्कार्यम्, तद्यथा– 'सर्वनाम्नः स्मै' इति, 'आमि सर्वनाम्नः सुट्' इति तत्कथं सेत्स्यति इति आक्षेपकर्तुराशयः।

**मूलग्रन्थपाठः**



**अन्वर्थग्रहणं तत्र विज्ञास्यते– सर्वेषां यन्नाम तत्सर्वनाम। सर्वनाम्न उत्तरस्य ङेः**

**स्मै भवति। सर्वनाम्नः उत्तरस्यामः सुड् भवति॥**

**यद्येवम्, सकलं कृत्स्नं जगदित्यत्रापि प्राप्नोति। एतेषां चापि शब्दानामेकैकस्य स स विषयः तस्मिंस्तस्मिन्विषये यो यः शब्दो वर्तते, तस्य तस्य तस्मिंस्तस्मिन् वर्तमानस्य सर्वनामकार्यं प्राप्नोति।**

**व्याख्या–** अन्वर्थग्रहणमिति। अयमाशयः – यत्र सर्वनामशब्दोल्लेखपूर्वकं कार्यस्य विधानं दृश्यते, तत्र अन्वर्थस्य = अर्थानुकूलस्य शब्दस्य कार्यं भविष्यति इति स्वीकारेण संज्ञोपसर्जनयोः तत्कार्यं न भविष्यति। अर्थानुकूलस्य शब्दस्यैव ग्रहणपक्षे सर्वनामशब्देन तेषामेव ग्रहणं भविष्यति, येषां प्रयोगः सर्वेषां नाम्नां कृते भवितुमर्हति।

अन्वर्थग्रहणे दोषं प्रदर्शयति– यद्येवमिति। अन्वर्थग्रहणे सकल–कृत्स्नेत्यादिशब्दानामपि सर्वनामकार्यं प्राप्स्यति। यतो हि सकल – कृत्स्नशब्दयोरपि सर्वेषां कृते प्रयोगो भवितुमर्हति। किंच सर्वस्मिन् अन्ने इत्यादिस्थलेषु अन्नादिशब्दानामपि सर्वनामकार्यस्यापत्तिः स्यात्, सर्वशब्देन सामानाधिकरण्यात्।

**मूलग्रन्थपाठः**

**एवं तर्ह्युभयमनेन क्रियते- पाठश्चैव विशेष्यते, संज्ञा च॥**

**कथं पुनरेकेन यत्नेनोभयं लभ्यम्?॥ लभ्यमित्याह। कथम्? एकशेषनिर्देशात्॥**

**एकशेषनिर्देशोऽयम्- सर्वादीनि च सर्वादीनि च सर्वादीनि। सर्वनामानि च सर्वनामानि च सर्वनामानि। सर्वादीनि सर्वनामसंज्ञानि भवन्ति। सर्वेषां यानि नामानि तानि सर्वादीनि। संज्ञोपसर्जने च विशेषेऽवतिष्ठेते॥**

**व्याख्या–** सर्वनामसंज्ञाविधानाभावपक्षे दोषमवलोक्य समाधत्ते–एवं तर्हीति। अर्थात् 'सर्वादीनि सर्वनामानि' इति सूत्रं गणपाठमपि विशेषयिष्यति, सर्वनामसंज्ञां च विधास्यति।

एकेन सूत्रेण कार्यद्वयं कथं भविष्यति इति पृच्छति– कथं पुनरिति।

उक्तजिज्ञासायाः समाधानं करोति– लभ्यमित्याहेति। अयमाशयः 'सर्वादीनि सर्वनामानि' इति सूत्रस्थयोः द्वयोरपि शब्दयोः एकशेषस्वीकारेण सूत्रस्य अर्थद्वयं भविष्यति।

**मूलग्रन्थपाठः**

**अथवा-महतीयं संज्ञा क्रियते। संज्ञा च नाम यतो न लघीयः॥**

**कुत एतत्?॥ लघ्वर्थं हि संज्ञाकरणम्॥ तत्र महत्याः संज्ञायाः करणे एतत् प्रयोजनम्- अन्वर्थसंज्ञा यथा विज्ञायेत-सर्वादीनि सर्वनामसंज्ञानि भवन्ति। सर्वेषां नामानीति चातः सर्वनामानि। संज्ञोपसर्जने च विशेषेऽवतिष्ठेते॥**

**व्याख्या–** 'संज्ञोपसर्जनप्रतिषेधः' इति वार्तिकस्य प्रत्याख्यानाय सिद्धान्तभूतं समाधानं दर्शयति भाष्यकारः–अथवेति। अयमाशयः– 'सर्वनाम' इति महती संज्ञा क्रियते। संज्ञा च लघीयसी भवेत्। अतः महत्याः संज्ञायाः प्रयोजनं भविष्यति– अन्वर्थानामेव सर्वादीनां सर्वनामसंज्ञा यथा स्यादिति। अर्थात् येषां सर्वादीनां प्रयोगः सर्वेषां नाम्नां कृते भवितुमर्हति तेषामेव सर्वादीनां सर्वनामसंज्ञा विधास्यते 'सर्वादीनि सर्वनामानि' इति सूत्रेण। संज्ञावाचकाः, उपसर्जनीभूताश्च सर्वादयः अर्थविशेषे एव प्रयुज्यन्ते, न तु सर्वत्र, अतः तेषां सर्वनामसंज्ञा न भविष्यति। अतः तेषां सर्वनामसंज्ञाप्रतिषेधाय 'संज्ञोपसर्जनप्रतिषेधः' इति वार्तिकस्य अनावश्यकतां प्रदर्श्य भाष्यकारेण सिद्धान्ततः 'संज्ञोपसर्जनप्रतिषेधः' इति वार्तिकं प्रत्याख्यातम्।

**बोधप्रश्नः**

६. 'संज्ञोपसर्जनप्रतिषेधः' इति वार्तिकस्य काऽऽवश्यकता?

७. 'अङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद् भवति' इति स्वीकारे प्रियसक्थ्ना ब्राह्मणेन इत्यत्र को दोषः?

८. 'सप्तमीनिर्दिष्टे यदुच्यते प्रकृतविभक्तौ तद् भवति' इति स्वीकारे कुत्र दोषः?

## ८.४ सारांशः

'सर्वादीनि सर्वनामानि' इति सर्वनामसंज्ञाविधायकं सूत्रम्। 'सर्वादीनि' इति पदे बहुव्रीहिसमासस्वीकारे बहुव्रीहेरन्यपदार्थत्वात् सर्वशब्दस्य सर्वनामसंज्ञा न स्यादिति शङ्कानिवारणाय भाष्यकारेण प्रतिपादितं यत् बहुव्रीहौ तद्गुणसंविज्ञानमपि भवति। तद्यथा- लम्बकर्णं पुरुषमानय इत्यत्र अन्यपदार्थस्य पुरुषस्यापि आनयनं भवति, तद्गुणस्य कर्णस्यापि। एवमेव सर्वादिपदेन सर्वशब्दस्यापि ग्रहणेन तस्यापि सर्वनामसंज्ञा भवत्येव।

सर्वनामशब्दे 'पूर्वपदात् संज्ञायामगः' इति सूत्रेण णत्वं निपातनान्न भवति। अन्यादृशे प्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणं निपातनं कथ्यते। निपातनं सामान्यसूत्रेण प्राप्तस्य कार्यस्य 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' इति न्यायेन बाधकं भवति। अतः भाष्यकारेण अत्र सिद्धान्तः स्थापितो यत् 'बाधकान्येव हि निपातनानि भवन्ति' इति।

अस्मिन्नेव पाठे भवता पठितं यत् सर्वो नाम कश्चित्तस्मै सर्वाय देहि, इत्यादौ संज्ञाभूतानां सर्वादीनाम्, अतिसर्वाय देहि इत्यादौ उपसर्जनीभूतानां च सर्वादीनां सर्वनामसंज्ञायाः प्रतिषेधाय 'संज्ञोपसर्जनप्रतिषेधः' इति वार्तिकं पठितं वार्तिककारेण। तद्वार्तिकं च भाष्यकारेण एवं रीत्या प्रत्याख्यातम्- सर्वनाम इति महती संज्ञा। संज्ञा च नाम लघीयसी भवेत्। यतो हि कथ्यते- लघ्वर्थं हि संज्ञाकरणम्। तत्र महत्याः संज्ञायाः करणे एतत् प्रयोजनम्- अन्वर्थसंज्ञा यथा विज्ञायेत। सर्वनाम इत्यस्य 'सर्वेषां नाम' इति व्युत्पत्त्या सूत्रस्याऽर्थो भविष्यति - सर्वेषां कृते यस्य नाम्नः = प्रातिपदिकस्य प्रयोगः कर्तुं शक्यते तस्य सर्वनामसंज्ञा भवति। संज्ञाभूताः, उपसर्जनीभूताश्च सर्वादयः अर्थविशेषे प्रयुज्यन्ते, तेषां प्रयोगः सर्वेषां कृते न कर्तुं शक्यते। अतः अन्वर्थसंज्ञाविज्ञानेनैव संज्ञोपसर्जनीभूतानां सर्वादीनां सर्वनामसंज्ञावारणसम्भवे तदर्थं 'संज्ञोपसर्जनप्रतिषेधः' इति वार्तिकं न करणीयमिति भाष्यकारेण सिद्धान्तः स्थापितः।

## ८.५ शब्दावली

| | | | |
|---|---|---|---|
| १. | सर्वादीनि | – | सर्वादिगणपठितानि शब्दस्वरूपाणि। |
| २. | तद्गुणसंविज्ञानम् | – | तस्य = अन्यपदार्थस्य, ये गुणाः = विशेषणानि, तेषामपि संविज्ञानम् = ग्रहणम्, अन्वयो वेति तद्गुणसंविज्ञानम्। |
| ३. | निपातनम् | – | अन्यादृशे प्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणम्। |
| ४. | प्रकृतम् | – | प्रसङ्गतः प्राप्तम्। |
| ५. | प्रथमानिर्दिष्टम् | – | प्रथमान्तम्। |
| ६. | प्रत्ययविधिः | – | प्रत्ययविधायकं सूत्रम्। |
| ७. | उपसर्जनम् | – | अप्रधानम्, विशेषणं वा। |
| ८. | पर्युदासः | – | अभावः। |

| | | | |
|---|---|---|---|
| ९. | अभिसंभन्त्स्यामः | – | व्याख्यास्यामः। अभिसम्बन्धं करिष्यामः। |
| १०. | प्रश्लिष्टनिर्देशः | – | सन्धिं विधाय कृतो निर्देशः। |
| ११. | अङ्गाधिकारः | – | 'अङ्गस्य' इत्यस्य अधिकारक्षेत्रम्। |
| १२. | गृह्यमाणविभक्तिः | – | सूत्रे उच्चार्यमाणशब्दात् विहिता विभक्तिः। |
| १३. | षट्प्रधानः समासः | – | षडर्थः (षडर्थगतसंख्या-कर्माद्यर्थाः) प्रधानं यस्मिन् स समासः। |
| १४. | कामचारः | – | यथेच्छं व्यवहारस्यावसरः। |
| १५. | अन्वर्थसंज्ञा | – | संज्ञाशब्दस्य योऽर्थः, तदनुकूलशब्दानां संज्ञा |

## ८.६ सन्दर्भग्रन्थः

| | | | | | |
|---|---|---|---|---|---|
| १. | महाभाष्यम् | २. | काशिकावृत्तिः | ३. | उद्योतटीका |
| ४. | छायाटीका | ५. | शब्दकौस्तुभः | ६. | लघुशब्देन्दुशेखरः |

## ८.७ सहायकग्रन्थः

| | | | |
|---|---|---|---|
| १. | वैयाकरणसिद्धान्तकौमुदी | २. | काशिकावृत्तिः |
| ३. | पदमञ्जरीटीका | ४. | न्यासटीका |
| ५. | परिभाषेन्दुशेखरः | ६. | प्रौढ़मनोरमा |

## ८.८ बोधप्रश्नोत्तराणि

**१. सर्वादीनि इति पदे कस्य कस्य समासस्य संभावना विद्यते?**

उत्तरम्– 'सर्वादीनि' इति पदे सर्वः आदिर्येषां तानि इमानि 'सर्वादीनि' इति बहुव्रीहिसमासः क्रियते। विश्वादिशब्दैः सह सर्वशब्दस्यापि सर्वनामसंज्ञार्थं 'सर्वादीनि' इति पदे गौरवास्पदोऽपि बहुव्रीहि-तत्पुरुषयोः एकशेषोऽपि कर्तुं शक्यते। तत्र सर्व आदिर्येषाम् इति विग्रहे बहुव्रीहिसमासेन विश्वादीनां ग्रहणं भविष्यति। सर्वश्चासौ आदिश्च इति विग्रहे 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन' इति सूत्रेण तत्पुरुषे समासे कृते सर्वादिः इति पदं सेत्स्यति। अनेन पदेन केवलं सर्वशब्दस्य ग्रहणं भविष्यति। सर्वादीनि च सर्वादिश्च इति विग्रहे 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इति सूत्रेण नपुंसकस्य सर्वादिशब्दस्यैकशेषे सर्वादीनि इति पदं सेत्स्यति।

बहुव्रीहौ तद्गुणसंविज्ञानपक्षे 'सर्वादीनि' इति पदेन विश्वादिभिः सह सर्वशब्दस्यापि सर्वनामसंज्ञा भविष्यति। अतः 'सर्वादीनि' इति पदे बहुव्रीहिसमासः एव स्वीक्रियते, न तु गुरुभूतः बहुव्रीहि-तत्पुरुषयोरेकशेषः।

**२. तद्गुणसंविज्ञानो बहुव्रीहिः कुत्र भवति?**

उत्तरम्– यत्र अन्यपदार्थस्य, वर्तिपदार्थस्य च मध्ये संयोगसम्बन्धः, समवायसम्बन्धो वा भवति, तत्र तद्गुणसंविज्ञानो बहुव्रीहिः भवति। यथा– शुक्लवाससमानय इत्यत्र अन्यपदार्थस्य पुरुषस्य, वर्तिपदार्थस्य वाससश्च संयोगसम्बन्धः।

'सर्वादीनि सर्वनामानि' इत्यत्र 'सर्वादीनि' इति पदे अन्यपदार्थः समुदायः, सर्वशब्दश्च तस्य समुदायस्य अवयवः। अवयवावयविनोः समवायसम्बन्धो भवति। अतः अत्रापि तद्गुणसंविज्ञान एव बहुव्रीहिः।

**३. सर्वनामशब्दे णत्वं कथं न भवति?**

उत्तरम्– यद्यपि अत्र णत्वाभावाय 'सौत्रत्वान्न णत्वम्' इत्यपि कथयितुं शक्यते स्म तथापि 'निपातनाण्णत्वाभावः' इति समाधानेन लोके, वेदे च कुत्रापि सर्वनामशब्दे णत्वं न भवति

**४. निपातनप्रतिषेधयोः को भेदः?**

उत्तरम्– सामान्यसूत्रेण प्राप्तकार्याद् भिन्नकार्यसहितस्य शब्दस्य प्रयोगः निपातनं कथ्यते। यथा 'सर्वादीनि सर्वनामानि' इति सूत्रेण णत्वरहितस्य सर्वनामशब्दस्य प्रयोगः। प्रतिषेधस्तु कार्यस्य केवलं वारणं करोति।

**५. 'समो वा हित-ततयोः' इति श्लोकांशः सप्रसङ्गं व्याख्यायताम्।**

उत्तरम्– निपातनस्यापि बाधकत्वस्वीकारे दोषप्रदर्शनाय 'समो वा हित-ततयोः' इति श्लोकांशस्य उद्धरणं कृतं विद्यते भाष्ये। तत्र अयमाशयः- अन्ये वैयाकरणाः सततम्, सन्ततम्, इति रूपद्वयसिद्ध्यर्थं 'समो मकारस्य लोपो वा भवति हितशब्दे, ततशब्दे च परे' इत्यर्थकं 'समो वा हित-ततयोः' इति वचनं पठन्ति। तेन संततम्, सततम्, संहितम्, सहितम् इत्येवं मकारसहितम्, मकाररहितं च रूपं दृश्यते।

पाणिनीयव्याकरणे तादृशसूत्रस्याभावेन 'अपरस्पराः क्रियासातत्ये' इति सूत्रे 'सातत्ये' इति प्रयोगं दृष्ट्वा कल्पयिष्यते यत् निपातनेन ततशब्दे परे समो मकारस्य लोपो भवतीति। एवं हि निपातनेन मकाररहितस्यैव सततशब्दस्य पाणिनीयव्याकरणानुसारेण साधुत्वं स्यान्न संततमिति मकारसहितस्यापि।

**६. 'संज्ञोपसर्जनप्रतिषेधः' इति वार्तिकस्य काऽऽवश्यकता?**

उत्तरम्– 'सर्वादीनि सर्वनामानि' इति सूत्रेण सर्वादिगणपठितानां शब्दानां सर्वनामसंज्ञा विधीयते। सा सर्वनामसंज्ञा सर्वाद्यर्थवाचकानामिव संज्ञावाचकानामपि सर्वादिशब्दानां प्राप्नोति। एवं हि सर्वो नाम कश्चित्तस्मै देहि सर्वाय देहि इत्यत्रापि 'सर्वनाम्नः स्मैः' इति सूत्रेण ङेः स्मै इत्यादेशः प्राप्नोति।

एवमेव सर्वमतिक्रान्त इति अतिसर्वः, तस्मै अतिसर्वाय देहि इत्यत्रापि सर्वशब्दान्तस्य अतिसर्वशब्दस्य सर्वनामसंज्ञा प्राप्नोति। सर्वनामसंज्ञायां सत्यां तु अत्रापि ङेः स्मै इत्यादेशः प्राप्नोति।

एवं हि संज्ञोपसर्जनीभूतानां सर्वादीनां प्राप्तायाः सर्वनामसंज्ञायाः वारणाय 'सर्वादीनि सर्वनामानि' इति सूत्रे 'संज्ञोपसर्जनप्रतिषेधः' इति वार्तिकमावश्यकम् इति वार्तिककारस्य मतम्।

**७. 'अङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद् भवति' इति स्वीकारे प्रियसक्थ्ना ब्राह्मणेन इत्यत्र को दोषः?**

उत्तरम्– 'अङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तेस्तद् भवति' इति परिभाषास्वीकारे प्रियसक्थ्ना ब्राह्मणेन इत्यत्र एवं दोषो भवति- प्रियं सक्थि यस्य सः प्रियसक्थिः ब्राह्मण इत्यत्र अङ्गाधिकारपठितेन 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इति सूत्रेण टादावजादौ

विभक्तौ विधीयमानो योऽनङ्, स न भविष्यति, सूत्रे गृह्यमाणात् सक्थिशब्दात् टाविभक्तेः विहितत्वाभावात्।

**८. 'सप्तमीनिर्दिष्टे यदुच्यते प्रकृतविभक्तौ तद् भवति' इति स्वीकारे कुत्र दोषः?**

उत्तरम्– 'सप्तमीनिर्दिष्टे यदुच्यते प्रकृतविभक्तौ तद् भवति' इति परिभाषास्वीकारे तमतिक्रान्त इति अतितद् इति शब्दात् स्वादिविभक्तौ अतितद्, अतितदौ, अतितदः इत्यत्रापि 'त्यदादीनामः' इति सूत्रेण अत्वं प्राप्नोति।, 'त्यदादीनामः' इति सूत्रे 'अष्टन आ विक्तौ' इति सूत्रात् 'विभक्तौ' इत्यस्याप्यनुवृत्त्या तेन विहितं कार्यमत्वं विभक्तौ परतो भवति, इति अत्वस्य सप्तमीनिर्दिष्टत्वात्।

## ८.९ अभ्यासप्रश्नाः

**१. स्वभाषायां विवरणं प्रस्तौतु–**

(क) सर्वनामशब्दे णत्वं कथं न भवतीति विविच्यताम्।

(ख) 'संज्ञोपसर्जनप्रतिषेधः' इति वार्तिकस्य प्रत्याख्यानप्रकारः प्रदर्श्यताम्।

(ग) 'सर्वादीनि सर्वनामानि' इत्यत्र उभयोः पदयोः एकशेषस्वीकारे सूत्रस्य कोऽर्थो भवतीति स्पष्टीक्रियताम्।

**२. लघूनि उत्तराणि प्रदेयानि–**

(क) सर्वशब्दस्य सर्वनामसंज्ञायै सर्वादीनि इत्यत्र कःबहुव्रीहिभेदः स्वीकर्तव्यः?

(ख) तद्गुणसंविज्ञानबहुव्रीहेः किम् उदाहरणं प्रस्तुतवान् भाष्यकारः?

(ग) अतिसर्वाय देहि इत्यत्र कथं न भवति 'स्मै' इत्यादेशः।

(घ) अन्वर्थसंज्ञापक्षे 'सर्वनाम' इत्यस्य कोऽर्थः?

(ङ) निपातनपदस्य कोऽर्थः नागेशेन प्रतिपादितः?

**३. निबन्धात्मकमुत्तरं प्रदेयम्–**

(क) सर्वशब्दस्य सर्वनामसंज्ञाविधानं कथमिति प्रतिपाद्य निपातनपदार्थ-विषये आक्षेपसमाधानानि उत्थाप्य सिद्धान्तपक्षः स्थापनीयः।

(ख) संज्ञोपसर्जनप्रतिषेधः इत्यस्य प्रत्याख्यानं भाष्यदिशां करोतु।



# नवमः पाठः [अथोभस्य सर्वनामत्वे कोऽर्थः इत्यारभ्य विभाषादिक्समासे इति यावत्]

**पाठसंरचना**



## ९.१ प्रस्तावना

सर्वादिगणपठितेषु शब्देषु द्वौ एव शब्दौ स्तः, यत्र स्वादिविभक्तौ किमपि सर्वनामसंज्ञाप्रयुक्तं कार्यं न भवति। तौ च शब्दौ स्तः- उभशब्दः, भवच्छब्दश्च। उभशब्दस्य द्विवचनटाब्विषयत्वात्, भवच्छब्दस्य च अकारान्तत्वाभावात्। अतः भाष्यकारेण अनयोः द्वयोः शब्दयोः सर्वादिगणे कृतपाठस्य प्रयोजनविषये 'सर्वादीनि सर्वनामानि' इति सूत्रस्य भाष्यकरणक्रमे एव विचारः कृतः। पाठेऽस्मिन् भाष्यमनुसृत्य प्रथममुभशब्दस्य, भवच्छब्दस्य च सर्वादिगणे कृतपाठस्य प्रयोजनविषये व्याख्यानं करिष्यते। विशिष्य अकजर्थः उभशब्दस्य सर्वादिगणे

पाठ आवश्यको न वा? अथवा कप्रत्ययेन इष्टं रूपं सिद्ध्येत् इति आक्षेपसमाधानपूर्वकं विचारितं भवेत्। किञ्च अनुद्भूतावयवभेदे एकवचने किं रूपं भवेदथवा न इति विचारोऽत्र करिष्यते। ततः परं 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रस्य च व्याख्यानं विधास्यते। 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे दिग्ग्रहणस्य, समासग्रहणस्य, बहुव्रीहिग्रहणस्य च प्रयोजनं प्रदर्शयिष्यते। 'पूर्वोत्तराय देहि' इत्यादौ सर्वनामसंज्ञा कस्मान्न? किमत्र समाधानम्, इत्यपि विचारयिष्यते। अन्ते बहुव्रीहिग्रहणस्य प्रत्याख्यानप्रकारश्च प्रकटयिष्यते।



## ९.२ उद्देश्यम्

अस्य पाठस्य पठनानन्तरं भवान्–

- उभशब्दस्य, भवच्छब्दस्य सर्वादिगणे पाठस्य प्रयोजनं ज्ञास्यति।
- कुत्र उभशब्दस्य, कुत्र च उभयशब्दस्य प्रयोगो भवति इति ज्ञातुं समर्थो भविष्यति।
- 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रस्यार्थेन, उदाहरणेन च सह परिचितो भविष्यति।
- 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे दिग्ग्रहणस्य, समासग्रहणस्य, बहुव्रीहिग्रहणस्य च प्रयोजनं ज्ञास्यति।
- बहुव्रीहिग्रहणस्य प्रत्याख्यानप्रकारेण सह परिचितो भविष्यति।

## ९.३ सर्वादिगणे उभशब्दस्य पाठस्य प्रयोजनम्, प्रत्याख्यानं च

### ९.३.१ पूर्वसन्दर्भः

सर्वादीनि सर्वनामानि इति सर्वनामसंज्ञाविधायकं सूत्रम्। तत्र सर्वादीनि इत्यत्र अतद्गुणसंविज्ञानो बहुव्रीहिः। अत्र निपातनात् णत्वाभावः। किं निपातनम्? इति पठितवन्तः। अत्रैव संज्ञोपसर्जनीभूतस्य न सर्वनामसंज्ञा, प्रयोजनं डतरादीनामद्ड्भावे, त्यदादिविध ौ च, इत्यपि भवन्तः पठितवन्तः। अन्वर्थसंज्ञाविज्ञानात् प्राप्तदोषाणां निराकरणम् इत्यादिविषये भवन्तः अपठन्। अधुना सर्वादिगणे उभशब्दस्य भवच्छब्दस्य च पाठे किं प्रयोजनमस्ति न वेति पठिष्यामो वयम्।

### ९.३.२ सर्वादिगणे उभशब्दपाठस्य प्रयोजनम्

सर्वादिगणे उभशब्दस्य यः पाठः कृतः, तस्य किं प्रयोजनम्? इति जिज्ञासायाः समाधानाय वार्तिककारेण 'उभस्य सर्वनामत्वेऽकजर्थः' इति वार्तिकं पठितम्। तस्य वार्तिकस्य चायमर्थः– 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इति सूत्रेण अकच्प्रत्ययः सर्वनामत्वेन उभशब्दस्यापि भवतु, इत्यर्थम् उभशब्दस्य पाठः सर्वादिगणे कृतः। अत्र पुनः जिज्ञासा भवति यत्– किमुच्यतेऽकजर्थ इति। पुनरन्यान्यपि सर्वनामकार्याणि प्रयोजनत्वेन कथं न कथितानि? अस्याः जिज्ञासायाः समाधानाय वार्तिककोरण 'अन्याभावो द्विवचनटाब्विषयत्वात्' इति वार्तिकं पठितम्। अस्य वार्तिकस्य चायमर्थः– उभशब्दस्य प्रयोगः केवलं द्विवचने तथा टापि एव भवति। सर्वनामसंज्ञाप्रयुक्तानि अन्यानि कार्याणि च एकवचने, बहुवचने एव भवन्ति, न तु द्विवचने, टापि वा। तद्यथा– 'जसः शी' इत्यनेन, जसः श्यादेशः, 'सर्वनाम्नः स्मै' इत्यनेन ङेः स्मै इत्यादेशः, 'ङसिङ्योः स्मात्स्मिनौ' इत्यनेन ङसेः स्मात् इत्यादेशः, ङिविभक्तेश्च स्मिन् इत्यादेशः, 'आमि सर्वनाम्नः सुट्' इत्यनेन आमः सुडागमः इति सर्वाणि सर्वनामसंज्ञाप्रयुक्तानि कार्याणि एकवचने, बहुवचने एव विहितानि दृश्यन्ते।

अतः उभशब्दस्य द्विवचनटाब्विषयत्वात् एतानि कार्याणि न भवितुमर्हन्ति। अतः केवलम् अकजर्थ एव सर्वादिगणे उभशब्दस्य कृतः पाठः सार्थको भवितुमर्हति।

ननु उभस्य टाब्विषयत्वमप्युक्तम्। टाबन्ते च 'सर्वनाम्नः स्याड्ढ्रस्वश्च' इत्याद्यन्यसर्वनामसंज्ञाकार्यमपि भविष्यत्येवेति 'तत्र अन्याभावः' इति कथनमसमीचीनमिति चेन्न, 'अन्याभावो द्विवचनटाब्विष्यत्वात्' इति वार्तिके अन्याभावस्य हेतुत्वेन टाब्विषयत्वस्यापि कथनेन 'टाबन्तस्यापि उभशब्दस्य द्विवचनादन्यत्र प्रयोगो न भवति' इति सूचितम्।

जिज्ञासा– उभशब्दस्य द्विवचनटाब्विषयत्वस्वीकारे जिज्ञासा भवति यद् एकवचने, बहुवचने वा अस्य उभशब्दस्य कृते कः शब्दः प्रयुज्यते?

यथा द्विशब्दो द्वित्वविशिष्टस्य वाचकः, अत एव स नित्यं द्विवचनान्तो भवति, तत्र इयं जिज्ञासा न क्रियते यत् द्विशब्दस्य एकवचने, बहुवचने वा किं रूपं भवति। तथैव उभशब्दोऽपि द्वित्वविशिष्टस्य वाचकः, अत एवायमपि नित्यं द्विवचनान्तो भवति, अतः अत्रापि इयं जिज्ञासा न युक्ता यत् एकवचने बहुवचने वा अस्य उभशब्दस्य कृते कःशब्दः प्रयुज्यते? तथाऽपि जिज्ञासा कृता भाष्यकारेण। अतः कृतायाः जिज्ञासायाः अयमाशयः– उभशब्दस्य 'द्व्यवयवयुक्तः' इत्यर्थो भवति। तत्र उद्भूतावयवभेदपक्षे उभशब्दस्य प्रयोगः द्विवचने एव भविष्यति। तिरोहितावयवभेदपक्षे तु उभशब्दस्य प्रयोगः एकवचने, एकशेषेण तु अस्य प्रयोगः द्विवचनेन सह बहुवचनेऽपि प्राप्नोति। किं च उद्भूतावयवभेदपक्षेऽपि उभौ च उभौ च इति विग्रहे एकशेषे कृते उभशब्दस्य प्रयोगः बहुवचने प्राप्नोति। अतः अत्र कृता जिज्ञासा युक्तिसंगता एव यद् एकवचने, बहुवचने वा अस्य उभशब्दस्य कृते कः शब्दः प्रयुज्यते? इति

समाधानम्– 'उभयोऽन्यत्र' इति वार्तिकद्वारा भाष्यकारेण उपरि कृतायाः जिज्ञासायाः समाधानं कृतं यत् द्विवचनाभावस्थले, टाबभावस्थले च यदा उभशब्दस्य प्रयोगस्य स्थितिः समायाति तदा उभशब्दस्य कृते उभयशब्दस्य प्रयोगो भवति। तेन उभौ (देवमनुष्यौ) च उभौ (देवमुनष्यौ) च इति विग्रहे उभशब्दस्य बहुवचने प्रयोगस्य स्थितौ 'उभये देवमनुष्याः' इत्यत्र उभयशब्दस्य प्रयोगो दृश्यते। एवमेव तिरोहितावयवभेदपक्षे 'उभयो मणिः' इत्यत्र उभशब्दस्य एकवचने प्रयोगस्य स्थितौ अपि उभयशब्दस्यैव प्रयोगो दृश्यते।

एवमेव उद्भूतावयवभेदपक्षेऽपि उभशब्दस्य पदान्तरेण सह समासे द्विवचनस्य 'सुपो धातुप्रातिपदिकयोः' इति सूत्रेण लुकि कृते उभशब्दस्य द्विवचनपरत्वाभावो भवति, तत्रापि उभयशब्दस्यैव प्रयोगो भवति। तद्यथा उभयोः पुत्रः इति उभयपुत्रः इत्यत्र।

एवमेव 'उभाभ्याम्' इत्यर्थे 'पञ्चम्यास्तसिल्' इति सूत्रेण तसिल्प्रत्यये कृते तद्धितान्तत्वेन प्रातिपदिकसंज्ञायां 'सुपो धातुप्रातिपदिकयोः' इति सूत्रेण द्विवचनस्य भ्याम् इत्यस्य लुकि कृते यदा उभशब्दो द्विवचनविभिक्तिविहीनः संजायते, तदापि उभशब्दस्य कृते उभयशब्दस्यैव प्रयोगो भवति, अतः उभयतः इति प्रयोगः सिद्ध्यति। एवमेव 'उभयोः' इत्यर्थे त्रलि सुब्लुकि च कृते उभयत्र इत्यत्रापि उभयशब्दस्यैव प्रयोगो दृश्यते।

अत्र जिज्ञासा भवितुमर्हति यत् उभशब्दस्य कृते उभयशब्दस्य यः प्रयोगः दृश्यते, स 'उभयोऽन्यत्र' इति वार्तिकेनैव, किं वा एतदर्थं पाणिनेरपि कश्चित् यत्नः? अस्याः जिज्ञासायाः समाधानमेवं कर्तुं शक्यते– पाणिनिना स्वयम् उभशब्दस्यार्थे शब्दद्वयं पठितम्–उभशब्दः, उभयशब्दश्च। अतः उद्भूतावयवभेदपक्षे उभशब्दस्य प्रयोगः, तिरोहितावयवभेदपक्षे, एकशेषे च उभयशब्दस्य प्रयोगः पाणिनिसम्मतः। उभयोः पुत्रः इति उभयपुत्रः, उभयतः, उभयत्र इत्यत्र उभशब्दस्य स्थाने उभयशब्दस्य प्रयोगः पाणिनेः 'उभादुदात्तो

नित्यम्' इति सूत्रस्य योगविभागेन सिद्ध्यति। अयमाशयः – 'उभादुदात्तो नित्यम्' इति योगो विभज्यते। योगविभागेन एकं सूत्रं भवति– 'उभादुदात्तः' इति। अपरं च सूत्रं 'नित्यम्' इति। तत्र 'उभादुदात्तः' इत्यस्यायमर्थः – अवयववृत्तेः संख्यावाचिनः उभशब्दाद् अवयविन्यर्थे अयच्प्रत्ययो भवति। स च उदात्तः इति। अनेन सूत्रेण 'उभौ अवयवौ यस्य' इत्यर्थे उद्भूतावयवभेदपक्षे द्वित्वविशिष्टवाचकाद् उभशब्दाद् अयच्प्रत्ययो भवति, येन द्वयम्, त्रयम् इतिवत् उभयम् इति पदं सिद्ध्यति।

अथोभस्य सर्वनामत्वे कोऽर्थः इत्यारभ्य विभाषादिक्समासे इति यावत्

योगविभागेन प्रदर्शितस्य 'नित्यम्' इति सूत्रस्यार्थो भवति– उभशब्दाद् वृत्तिविषये नित्यमयच् प्रत्ययो भवति इति। 'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति' इति वचनानुसारेण 'नित्यम्' इति सूत्रेण विहितोऽयच्प्रत्ययः स्वार्थे भवति। एवं हि उभयपुत्रः, उभयतः, उभयत्र– एषु स्थलेषु उभयशब्दस्य प्रयोगः सिद्ध्यति।

एवं हि उभयशब्दस्य द्विवचनटाब्विषयत्वात् सर्वादिगणे तस्य पाठः केवलम् अकजर्थ एव भवितुमर्हति, अतः 'उभस्य सर्वनामत्वेऽकजर्थः' इति वार्तिके अकचः एव उल्लेखोऽस्ति नतु अन्येषामपि सर्वनामकार्याणाम्।

जिज्ञासा–भवति–यदि उभशब्दस्य सर्वनामत्वाभावे अकच् न स्यात्तर्हि किं स्यात्?

उत्तरम्– स्वार्थिकप्रत्ययस्य विवक्षायां 'अज्ञाते' इत्यादिसूत्रैः उभशब्दात् सर्वनामत्वाभावेन कप्रत्ययः प्रसज्येत।

जिज्ञासा– उभशब्दात् कप्रत्ययो भवतु अकच्प्रत्ययो वा, रूपे न कोऽपि भेदो भवति, यतो हि कप्रत्यये कृतेऽपि 'उभकौ' इत्येव रूपं भविष्यति, अकच्प्रत्यये कृतेऽपि। स्वरेऽपि न कश्चिद् विशेषः। चित्स्वरेण, प्रत्ययस्वरेण च उभयत्रापि अन्तोदात्तता एव भवति। एवं हि कप्रत्यये, अकच्प्रत्यये च विशेषाभावदर्शनेन पुनरियं जिज्ञासाऽवशिष्यते एव यत् 'उभस्य सर्वनामत्वे कोऽर्थः? इति।

समाधानम्– पूर्वमेवोक्तं यत् उभशब्दस्य प्रयोगः केवलं द्विवचने तथा टापि एव भवति, अन्यत्र तु उभयशब्दस्य प्रयोगो भवति इति। तत्र हि अकचि सति 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति परिभाषया उभशब्देन उभकशब्दस्यापि ग्रहणात् 'उभक औ' इत्यवस्थायां कथयितुं शक्यते यत् द्विवचनपरोऽयम् उभशब्दः, अतः अत्र उभशब्दस्य कृते उभयशब्दस्य प्रयोगो न भविष्यति।

कप्रत्यये च सति 'उभ क औ' इत्यवस्थायाम् उभशब्दात् परः कप्रत्ययः विद्यते न तु द्विवचनप्रत्ययः। उभयतः, उभयत्र इत्यादौ तसिलादिप्रत्यये द्विवचनस्याभावे यथा उभशब्दस्य कृते उभयशब्दस्य प्रयोगो भवति, तथैव कप्रत्ययेऽपि उभशब्दस्य कृते उभयशब्दस्य प्रयोगापत्तिः स्यात्। एवं हि 'उभकौ' इति इष्टप्रयोगस्य स्थाने 'उभयकौ' इत्यनिष्टरूपापत्तिः स्यात्।

एवं हि अत्र अनिष्टरूपापत्तिवारणाय एतद् वक्तव्यं स्यात् यत्– कप्रत्ययेन व्यवधानेऽपि उभशब्दो द्विवचनपरो भवति' इति। उभशब्दस्य सर्वनामत्वे तु एतद्वचनस्य आवश्यकता न भवति। अतः 'कप्रत्ययेन व्यवधानेऽपि उभशब्दो द्विवचनपरो भवति' इति वचनाकरणलाघवार्थम् उभशब्दस्य पाठः सर्वादिगणे कर्तव्य एवेति समाधानकर्तुराशयः।

जिज्ञासा यथैव तर्हि कप्रत्यये सति नायं द्विवचनपरः, तथैव टाप्यपि टापा व्यवधानेन उभशब्दो द्विवचनपरो न भविष्यति। अतः तत्रापि द्विवचनपरता वक्तव्या स्यात्?

जिज्ञासायाः अयमाशयः- 'अन्याभावो द्विवचनटाब्विषयत्वात्' इति वार्तिके टापोऽपि ग्रहणात् कप्रत्यये इव टापि उभयशब्दस्य प्रयोगो न प्राप्स्यति, किन्तु टापि कृते सिद्धेन 'उभा' इति शब्देन उभशब्दस्याऽग्रहणात् उभाशब्दस्य प्रयोगः एकवचने, बहुवचने अपि प्राप्स्यति, अतः अत्र एतदपि वक्तव्यं स्यात् यत्- 'उभाशब्दोऽपि द्विवचनपरः एव प्रयुज्यते' इति।

समाधानम्- उक्तजिज्ञासायाः समाधानाय भाष्ये उक्तं यत् अन्तरेणापि वचनम् आपि कृतेऽपि उभशब्दस्य द्विवचनपरत्वं तिष्ठत्येव।

अयमाशयः- टापि कृते 'उभ आ' इत्यवस्थायाम् 'अकः सवर्णे दीर्घः' इति सूत्रेण दीर्घैकादेशे कृते सिद्धे 'उभा' इति शब्दे 'अन्तादिवच्च' इति सूत्रेण आब्विशिष्टस्य अन्तवद्भावेन उभशब्दत्वं भविष्यत्येव।

एवं हि उभशब्देन आब्विशिष्टस्यापि उभाशब्दस्य ग्रहणात् तस्यापि प्रयोगः केवलं द्विवचने एव भविष्यति, न तु एकवचने बहुवचने चापि। अतः टाबन्तस्य प्रयोगः एकवचने, बहुवचने वा मा भूदित्यर्थम् 'उभाशब्दोऽपि द्विवचनरः एव प्रयुज्यते' इति वचनस्य नास्त्यावश्यकता।

**मूलग्रन्थपाठो व्याख्या च**

**अथोभस्य सर्वनामत्वे कोऽर्थः?**

**(वा.) उभस्य सर्वनामत्वेऽकजर्थः**

**उभस्य सर्वनामत्वेऽकजर्थः पाठः क्रियते। उभकौ।। किमुच्यतेऽकजर्थ इति। न पुनरन्यान्यपि सर्वनामकार्याणि?।।**

**(वा.) अन्याभावो द्विवचनटाब्विषयत्वात्**

**अन्येषां सर्वनामकार्याणामभावः।। किं कारणम्?**

**द्विवचनटाब्विषयत्वात्। उभशब्दोऽयं द्विवचनटाब्विषयः। अन्यानि च सर्वनामकार्याण्येकवचनबहुवचनेषूच्यन्ते।**

**व्याख्या–** अथेति-सर्वादिगणे उभशब्दस्य पाठेन तस्य सर्वनामसंज्ञा भवति। सर्वनामकार्यं च सुब्विभक्तौ एकवचने तथा बहुवचने एव दृश्यते। एकवचने, बहुवचने च उभशब्दस्य प्रयोगः कुत्रापि न दृश्यते। अतः अत्र प्रश्नः कृतः अथोभस्य सर्वनामत्वे = सर्वनामसंज्ञार्थं यः सर्वादिगणे पाठः कृतः, तस्य कोऽर्थः = किं प्रयोजनमित्यर्थः।

उभस्येति। उभस्य सर्वनामसंज्ञार्थं सर्वादिगणे यः पाठः कृतः, तस्य प्रयोजनमस्ति उभशब्दात् सर्वनामत्वात् अकच्प्रत्ययोत्पत्तिः। तेन उभकौ इति सिद्ध्यति।

अत्र जिज्ञासा क्रियते यत् उभशब्दस्य सर्वादिगणे पाठः अकजर्थः कृतः, इत्येव कथमुच्यते। अन्यान्यपि सर्वनामकार्याणि अस्य पाठस्य प्रयोजनत्वेन कथं न कथ्यन्ते।

उभशब्दस्य प्रयोगः केवलं द्विवचने, टापि एव भवति। अन्यानि = अकचं विहाय अन्यानि सर्वनामकार्याणि एकवचने, बहुवचने एव भवन्ति। अतः उभशब्दस्य सर्वादिगणे पाठस्य केवलम् अकच्-प्रत्यये एव प्रयोजनमुक्तम्।

**मूलग्रन्थपाठः**

**यदा पुनरयमुभशब्दो द्विवचनटाब्विषयः। क इदानीमस्यान्यत्र भवति? ॥**

**(वा.) उभयोऽन्यत्रेति**

**उभशब्दोऽस्यान्यत्र भवति। उभये देवमनुष्याः, उभयो मणिरिति। किं च स्याद् यद्यत्राकच् न स्यात्?॥ कः प्रसज्येत॥**

**कश्चेदानीं काकचोर्विशेषः?॥**

**व्याख्या–** उभशब्दस्य द्विवचनटाब्विषयत्वस्वीकारे अत्र जिज्ञासा क्रियते यत् अन्यत्र = यत्र द्विवचनं नास्ति, न च आप्प्रत्ययः, तत्र अस्य = उभशब्दस्य कृते कः शब्दः भवति = कस्य शब्दस्य प्रयोगो भवतीत्यर्थः।

अन्यत्र द्विवचनटाब्विषयत्वाभावस्थले, अस्य = उभशब्दस्य कृते उभयशब्दः भवति अर्थात् उभयशब्दस्य प्रयोगो भवति। तद्यथा– उभये देवमुनष्याः, उभयो मणिः इत्यत्र उभशब्दस्य कृते उभयशब्दस्य प्रयोगो दृश्यते।

सर्वादिगणे उभशब्दस्य पाठाभावे सर्वनामसंज्ञा न स्यात्, सर्वनामसंज्ञाया अभावे च अज्ञातौ उभौ इत्यर्थे प्रयुज्यमाने 'उभकौ' इति प्रयोगे अकच् प्रत्ययो न स्यात् इति समाधानं कृतं पूर्वम्। तत्रेयं जिज्ञासा क्रियते यत् यदि अकच् प्रत्ययः न स्यात्, तदा अकच्प्रत्ययस्य प्रसङ्गे किं स्यात्? अर्थात् कस्य प्रत्ययस्य प्रवृत्तिः स्यात्।

उभशब्दस्य सर्वनामत्वाभावे अकच्प्रत्ययस्य प्रसङ्गे कप्रत्ययस्य प्रवृत्तिः स्यादित्यर्थः।

कप्रत्ययेऽपि उभकौ इति रूपम्, अकच्प्रत्ययेऽपि तदेव रूपं सम्भवति इति मत्वा पृच्छति कश्चेदानीमिति। विशेषः = भेदः।

**मूलग्रन्थपाठः**

**'उभशब्दोऽयं द्विवचनटाब्विषयः' इत्युक्तम्। तत्राकचि सत्यकचस्तन्मध्य-पतितत्वाच्छक्यते एतद् वक्तुं- द्विवचनपरोऽयमिति। के पुनः सति नायं द्विवचनपरः स्यात्। तत्र द्विवचनपरता वक्तव्या।**

**यथैव तर्हि के सति नायं द्विवचनपरः, एवमाप्यपि सति नायं द्विवचनपरः स्यात्। तत्रापि द्विवचनपरता वक्तव्या॥**

**व्याख्या–** उपरि कृतायाः जिज्ञासायाः समाधानं वक्ति– 'उभशब्दोऽयमिति। तत्र = काकचोः। अकचि सति = अज्ञातौ उभौ इत्यर्थे उभशब्दस्य अकच्प्रत्यये सति तन्मध्यपतितन्यायेन उभशब्देन उभकशब्दस्यापि ग्रहणात् उभक औ इत्यवस्थायाम् एतद् वक्तुं शक्यते– द्विवचनपरोऽयम् उभशब्दः। के पुनरिति– कप्रत्यये तु उभशब्दो द्विवचनपरो न भविष्यति। द्विवचनपरत्वाभावे च उभशब्दस्य स्थाने उभयशब्दस्य प्रयोगापत्तिः स्यात्। अतस्तद्वारणाय ''कप्रत्ययेन व्यवधानेऽपि उभशब्दो द्विवचनपरः कथ्यते'' इत्येवं वचनस्यावश्यकता स्यात्, येन हि गौरवं भविष्यति इत्याशयः।

अत्र आक्षेपं करोति– यथैव तर्हीति। अस्याऽऽक्षेपस्य अयमाशयः– 'अन्याभावो द्विवचनटाब्विषयत्वात्' इति वार्तिके टापोऽपि ग्रहणात् कप्रत्यये इव टापि उभयशब्दस्य प्रयोगो न प्राप्स्यति, किन्तु टापि कृते सिद्धेन 'उभा' इति शब्देन उभशब्दस्याऽग्रहणात् उभाशब्दस्य

प्रयोगः एकवचने, बहुवचने अपि प्राप्स्यति, अतः एतदपि वक्तव्यं स्यात् यत्- 'उभाशब्दोऽपि द्विवचनपरः एव प्रयुज्यते' इति।

**मूलग्रन्थपाठः**

**(वा.) अवचनादापि तत्परविज्ञानम्**

**अन्तरेणापि वचनमापि द्विवचपरोऽयं भविष्यति॥**

**किं वक्तव्यमेतत्?॥ नहि॥ कथमनुच्यमानं गंस्यते?॥ एकादेशे कृते द्विवचनपरोऽयमन्तादिवद्भावेन॥**

**व्याख्या–** उक्तजिज्ञासायाः समाधानाय भाष्ये उक्तं यत् अन्तरेणापि वचनम् आपि कृतेऽपि उभशब्दः द्विवचनपरः एव प्रयुक्तो भविष्यति।

किम् एतत् = आपि कृतेऽपि उभशब्दः द्विवचनपरः एव प्रयोक्ष्यते इति वचनं वक्तव्यं स्यात् किम्?

नहि = आपि कृतेऽपि उभशब्दः द्विवचनरः एव प्रयोक्ष्यते इति वचनं न वक्तव्यं स्यादित्यर्थः।

कथम् अनुच्यमानं गंस्यते = ज्ञास्यते। आपि कृतेऽपि उभशब्दः द्विवचनपरः एव प्रयुज्यते इति ज्ञानं कथं भविष्यति? इत्यर्थः।

एकादेशे कृते = उभ आ इत्यवस्थायाम् 'अकः सवर्णे दीर्घः' इति सूत्रेण सवर्णदीर्घैकादेशे कृते, अयम् = उभाशब्दः उभशब्देन ग्रहीष्यते। द्विवचनपर इति- अतः अयमपि द्विवचपरः एव प्रयोक्ष्यते। अन्तादिवद्भावेनेति – 'अन्तादिवच्च' इति सूत्रेण।

**बोधप्रश्नः**

१. उभस्य सर्वनामत्वे कोऽर्थः इति प्रश्नस्य भाष्ये किमुत्तरं प्रदत्तम्?

२. अकच्प्रत्ययार्थ एव उभशब्दस्य सर्वादिगणे पाठः कृतः इति किममर्थमुच्यते?

३. अकच्प्रत्ययाभावे उभशब्दात् स्वार्थे कः प्रत्ययः स्यात्? का च तत्राऽऽपत्तिः?

४. कप्रत्ययेऽपि द्विवचनपरत्वं कथं साधितमुभशब्दस्य भाष्यकारेण?

### ९.३.३ सर्वादिगणे उभशब्दपाठस्य प्रत्याख्यानम्

सर्वादिगणे उभशब्दस्य च पाठः कृतः, तस्य प्रयोजनमुक्तम्- अकच्प्रत्यये कृते उभकौ इति रूपस्य सिद्धिः। अस्य रूपस्य सिद्धिस्तु कप्रत्ययेनापि भवितुमर्हति। न च कप्रत्यये कृते केन व्यवधानात् द्विवचनपरत्वाभावेन उभशब्दस्य स्थाने उभयशब्दस्य प्रयोगापत्तिरिति वाच्यम्, यथा विनापि वचनेन टापि पूर्वान्तवद्भावेन उभशब्देन टाबन्तस्य उभाशब्दस्यापि ग्रहणेन तस्य प्रयोगः एकवचने, बहुवचने च न भवति, तथैव कप्रत्ययेऽपि 'स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्ति' इति सिद्धान्तेन उभशब्देन कप्रत्ययविशिष्टस्य उभकशब्दस्यापि ग्रहणात् 'उभ क औ' इत्यवस्थायां द्विचनपरत्वात् उभशब्दस्य स्थाने उभयशब्दस्य प्रयोगं वारयितुं शक्यते।

### ९.३.४ भवतः सर्वनामत्वे प्रयोजनानि

सर्वादिगणे भवच्छब्दस्यापि पाठो दृश्यते। भवच्छब्दश्च अदन्तो नास्ति।

सर्वनामसंज्ञाप्रयुक्तानि स्मै, स्मात् इत्यादिकार्याणि अदन्तेष्वेव सर्वनामसंज्ञकेषु शब्देषु दृश्यन्ते। 'त्यदादीनामः' इत्यनेन अत्वमपि अत्र न भवति, येन भवच्छब्दः त्यदादिवत् अदन्तः स्यात्, द्विपर्यन्तानामेव त्यदादित्वस्येष्टत्वात्। अतः अत्र जिज्ञासा भवति यत्– अथ भवतः सर्वनामत्वे कानि प्रयोजनानि? इति।

उक्तजिज्ञासायाः समाधानाय भाष्ये उक्तं यत्– 'भवतोऽकच्छेषात्वानि' इति। समाधानस्यायमाशयः– भवतः सर्वनामसंज्ञाकारणात् तत्र त्रीणि कार्याणि भवन्ति–

(१) अकच् (२) शेषः अर्थात् एकशेषः (३) आत्वं च।

एतेषां विवरणम्– (१) अकच्– 'भवकान्' इत्यत्र सर्वनामत्वेन 'अव्ययसर्वनाम्नामकच् प्राक् टेः' इति सूत्रेण अकच्प्रत्ययो भवति।

(२) शेषः– शेषपदेनात्र एकशेषस्य ग्रहणम्। भवतः सर्वनामत्वेन स च (देवदत्तश्च) भवान् च इति विग्रहे 'त्यदादीनि सर्वैर्नित्यम्' इति सूत्रेण भवच्छब्दस्यैकशेषो भवति। तेन 'भवन्तौ' इति रूपं सिद्ध्यति।

(३) आत्वम्– भवतः सर्वनामत्वेन 'भवादृक्' इत्यत्र 'भवत् दृश्' इत्यवस्थायाम् 'आ सर्वनाम्नः' इति सूत्रेण भवच्छब्दस्य आकारान्तादेशो भवति।

'भवतोऽकच्छेषात्वानि' इति कथनेन आपाततः प्रतीयते यत् भवच्छब्दस्य सर्वनामत्वे एतान्येव प्रयोजनानि न त्वन्यान्यपि। अतः अत्र जिज्ञासा कृता यत् 'भवतोऽकच्छेषात्वानि' इति वार्तिकेन प्रयोजनानां परिगणनं कृतं विद्यते, अथवा तद्वार्तिकेन उदाहरणमात्रं प्रदर्शितम्?

समाधानम्– तद्वार्तिकेन उदाहरणमात्रं प्रदर्शितम्। यतो हि भवतः सर्वनामत्वे अन्यान्यपि प्रयोजनानि दृश्यन्ते। तद्यथा– भवता हेतुना, भवतोः हेत्वोः इत्यादौ 'सर्वनाम्नस्तृतीया च' इति सूत्रेण तृतीयाविभक्तिः दृश्यते। भवान् मित्रं यस्य स भवन्मित्रः इत्यत्र 'बहुव्रीहौ सर्वनामसंख्ययोरुपसंख्यानम्' इति वार्तिकेन भवच्छब्दस्य पूर्वप्रयोगो भवति। भवत्याः पुत्रः भवत्पुत्रः इत्यत्र 'सर्वनाम्नो वृत्तिमात्रे पुवंद्भावो वक्तव्यः' इति वार्तिकेन पुंवद्भावो दृश्यते।

एवं हि भवच्छब्दस्य सर्वनामत्वे अकच्छेषात्वान्यतिरिक्तान्यपि बहूनि प्रयोजनानि दृश्यन्ते। अतः 'भवतोऽकच्छेषात्वानि' इति तद्वार्तिकेन उदाहरणमात्रं प्रदर्शितम् इति स्वीकार्यम्।

**मूलग्रन्थपाठः**

**॥ अवचनादापि तत्परविज्ञानमिति चेत्केऽपि तुल्यम् ॥**

**अवचनादापि तत्परविज्ञानमिति चेत्केऽपि अन्तरेण द्विवचनपरो भविष्यति॥ कथम्? 'स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्ति' इति प्रकृतिग्रहणेन स्वार्थिकानामपि ग्रहणं भवति॥**

**व्याख्या–** अवचनादापीति। अयमाशयः– यथा विनापि वचनेन टापि पूर्वान्तवद्भावेन उभशब्देन टाबन्तस्य उभाशब्दस्यापि ग्रहणेन तस्य प्रयोगः एकवचने, बहुवचने च न भवति, तथैव कप्रत्ययेऽपि 'स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्ति' इति सिद्धान्तेन उभशब्देन कप्रत्ययविशिष्टस्य उभकशब्दस्यापि ग्रहणात् 'उभ क औ' इत्यवस्थायाम् द्विवचपरत्वात् उभशब्दस्य स्थाने उभयशब्दस्य प्रयोगो न भविष्यति। एवं हि अनावश्यकतां प्रदर्श्य सर्वादिगणे उभशब्दस्य कृतः पाठः प्रत्याख्यातो भाष्यकारेण।

**मूलग्रन्थपाठः**

**अथ भवतः सर्वनामत्वे किं प्रयोजनम्? ॥ भवतोऽकच्छेषाऽऽत्वानि ॥**

**भवतोऽकच्छेषाऽऽत्वानि प्रयोजनानि॥ अकच् - भवकान्॥ शेषः - स च भवांश्च भवन्तौ॥ आत्वम्-भवादृक्॥**

**किं पुनरिदं परिगणनम्, आहोस्विदुदाहरणमात्रम्?॥ उदाहरणमात्रमित्याह। तृतीयादयोऽपि दृश्यन्ते। 'सर्वनाम्नस्तृतीया च' भवता हेतुना, भवतो हेतोरिति। ।सर्वादीनि॥२७॥**

**व्याख्या–** सर्वनामसंज्ञाप्रयुक्तं कार्यं प्रायेण अदन्तेषु एव शब्देषु दृश्यते– तद्यथा– जसः शी, सर्वनाम्नः स्मै इत्यादि। भवच्छब्दश्च तकारान्तः, न तु अदन्तः। अतः प्रश्नः क्रियते–अथ भवत इति।

अनेन ग्रन्थेन भवच्छदस्य सर्वनामसंज्ञायाः त्रीणि प्रयोजनानि प्रदर्शितानि, अकच्प्रत्ययः, एकशेषः, आत्वं च।

भवच्छब्दस्य सर्वनामसंज्ञायां त्रीण्येव प्रयोजनानि सन्ति अथवा अन्यान्यपि इति स्पष्टीकरणाय जिज्ञासा क्रियते– किं पुनरिदमिति। उपरि प्रदर्शितग्रन्थेन प्रयोजनानां परिगणनं कृतं विद्यते, उदाहरणरूपेण कानिचिदेव प्रयोजनानि प्रदर्शितानि?

अत्र समाधानं प्रस्तौति भाष्यकारः उदाहरणमात्रमिति। अयमाशयः– यतो हि भवतः सर्वनामत्वे अन्यान्यपि प्रयोजनानि दृश्यन्ते। तद्यथा– भवता हेतुना, भवतोः हेत्वोः इत्यादौ 'सर्वनाम्नस्तृतीया च' इति सूत्रेण तृतीयाविभक्तिः दृश्यते। भवान् मित्रं यस्य स भवन्मित्रः इत्यत्र 'बहुव्रीहौ सर्वनामसंख्ययोरुपसंख्यानम्' इति वार्तिकेन भवच्छब्दस्य पूर्वप्रयोगो भवति। भवत्याः पुत्रः भवत्पुत्रः इत्यत्र 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वक्तव्यः' इति वार्तिकेन पुवंद्भावो दृश्यते। अतः 'भवतोऽकच्छेषात्वानि' इति वार्तिकेन प्रयोजनानाम् उदाहरणमात्रं प्रदर्शितं न तु प्रयोजनानां परिगणनं कृतमिति स्वीकार्यम्।

**बोधप्रश्नः**

५. स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्तीत्यस्य कोऽर्थः?

६. भवतः सर्वनामत्वे कानि प्रयोजनानि प्रदर्शितानि भाष्ये?

### ९.३.८ निष्कर्षः

अस्मिन् पाठ्यांशे सर्वादिगणे उभशब्दस्य, भवच्छब्दस्य च प्रयोजनविषये महाभाष्यानुसारेण विचारः कृतः।

तत्र प्रथमम् उभशब्दस्य प्रयोजनमुक्तं– अकच्प्रत्यये कृते 'उभकौ' इति रूपसिद्ध्यर्थम् उभशब्दस्य पाठः सर्वादिगणे क्रियते। तत्र कप्रत्यये कृते द्विवचनपरत्वाभावेन यथा उभशब्दस्य स्थाने उभयशब्दस्य प्रयोगेण उभयतः, उभयत्र इत्यादिप्रयोगा भवन्ति, तथैव 'उभयकौ' इत्यनिष्टप्रयोगापत्तिः स्यात्। अकचि तु तन्मध्यपतितन्यायेन उभशब्देन उभकशब्दस्यापि ग्रहणेन तस्य द्विवचनपरत्वेन च उभशब्दस्य स्थाने उभयशब्दस्य प्रयोगो न भवति।

अन्ते 'स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्ति' इति वचनानुसारेण कप्रत्ययविशिष्टस्यापि उभकशब्दस्य 'उभ क औ' इत्यवस्थायाम् द्विवचनपरत्वस्वीकारेण तत्रापि उभयशब्दस्य प्रयोगो न भविष्यति। एवं हि कप्रत्ययेऽपि उभकौ इति रूपं सिद्धं भविष्यत्येव। अतः सर्वादिगणे उभशब्दस्य पाठः प्रत्याख्यातो भाष्ये।

भवच्छब्दस्य सर्वनामत्वे 'अकच्छेषात्वानि' इति त्रीणि प्रयोजनानि उदाहरणरूपेण उक्तानि भाष्ये। एतानि प्रयोजनानि उदाहरणरूपेण प्रदर्शितानि वार्तिककारेण, न तु परिगणनरूपेण। यतो हि भवच्छब्दस्य अन्यान्यपि प्रयोजनानि दृश्यन्ते।

अथोभस्य सर्वनामत्वे कोऽर्थः इत्यारभ्य विभाषादिक्समासे इति यावत्

## ९.४ विभाषा दिक्समासे बहुव्रीहौ ॥१.१.२७॥

### ९.४.१ सूत्रविमर्शः

'विभाषा दिक्समासे बहुव्रीहौ' इति पदत्रयात्मकं सूत्रम्। दिक्समासः इति समस्तं पदम्, दिशां समासः इति विग्रहे षष्ठीतत्पुरुषसमासोऽत्र। सूत्रेऽस्मिन् 'सर्वादीनि सर्वनामानि' इति सम्पूर्णसूत्रमनुवर्तते। अतः सूत्रस्यार्थो भवति -

दिशावाचकशब्दानां यो बहुव्रीहिसमासः तत्र वर्तमानानि सर्वादीनि विभाषा सर्वनामसंज्ञकानि भवन्ति। उदाहरणम्- उत्तरस्याः, पूर्वस्याश्च दिशयोर्यदन्तरालं सा उत्तरपूर्वा दिक्, तस्यै उत्तरपूर्वस्यै, उत्तरपूर्वायै वा। एवमेव दक्षिणपूर्वस्यै, दक्षिणपूर्वायै वा।

विकल्पेनात्र सर्वनामसंज्ञाविधानात् सर्वनामसंज्ञापक्षे 'सर्वनाम्नः स्याड्ढ्रस्वश्च' इति सूत्रेण स्याडागमे, आपो ह्रस्वे च कृते उत्तरपूर्वस्यै, दक्षिणपूर्वस्यै इत्यादीनि रूपाणि सिद्ध्यन्ति। सर्वनामसंज्ञाया अभावपक्षे च 'याडापः' इति सूत्रेण याडागमे कृते उत्तरपूर्वायै, दक्षिणपूर्वायै इत्यादीनि रूपाणि सिद्ध्यन्ति।

यदि इदं सूत्रं न स्यात्तर्हि 'प्रियविश्वाय' इत्यादाविव 'उत्तरपूर्वस्यै' इत्यादावपि 'न बहुव्रीहौ' इति सूत्रेण सर्वनामसंज्ञायाः निषेधः स्यात्। अतः सूत्रमिदं 'न बहुव्रीहौ' इति सूत्रस्यापवादसूत्रम्।

अत्र दिक्समासशब्देन 'दिङ्नामान्यन्तराले' इति सूत्रेण प्रतिपदोक्तो दिक्समासो गृह्यते। तेनेह न भवति- या पूर्वा सैवोत्तरा यस्य भ्रान्तस्य तस्मै पूर्वोत्तराय देहि।

### ९.४.२ सूत्रे स्थितानां पदानां प्रयोजनप्रदर्शनम्

'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे 'दिग्ग्रहणं किमर्थम्?' इति प्रश्नद्वारा दिग्ग्रहणं निरर्थकमित्याक्षेपः कृतः। प्रश्नस्यायमाशयः- सूत्रे दिग्ग्रहणाभावेऽपि बहुव्रीहिसमासे सर्वादीनां सर्वनामसंज्ञाविषये सूत्रद्वयं भविष्यति- 'विभाषा दिक्समासे बहुव्रीहौ' इत्येकं सूत्रम्, 'न बहुव्रीहौ' इति च द्वितीयं सूत्रम्। तत्र प्रथमसूत्रेण बहुव्रीहौ सर्वादीनां विकल्पेन सर्वनामसंज्ञा प्राप्स्यति, द्वितीयसूत्रेण सर्वनामसंज्ञायाः प्रतिषेधः प्राप्स्यति। एकस्मिन्नेव विषये विकल्प-प्रतिषेधयोरसम्भवात् सामर्थ्यात् लक्ष्यानुसारेण विषयभेदः स्वीकरिष्यते। तत्र लक्ष्यानुसारेण दिक्समासे बहुव्रीहौ सर्वादीनां विकल्पेन सर्वनामसंज्ञा भविष्यति, अन्यस्मिन् बहुव्रीहौ तु सर्वादीनां सर्वनामसंज्ञायाः निषेधो भविष्यति।

एवं हि लक्ष्यानुसारेणैव विषयभेदे सम्भवे सूत्रे दिग्ग्रहणमनर्थकम्। अतः प्रश्नः क्रियते- दिग्ग्रहणं किमर्थम् इति।

समाधानम्- कुत्र विकल्पेन सर्वनामसंज्ञा, कुत्र च सर्वनामसंज्ञायाः निषेध : इति विषयभेदस्य ज्ञानं लक्ष्यैकचक्षुष्काणां योगिनां विनाऽपि वचनं भवितुमर्हति, न त्वस्मादृशानां लक्षणैकचक्षुष्काणाम्। दिग्ग्रहणे कृते तु विषयभेदज्ञानं सुलभं भविष्यति यत् दिगुपदिष्टे बहुव्रीहौ समासे सर्वादीनां विकल्पेन सर्वनामसंज्ञा, अन्यस्मिन् बहुव्रीहौ तु सर्वादीनां सर्वनामसंज्ञायाः निषेधः। अतः विषयभेदाऽज्ञानरूपो दोषो मा भूदित्यर्थं सूत्रे दिग्ग्रहणमावश्यकम्।

समासग्रहणस्य प्रयोजनम्- बहुव्रीहित्वस्य समासत्वव्याप्यत्वाद् 'बहुव्रीहौ' इति कथनेनैव समासलाभात् 'विभाषा दिक्समासे बहुव्रीहौ इति सूत्रे समासग्रहणमधिकं प्रतीयते। अतः अत्र आक्षेपः कृतः 'समासग्रहणं किमर्थम्? इति।

समाधानम्- समास एव यो बहुव्रीहिस्तत्रैव अस्य प्रवृत्तिर्भवतु न तु बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्रापि इत्यर्थं 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे समासग्रहणमावश्यकम्। तेन 'दक्षिणदक्षिणस्यै' इत्यत्र 'पीडायां द्योत्यायां सर्वस्य पदस्य द्वे स्तो बहुव्रीहिवद्भावश्च' इत्यर्थकेन 'आबाधे च' इति सूत्रेण 'दक्षिणस्यै' इति पदस्य द्वित्वं, बहुव्रीहिवद्भावश्च। बहुव्रीहिवद्भावेन द्वित्वे कृते दक्षिणस्यै दक्षिणस्यै इति पदस्य बहुव्रीहिवद्भावेन प्रातिपदिकसंज्ञा, सुपो लुक्, पूर्वपदस्य पुवंद्भावः, पुनः सुबुत्पत्तौ दक्षिणदक्षिणस्यै इति पदं सिद्ध्यति।

एवं हि मुख्यस्यैव बहुव्रीहेर्ग्रहणं भवतु, न तु आरोपितस्यापि इत्यर्थं सूत्रे समासग्रहणमावश्यकम्।

आक्षेपः- 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे बहुव्रीहिग्रहणस्य प्रत्याख्यानाय भाष्यकारेण प्रथमं प्रश्नः उत्थापितो यत् 'अथ बहुव्रीहिग्रहणं किमर्थम्? इति।

बहुव्रीहेः प्रयोजनकथनम्- सूत्रे बहुव्रीहिग्रहणाभावे सूत्रस्यार्थो भविष्यति- दिग्वाचकानां शब्दानां यः समासस्तत्र सर्वादीनां सर्वनामसंज्ञा विकल्पेन भवति इति। एवं हि यथा- 'उत्तरपूर्वस्यै, उत्तरपूर्वायै वा देहि' इत्यत्र बहुव्रीहाविव 'दक्षिणोत्तरपूर्वाणाम्' इत्यत्र द्वन्द्वसमासेऽपि विकल्पेन सर्वनामसंज्ञाया आपत्तिः स्यात्। अतः 'दक्षिणोत्तरपूर्वाणाम्' इत्यत्र विकल्पेन सर्वनामसंज्ञा मा भूदित्यर्थं सूत्रे बहुव्रीहिग्रहणमावश्यकम्।

प्रयोजनस्य अन्यथासिद्धिप्रदर्शनम्- 'विभाषा दिक्समासे बहुव्रीहौ' इति बहुव्रीहिग्रहणाभावे 'दक्षिणोत्तरपूर्वाणाम्' इत्यत्र 'विभाषा दिक्समासे' इति सूत्रेण विकल्पेन सर्वनामसंज्ञा प्राप्स्यते, 'द्वन्द्वे च' इति सूत्रेण सर्वनामसंज्ञायाः निषेधश्च। तत्र परत्वात् निषेध एव भविष्यति, न तु विकल्पेन सर्वनामसंज्ञा। अतः 'दक्षिणोत्तरपूर्वाणाम्' इत्यत्र विकल्पेन सर्वनामसंज्ञायाः वारणम् अन्यथासिद्धम्। अतः सूत्रे बहुव्रीहिग्रहणं निरर्थकम्।

बहुव्रीहेः पुनः प्रयोजनप्रदर्शनम्- 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे बहुव्रीहिग्रहणाभावे दिग्वाचकानां यदि बहुव्रीहिसमासः क्रियते तर्हि 'न बहुव्रीहौ' इति सूत्रेण सर्वनामसंज्ञायाः प्रतिषेधः प्राप्नोति, यदि च द्वन्द्वसमासः क्रियते तर्हि 'द्वन्द्वे' च इति सूत्रेण प्रतिषेधः प्राप्नोति। एवं हि दिग्वाचकानां समासे कृते प्रतिषेधस्य अवश्यप्राप्तौ 'विभाषा दिक्समासे' इति इति सूत्रमारभ्यते। अतः 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' इति परिभाषया सूत्रमिदं न बहुव्रीहौ इति सूत्रेण प्राप्तस्यापि प्रतिषेधस्य बाधकं भविष्यति, 'द्वन्द्वे' 'च' इति सूत्रेण प्राप्तस्यापि प्रतिषेधस्य। अतः 'दक्षिणोत्तरपूर्वाणाम्' इत्यत्र द्वन्द्वसमासे विकल्पेन सर्वनामसंज्ञा मा भूदित्यर्थं सूत्रे बहुव्रीहिग्रहणमावश्यकम्।

प्रयोजनकथनस्य निराकरणम्- येन नाप्राप्तन्यायेन तस्य सूत्रस्य बाधनं भवति, यस्य सूत्रस्य बाधकसूत्राणां सर्वेषु विषयेषु अवश्यप्राप्तिर्भवति। दिग्वाचकानां शब्दानां समासस्थले तु 'न बहुव्रीहौ' इत्यस्यैव प्रतिषेधस्य अवश्यप्राप्तिरस्ति, न तु 'द्वन्द्वे च' इति सूत्रेण प्राप्तस्यापि प्रतिषेधस्य। यतो हि द्वन्द्वसमासे 'विभाषा जसि' इति सूत्रेण विकल्पेनापि सर्वनामसंज्ञाया विधानेन जस्विषये 'दक्षिणोत्तरपूर्वाः' इत्यत्र 'विभाषा दिक्समासे' इत्यस्य प्राप्तिर्भविष्यति, 'द्वन्द्वे च' इत्यस्य तु न। एवं बाधकसूत्रस्य ये ये विषयाः तेषु सर्वेषु 'द्वन्द्वे च' इति प्रतिषेधस्य अवश्यप्राप्तिर्नास्ति। अतः 'विभाषा दिक्समासे' इति सूत्रं 'द्वन्द्वे च' इत्यस्य बाधकं न भविष्यति। एवं हि 'दक्षिणोत्तरपूर्वाणाम्' इत्यत्र 'द्वन्द्वे च' इति सूत्रेण

प्रतिषेधः भविष्यत्येव। अतः 'दक्षिणोत्तरपूर्वाणाम्' इत्यत्र 'विभाषा दिक्समासे' इति सूत्रस्याप्रवृत्तिर्भवतु इति बहुव्रीहिग्रहणस्य प्रयोजनं न भवितुमर्हति।

अथोभस्य सर्वनामत्वे कोऽर्थः इत्यारभ्य विभाषादिक्समासे इति यावत्

**मूलग्रन्थपाठो व्याख्या च**

**विभाषा दिक्समासे बहुव्रीहौ।। दिग्ग्रहणं किमर्थम्?**

**'न बहुव्रीहौ' इति प्रतिषेधं वक्ष्यति। तत्र न ज्ञायते- 'क्व विभाषा, क्व प्रतिषेध' इति। दिग्ग्रहणे पुनः क्रियमाणे न दोषो भवति- 'दिगुपदिष्टे विभाषा, अन्यत्र प्रतिषेधः।।**

**व्याख्या**- 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे 'दिग्ग्रहणं किम्? इति प्रश्नद्वारा दिग्ग्रहणं निरर्थकमित्याक्षेपः कृतः। प्रश्नस्यायमाशयः- सूत्रे दिग्ग्रहणाभावेऽपि बहुव्रीहिसमासे सर्वादीनां सर्वनामसंज्ञाविषये सूत्रद्वयं भविष्यति- 'विभाषा दिक्समासे बहुव्रीहौ' इत्येकं सूत्रम्, 'न बहुव्रीहौ' इति च द्वितीयं सूत्रम्। तत्र प्रथमसूत्रेण बहुव्रीहौ सर्वादीनां विकल्पेन सर्वनामसंज्ञा प्राप्स्यति, द्वितीयसूत्रेण सर्वनामसंज्ञायाः प्रतिषेधः प्राप्स्यति। एकस्मिन्नेव विषये विकल्पप्रतिषेधयोरसम्भवात् सामर्थ्यात् लक्ष्यानुसारेण विषयभेदः स्वीकरिष्यते। तत्र लक्ष्यानुसारेण दिक्समासे बहुव्रीहौ सर्वादीनां विकल्पेन सर्वनामसंज्ञा भविष्यति, अन्यस्मिन् बहुव्रीहौ तु सर्वादीनां सर्वनामसंज्ञायाः निषेधो भविष्यति।

एवं हि लक्ष्यानुसारेणैव विषयभेदे सम्भवे सूत्रे दिग्ग्रहणमनर्थकम्। अतः प्रश्नः क्रियते दिग्ग्रहणं किमर्थम् इति।

विना वचनेन अभिमतो विषयभेदो न लब्धुं शक्यते। अतः क्व विभाषा, क्व च प्रतिषेधो भवेदिति विषयभेदनिधार्रणार्थं सूत्रे दिग्ग्रहणमावश्यकम्।

**मूलग्रन्थपाठः**

**अथ समासग्रहणं किमर्थम्? समास एव यो बहुव्रीहिस्तत्र यथा स्याद्, बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्र मा भूदिति। दक्षिणदक्षिणस्यै देहि।।**

**अथ बहुव्रीहिग्रहणं किमर्थम्? द्वन्द्वे मा भूत् दक्षिणोत्तरपूर्वाणामिति।।**

**व्याख्या**- बहुव्रीहित्वस्य समासत्वव्याप्यत्वात् 'बहुव्रीहौ' इति कथनेनैव समासलाभसम्भवे सूत्रे समासग्रहणमधिकं प्रतीयते इति प्रश्नः कृतः-अथ समासग्रहणं किमर्थमिति।

अत्रोच्यते- समास एवेति। मुख्यस्यैव बहुव्रीहिसमासस्य ग्रहणं भवतु न तु बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तस्यापि इति बोधनाय सूत्रे बहुव्रीहिग्रहणमावश्यकम्। तेन दक्षिणदक्षिणस्यै इत्यत्र अस्य सूत्रस्य प्रवृत्तिर्न भवति। दक्षिणदक्षिणस्यै इत्यत्र 'आबाधे च' इति सूत्रेण द्विर्वचनम्, बहुव्रीहिवद्भावश्च।

'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे बहुव्रीहिग्रणस्य प्रत्याख्यानाय भाष्यकारेण प्रथमं प्रश्नः उत्थापितो यत् 'अथ बहुव्रीहिग्रहणं किमर्थम्? इति।

सूत्रे बहुव्रीहिग्रहणाभावे सूत्रस्यार्थो भविष्यति- दिग्वाचकानां शब्दानां यः समासस्तत्र सर्वादीनां सर्वनामसंज्ञा विकल्पेन भवति इति। एवं हि 'उत्तरपूर्वस्यै, उत्तरपूर्वायै वा देहि' इत्यत्र बहुव्रीहाविव 'दक्षिणोत्तरपूर्वाणाम्' इत्यत्र द्वन्द्वसमासेऽपि विकल्पेन सर्वनामसंज्ञायाः आपत्तिः स्यात्। अतः 'दक्षिणोत्तरपूर्वाणाम्' इत्यत्र विकल्पेन सर्वनामसंज्ञा मा भूदित्यर्थं सूत्रे बहुव्रीहिग्रहणमावश्यकम्।

**मूलग्रन्थपाठः**

**नैतदस्ति प्रयोजनम् । 'द्वन्द्वे च' इति प्रतिषेधो भविष्यति॥**

**नाप्राप्ते प्रतिषेधे इयं विभाषा आरभ्यते। सा यथैव 'न बहुव्रीहौ' इत्येतं प्रतिषेधं बाधते, एवं 'द्वन्द्वे च' इत्येतमपि बाधेत॥ न बाधते॥ किं कारणम्?॥**

**येन नाप्राप्ते तस्य बाधनं भवति। न चाप्राप्ते 'न बहुव्रीहौ' इत्येतस्मिन् प्रतिषेधे इयं विभाषा आरभ्यते। 'द्वन्द्वे च' इत्येतस्मिन् पुनः प्राप्ते चाप्राप्ते च॥**

**व्याख्या–** 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे बहुव्रीहिग्रहणाभावे 'दक्षिणोत्तरपूर्वाणाम्' इत्यत्र 'विभाषा दिक्समासे' इति सूत्रेण विकल्पेन सर्वनामसंज्ञा प्राप्स्यति, 'द्वन्द्वे च' इति सूत्रेण सर्वनामसंज्ञायाः निषेधश्च। तत्र परत्वात् निषेध एव भविष्यति, न तु विकल्पेन सर्वनामसंज्ञा। अतः 'दक्षिणोत्तरपूर्वणाम्' इत्यत्र विकल्पेन सर्वनामसंज्ञायाः वारणम् अन्यथासिद्धम्। अतः सूत्रे बहुव्रीहिग्रहणं निरर्थकम्।

'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे बहुव्रीहिग्रहणाभावे दिग्वाचकानां यदि बहुव्रीहिसमासः क्रियते तर्हि 'न बहुव्रीहौ' इति सूत्रेण सर्वनामसंज्ञायाः प्रतिषेधः प्राप्नोति, यदि च द्वन्द्वसमासः क्रियते तर्हि 'द्वन्द्वे च' इति सूत्रेण प्रतिषेधः प्राप्नोति। एवं हि दिग्वाचकानां समासे कृते प्रतिषेधस्य अवश्यप्राप्तौ 'विभाषा दिक्समासे' इति सूत्रमारभ्यते। अतः 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' इति परिभाषया सूत्रमिदं 'न बहुव्रीहौ' इति सूत्रेण प्राप्तस्यापि प्रतिषेधस्य बाधकं भविष्यति, 'द्वन्द्वे च' इति सूत्रेण प्राप्तस्यापि प्रतिषेधस्य। अतः 'दक्षिणोत्तरपूर्वाणाम्' इत्यत्र द्वन्द्वसमासे विकल्पेन सर्वनामसंज्ञा मा भूदित्यर्थं सूत्रे बहुव्रीहिग्रहणमावश्यकम्।

येन नाप्राप्तन्यायेन तस्य सूत्रस्य बाधनं भवति, यस्य सूत्रस्य बाधकसूत्राणां सर्वेषु विषयेषु अवश्यप्राप्तिर्भवति। दिग्वाचकानां शब्दानां समासस्थले तु 'न बहुव्रीहौ' इत्यस्यैव प्रतिषेधस्य अवश्यप्राप्तिर्भवति, न तु 'द्वन्द्वे च' इति सूत्रेण प्राप्तस्यापि प्रतिषेधस्य। यतो हि द्वन्द्वसमासे 'विभाषा जसि' इति सूत्रेण विकल्पेनापि सर्वनामसंज्ञाया विधानेन जस्विषये 'दक्षिणोत्तरपूर्वाः' इत्यत्र 'विभाषा दिक्समासे' इत्यस्य प्राप्तिर्भविष्यति, 'द्वन्द्वे च' इत्यस्य तु न। एवं हि बाधकसूत्रस्य ये ये विषयाः तेषु सर्वेषु 'द्वन्द्वे च' इति प्रतिषेधस्य अवश्यप्राप्तिर्नास्ति। अतः 'विभाषा दिक्समासे' इति सूत्रं 'द्वन्द्वे च' इत्यस्य बाधकं न भविष्यति। एवं हि 'दक्षिणोत्तरपूर्वाणाम्' इत्यत्र 'द्वन्द्वे च' इति सूत्रेण प्रतिषेधः भविष्यत्येव। अतः 'दक्षिणोत्तरपूर्वाणाम्' इत्यत्र 'विभाषा दिक्समासे' इति सूत्रस्याप्रवृत्तिर्भवतु इति बहुव्रीहिग्रहणस्य प्रयोजनं न भवितुमर्हति।

**बोधप्रश्नः**

७. 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे दिग्ग्रहणस्य किं प्रयोजनमुक्तं भाष्ये?

८. 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे समासग्रहणस्य किं प्रयोजनमुक्तं भाष्ये?

९. 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे बहुव्रीहिग्रहणस्य किं प्रयोजनमुक्तं भाष्ये?

### ९.४.३ बहुव्रीहिग्रहणस्य प्रयोजनविषयेऽवशिष्टाः विचाराः

बहुव्रीहेः प्रयोजनकथनस्य निराकरणाय उपायान्तरप्रदर्शनम्– यदि कथंचिदेवमपि मन्येत यत् 'द्वन्द्वे च' इत्यस्यापि 'विभाषा दिक्समासे' इत्यपवादः, तथापि 'द्वन्द्वे च' इति सूत्रेण 'दक्षिणोत्तरपूर्वाणाम्' इत्यत्र प्रतिषेधो भविष्यत्येव। यतो हि 'पुरस्तादपवादा अनन्तरान् विधीन्

बाधन्ते, नोत्तरान्' इति परिभाषया 'विभाषा दिक्समासे' (१.१.२८) इति सूत्रम् अनन्तरस्य 'न बहुव्रीहौ' (१.१.२९) इति सूत्रस्य बाधकं भविष्यति, न तु 'द्वन्द्वे च' (१.१.३१) इत्युत्तरसूत्रस्यापि। अतः 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे बहुव्रीहिग्रहणमनावश्यकम्।

अथोभस्य सर्वनामत्वे कोऽर्थः इत्यारभ्य विभाषादिक्समासे इति यावत्

किञ्च यथा दिग्वाचकानां बहुव्रीहिसमासे कृतेऽपि या पूर्वा सोत्तरा अस्योन्मुग्ध स्य सोऽयं पूर्वोत्तरः, तस्मै पूर्वोत्तराय देहि इत्यत्र 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रेण विकल्पेन सर्वनामसंज्ञा न भवति। 'यतो हि 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' इति परिभाषया दिक्समासशब्देन तस्यैव ग्रहणं भवति यत्र 'दिङ्नामान्यन्तराले' इति सूत्रेण समासो भवति, तथैव 'दक्षिणोत्तरपूर्वाणाम्' इत्यत्रापि 'दिङ्नामान्यन्तराले' इति सूत्रेण विहितः समासो नास्ति, अपि तु अत्र 'चार्थे द्वन्द्वः' इति सूत्रेण विहितः समासोऽस्ति। अतः अत्रापि लक्षणप्रतिपदोक्तपरिभाषया बहुव्रीहिग्रहणाभावेऽपि 'विभाषा दिक्समासे' इति सूत्रस्य प्राप्तिर्न भविष्यति। अतः 'दक्षिणोत्तरपूर्वाणाम्' इत्यत्र द्वन्द्वसमासे विकल्पेन सर्वनामसंज्ञा मा भूदिति बहुव्रीहिग्रणस्य प्रयोजनं न कथयितुं शक्यते।

बहुव्रीहिग्रहणस्य प्रयोजनान्तरप्रदर्शनम्– 'दक्षिणोत्तरपूर्वाणाम्' इत्यत्र द्वन्द्वसमासे विकल्पेन सर्वनामसंज्ञा मा भूदिति प्रयोजनं यत् प्रदर्शितं तस्य निराकरणं समीक्ष्य भाष्यकारेण बहुव्रीहिग्रहणस्य अपरमपि प्रयोजनं विचारितम्। भाष्यकारेण कथितं यद् 'उत्तरार्थं तर्हि बहुव्रीहिग्रहणं कर्तव्यम्, अर्थात् 'न बहुव्रीहौ' इति सूत्रे 'बहुव्रीहौ' इत्यस्य अनुवृत्तिर्भवेदिति बहुव्रीहिग्रहणस्य प्रयोजनमस्ति। प्रयोजनस्य निराकरणम्–

उत्तरार्थं बहुव्रीहिग्रहणं न कर्तव्यम्। यतो हि न बहुव्रीहौ इति सूत्रे बहुव्रीहिग्रहणं कृतमेव विद्यते।

उत्तरसूत्रे द्वितीयबहुव्रीहिग्रहणस्य प्रयोजनप्रदर्शनम्– उत्तरसूत्रे सत्यपि बहुव्रीहिग्रहणे द्वितीयस्यापि बहुव्रीहिग्रहणास्यावश्यकताऽस्ति। सा आवश्यकता चैवम्- बहुव्रीहिरेव यो बहुव्रीहिस्तत्रैव- 'न बहुव्रीहौ' इत्यनेन प्रतिषेधो यथा स्यात्, बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्र मा भूदिति। तेन 'एकैकस्मै देहि' इत्यत्र सर्वनामसंज्ञायाः प्रतिषेधो 'न बहुव्रीहौ' इत्यनेन न भवति।

'एकैकस्मै देहि' इत्यत्र 'एकस्मै' इति पदस्य 'नित्य-वीप्सयोः' इति सूत्रेण वीप्सायां द्योत्यायां द्वित्वम्, 'एकं बहुव्रीहिवत्' इति सूत्रेण च बहुव्रीहिवद्भावः।

प्रयोजनस्याऽन्यथासिद्धिप्रदर्शनम्– 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रात् 'समासे' इत्यस्याप्यनुवृत्त्या तस्य सूत्रस्य अयमर्थः भवितुमर्हति यत्- समासो यो बहुव्रीहिस्तत्रैव सर्वनामसंज्ञायाः प्रतिषेधो भवति, न तु बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्रापि इति। एवं हि द्वितीयबहुव्रीहिग्रहणेन यः अर्थो भवति, तस्य लाभः समासस्याप्यनुवृत्त्या भवितुमर्हति। अतः उत्तरसूत्रेऽनुवृत्त्यर्थमपि 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे बहुव्रीहिग्रहणं न कर्तव्यम्। एवं हि 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे बहुव्रीहिग्रहणस्य प्रदर्शितं द्वितीयमपि प्रयोजनं निराकृत्य महाभाष्ये बहुव्रीहिग्रहणं प्रत्याख्यातम्।

बहुव्रीहिग्रहणस्य एकदेशिना प्रदर्शितं प्रयोजनम्- अत्र एकदेशिना 'न बहुव्रीहौ' इति सूत्रे अनुवृत्तिलभ्यस्य बहुव्रीहिग्रहणस्य प्रयोजनं प्रदर्शितं यत् 'अवयवभूतस्यापि बहुव्रीहेः सर्वादीनां सर्वनामसंज्ञायाः प्रतिषेधो यथा स्यात्' इति। तेन वस्त्रमन्तरमेषां त इमे वस्त्रान्तराः, वसनमन्तरमेषां त इमे वसनान्तराः, वस्त्रान्तराश्च वसनान्तराश्च इति वस्त्रान्तरवसनान्तराः इत्यत्र द्वन्द्वसमासेऽपि 'विभाषा जसि' इति सूत्रेण बहुव्रीहेरवयवभूतस्य अन्तरशब्दस्य सर्वनामसंज्ञा न भवति।

इदं हि एकदेशिभाष्यम् इति नागेशेन इत्थं प्रतिपादितम्– ''अवयवयोः सर्वनामत्वेऽपि द्वन्द्वस्य तत्त्वाभावेन सर्वनाम्नो विहितत्वाभावाज्जसो न दोषः' इत्येकदेश्युक्तिरिदं भाष्यम्।'

नागेशस्यायमाशयः– 'न बहुव्रीहौ' इतिसूत्रे द्वितीयबहुव्रीहिग्रहणाभावे वस्त्रान्तर-वसनान्तराः इत्यत्र अन्तरशब्दयोरपि सर्वनामत्वापत्तिः स्यात्। सर्वनामत्वे हि 'विभाषा जसि' इत्यनेन विकल्पेन सर्वनामसंज्ञा स्यात्। अतस्तद्वारणाय अन्तरशब्दयोः सर्वनामसंज्ञायां सत्यामपि, वस्त्रान्तर-वसनान्तर इति द्वन्द्वस्य सर्वनामत्वाभावेन जसः सर्वनाम्नो विहितत्वाभावेन 'विभाषा जसि' इत्यस्य प्रवृत्तिर्न भविष्यति। अतः इदं प्रयोजनकथनं न युक्तियुक्तमिति भाष्यमिदमेकदेशिनः।

**मूलग्रन्थपाठो व्याख्या च**

**अथवा 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते, नोत्तरान्' इत्येवमियं विभाषा 'न बहुव्रीहौ' इत्येतं प्रतिषेधं बाधिष्यते। 'द्वन्द्वे च' इत्येतं प्रतिषेधं न बाधिष्यते॥**

**व्याख्या–** 'द्वन्द्वे च' इत्यस्यापि 'विभाषा दिक्समासे' इत्यपवादः इति कथंचित् स्वीकारेऽपि 'द्वन्द्वे च' इति सूत्रेण 'दक्षिणोत्तरपूर्वाणाम्' इत्यत्र प्रतिषेधो भविष्यत्येव। यतो हि 'पुरस्तादपवादाः अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति परिभाषया 'विभाषा दिक्समासे' इति सूत्रम् अनन्तरस्य 'न बहुव्रीहौ' इति सूत्रस्य बाधकं भविष्यति, न तु 'द्वन्द्वे च' (**१.१.३१**) इत्युत्तरसूत्रस्यापि। अतः 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे बहुव्रीहिग्रहणमनावश्यकम्।

**मूलग्रन्थपाठः**

**अथवेदं तावदयं प्रष्टव्यः- इह कस्मान्न भवति- या पूर्वा सोत्तरा अस्योन्मुग्ध स्य सोऽयं पूर्वोत्तर उन्मुग्धः तस्मै पूर्वोत्तराय देहीति?॥ लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति॥ यद्येवं नार्थो बहुव्रीहिग्रहणेन॥**

**व्याख्या–** यथा दिग्वाचकानां बहुव्रीहिसमासे कृतेऽपि या पूर्वा सोत्तरा अस्योन्मुग्ध स्य सोऽयं पूवोत्तरः, तस्मै पूर्वोत्तराय देहि इत्यत्र 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रेण विकल्पेन सर्वनामसंज्ञा न भवति। यतो हि 'लक्षणप्रतिपदोक्तयोः प्रदिपदोक्तस्यैव ग्रहणम्' इति परिभाषया दिक्समासशब्देन तस्यैव ग्रहणं भवति यत्र 'दिङ्नामान्यन्तराले' इति सूत्रेण समासो भवति, तथैव 'दक्षिणोत्तरपूर्वाणाम्' इत्यत्रापि 'दिङ्नामान्यन्तराले' इति सूत्रेण विहितः समासो नास्ति, अपि तु अत्र 'चार्थे द्वन्द्व' इति सूत्रेण विहितः समासोऽस्ति। अतः अत्रापि लक्षणप्रतिपदोक्तपरिभाषया बहुव्रीहिग्रहणाभावेऽपि 'विभाषा दिक्समासे' इति सूत्रस्य प्राप्तिर्न भविष्यति। अतः 'दक्षिणोत्तरपूर्वाणाम्' इत्यत्र द्वन्द्वसमासे विकल्पेन सर्वनामसंज्ञा मा भूदिति बहुव्रीहिग्रहणस्य प्रयोजनं न कथयितुं शक्यते।

लक्षणप्रतिपदोक्तपरिभाषया 'या पूर्वा सोत्तरा अस्योन्मुग्धस्य सोऽयं पूर्वोत्तरः, तस्मै पूर्वोत्तराय देहि' इत्यत्र यदि सूत्रस्य वारणं क्रियते तर्हि सूत्रे बहुव्रीहिग्रहणस्य न काऽपि आवश्यकता अस्ति।

**मूलग्रन्थपाठः**

**द्वन्द्वे कस्मान्न भवति?॥ लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति॥**

**उत्तरार्थं तर्हि बहुव्रीहिग्रहणं कर्तव्यम्। न कर्तव्यम्। क्रियते तत्रैव - 'न बहुव्रीहौ' इति॥**

**व्याख्या–** बहुव्रीहिग्रहणाभावे- 'दक्षिणोत्तरपूर्वाणाम्' इत्यत्र द्वन्द्वेऽपि इयं विभाषा सम्भाव्यते। अतः जिज्ञासा कृता- द्वन्द्वे कस्मान्नेति।

अत्र समाधानं कृतं यत् यथा दिग्वाचकानां बहुव्रीहिसमासे कृते या पूर्वा सोत्तरा अस्योन्मुग्धस्य सोऽयं पूवोत्तरः, तस्मै पूवोत्तराय देहि इत्यत्र 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रेण लक्षणप्रतिपदोक्तपरिभाषया विकल्पेन सर्वनामसंज्ञा न भवति, तथैव दिग्वाचकानां द्वन्द्वसमासेऽपि लक्षणप्रतिपदोक्तपरिभाषयैव सर्वनामसंज्ञा न भविष्यति।

'दक्षिणोत्तरपूर्वाणाम्' इत्यत्र द्वन्द्वसमासे विकल्पेन सर्वनामसंज्ञा मा भूदिति प्रयोजनं यत् प्रदर्शितं तस्य निराकरणं समीक्ष्य भाष्यकारेण बहुव्रीहिग्रहणस्य अपरमपि प्रयोजनं विचारितम्। भाष्यकारेण कथितं यद् 'उत्तरार्थं तर्हि बहुव्रीहिग्रहणं कर्तव्यम्, अर्थात् 'न बहुव्रीहौ (**१.१.२९**) इति सूत्रे 'बहुव्रीहौ' इत्यस्य अनुवृत्तिर्भवेदिति बहुव्रीहिग्रहणस्य प्रयोजनमस्ति।

अत्रोक्तं न कर्तव्यम् = उत्तरार्थं बहुव्रीहिग्रहणं न कर्तव्यम्। यतो हि 'न बहुव्रीहौ' इति सूत्रे बहुव्रीहिग्रहणं कृतमेव विद्यते।

**मूलग्रन्थपाठः**

**द्वितीयं कर्तव्यम्। बहुव्रीहिरेव यो बहुव्रीहिस्तत्रैव यथा स्यात्। बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्र मा भूत्- एकैकस्मै देहि॥**

**एतदपि नास्ति प्रयोजनम्। समास इति वर्तते। तेन बहुव्रीहिं विशेषयिष्यामः- समासो यो बहुव्रीहिरिति॥**

**व्याख्या–** उत्तरसूत्रे सत्यपि बहुव्रीहिग्रहणे द्वितीयस्यापि बहुव्रीहिग्रहणस्यावश्यकताऽस्ति। सा आवश्यकता चैवम्- बहुव्रीहिरेव यो बहुव्रीहिस्तत्रैव 'न बहुव्रीहौ' इत्यनेन प्रतिषेधो यथा स्यात्, बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्र मा भूदिति। तेन 'एकैकस्मै देहि' इत्यत्र सर्वनामसंज्ञायाः प्रतिषेधो 'न बहुव्रीहौ' इत्यनेन न भवति।

'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रात् 'समासे' इत्यस्याप्यनुवृत्त्या तस्य सूत्रस्य अयमर्थः भवितुमर्हति यत्- समासो यो बहुव्रीहिस्तत्रैव सर्वनामसंज्ञायाः प्रतिषेधो भवति, न तु बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्रापि। इति। एवं हि द्वितीयबहुव्रीहिग्रहणेन यः अर्थो भवति, तस्य लाभः समासस्याप्यनुवृत्त्या भवितुमर्हति। अतः उत्तरसूत्रेऽनुवृत्त्यर्थमपि 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे बहुव्रीहिग्रहणं न कर्तव्यम्।

एवं हि 'विभाषा दिक्समासे बहुव्रीहौ' इतिसूत्रे बहुव्रीहिग्रहणस्य प्रदर्शितं द्वितीयमपि प्रयोजनं निराकृत्य महाभाष्ये बहुव्रीहिग्रहणं प्रत्याख्यातम्।

**मूलग्रन्थपाठः**

**इदं तर्हि प्रयोजनम्- अवयवभूतस्यापि बहुव्रीहेः प्रतिषेधो यथा स्यात्, इह मा भूत् वस्त्रमन्तरमेषां त इमे वस्त्रान्तराः, वसनमन्तरमेषां त इमे वसनान्तराः, वस्त्रान्तराश्च वसनान्तराश्च वस्त्रान्तरवसनान्तराः॥**

**॥ विभाषा दिक्समासे॥ २८ ॥**

**व्याख्या–** अत्र एकदेशिना 'न बहुव्रीहौ' इति सूत्रे अनृवृत्तिलभ्यस्य बहुव्रीहिग्रहणस्य

प्रयोजनं प्रदर्शितं यत् 'अवयवभूतस्यापि बहुव्रीहेः सर्वादीनां सर्वनासंज्ञायाः प्रतिषेधो यथा स्यात्' इति। तेन वस्त्रमन्तरमेषां त इमे वस्त्रान्तराः, वसनमन्तरमेषां त इमे वसनान्तराः, वस्त्रान्तराश्च वसनान्तराश्च इति वस्त्रान्तरवसनान्तराः इत्यत्र द्वन्द्वसमासेऽपि 'विभाषा जसि' इति सूत्रेण बहुव्रीहेरवयवभूतस्य अन्तरशब्दस्य सर्वनामसंज्ञा न भवति।

अत्र नागेशस्यायमाशयः- 'न बहुव्रीहौ' इति सूत्रे द्वितीयबहुव्रीहिग्रहणाभावे वस्त्रान्तर-वसनान्तराः इत्यत्र अन्तरशब्दयोरपि सर्वनामत्वापत्तिः स्यात्। सर्वनामत्वे हि 'विभाषा जसि' इत्यनेन विकल्पेन सर्वनामसंज्ञा स्यात्। अतस्तद्वारणाय द्वितीयबहुव्रीहिग्रहणमावश्यकमिति यद् एकदेशिना उक्तं तन्न युक्तम्। यतो हि अवयवयोः अन्तरशब्दयोः सर्वनामसंज्ञायां सत्यामपि, वस्त्रान्तर-वसनान्तर इति द्वन्द्वस्य सर्वनामत्वाभावेन जसः सर्वनाम्नो विहितत्वाभावेन 'विभाषा जसि' इत्यस्य प्रवृत्तिर्न भविष्यति। अतः इदं प्रयोजनकथनं न युक्तियुक्तमिति भाष्यमिदमेकदेशिनः।

### ९.४.४ निष्कर्षः

'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे बहुव्रीहिग्रहणाभावेऽपि 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति परिभाषया 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रं 'न बहुव्रीहौ' इति सूत्रेण प्राप्तस्यैव प्रतिषेधस्य बाधकं भविष्यति, न तु 'द्वन्द्वे च' इति सूत्रेण प्राप्तस्य प्रतिषेधस्यापि। अतः 'दक्षिणोत्तरपूर्वाणाम्' इत्यत्र 'द्वन्द्वे च' इति सूत्रेण सर्वनामसंज्ञायाः प्रतिषेध एव भविष्यति, न त्वनेन सूत्रेण विकल्पेन सर्वनामसंज्ञा। अतः 'द्वन्द्वे मा भूत् सर्वनामसंज्ञा' इति बहुव्रीहिग्रहणस्य प्रयोजनं न भवितुमर्हति।

अथवा लक्षणप्रतिप्रदोक्तपरिभाषया दिक्समासशब्देन 'दिङ्नामान्यन्तराले' इति सूत्रेण विहितस्य समासस्य ग्रहणादेव 'दक्षिणोत्तरपूर्वाणाम्' इत्यत्र द्वन्द्वे स्वतः अस्य सूत्रस्य प्रवृत्तिर्न भविष्यति। अतः द्वन्द्वसमासे अस्य सूत्रस्य अप्रवृत्त्यर्थं बहुव्रीहिग्रहणमिति न कथयितुं शक्यते।

एवं हि बहुव्रीहिग्रहणस्य भाष्यकारेण प्रत्याख्यानं कृतम्।

**बोधप्रश्नः**

१०. 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे बहुव्रीहिग्रहणाभावेऽपि द्वन्द्वसमासे अस्य सूत्रस्य अप्रवृत्त्यर्थं कः तर्कः प्रस्तुतः भाष्यकारेण?

११. 'न बहुव्रीहौ' इत्युत्तरसूत्रे द्वितीयबहुव्रीहिग्रहणस्य आवश्यकताऽस्ति न वा।?

१२. 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' इति परिभाषायाः सोदाहरणमर्थः स्पष्टीक्रियताम्।

## ९.५ सारांशः

एवं हि पाठेऽस्मिन् भवता अवगतं यत् सर्वादिगणे उभशब्दस्य पाठः अकजर्थः इति वार्तिककारस्य मतमासीत्, भाष्यकारेण कप्रत्ययेनापि तत्प्रयोजनसिद्धिं प्रदर्श्य सर्वादिगणे उभशब्दस्य पाठः प्रत्याख्यातः।

भवच्छब्दस्य सर्वादिगणकृतपाठस्य अकच्, एकशेषः, आत्वं च प्रयोजनानि सन्त्येव, सहैव भवता हेतुना, भवतो हेतोः इत्यत्र 'सर्वनाम्नस्तृतीया' इत्यस्य प्रवृत्तिरपि प्रयोजनमस्ति, अन्यान्यपि प्रयोजनानि उपलभ्यन्ते। अतः 'भवतोऽकच्छेषाऽऽत्वानि' इति वार्तिकं प्रयोजनानाम् उदाहरणपरम्, न तु परिगणनपरम् इति भाष्यकारेण स्पष्टीकृतम्।

अथोभस्य सर्वनामत्वे कोऽर्थः इत्यारभ्य विभाषादिक्समासे इति यावत्

विभाषा दिक्समासे बहुव्रीहौ इति सूत्रे दिगादिपदानां प्रयोजनं प्रदर्श्य बहुव्रीहिग्रहणस्य प्रत्याख्यानप्रकारश्च प्रदर्शितः। तत्र दिग्ग्रहणेन निर्णीयते यत् दिगुपदिष्टे एव बहुव्रीहौ सर्वादीनामनेन सर्वनामसंज्ञा भवति। अन्यस्मिन् बहुव्रीहौ तु 'न बहुव्रीहौ' इत्यनेन सर्वनामसंज्ञायाः प्रतिषेधो भवति।

विभाषा दिक्समासे बहुव्रीहौ इति सूत्रे समासग्रहणेन निर्णीतं यत् यत्र मुख्यो बहुव्रीहिस्तत्रैव अस्य सूत्रस्य प्रवृत्तिर्भवति, न तु बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्रापि। अतः दक्षिणदक्षिणस्यै इत्यत्र नित्यैव सर्वनामसंज्ञा भवति, न तु प्रकृतसूत्रेण विकल्पेन सर्वनामसंज्ञा।

विभाषा दिक्समासे बहुव्रीहौ इति सूत्रे बहुव्रीहिग्रहणस्य अनुवृत्त्यर्थं प्रयोजनम् उक्त्वा'एकैकस्मै देहि' इत्यत्र विकल्पेन सर्वनामसंज्ञा मा भूदिति प्रदर्श्य पश्चात् युक्तिपूर्वकं बहुव्रीहिग्रहणस्य प्रत्याख्यानं कृतं भाष्यकारेण।

## ९.६ शब्दावली

१. दिक्समासः – दिग्वाचकानां शब्दानां 'दिङ्नामान्यन्तराले' इति सूत्रेण यः समासः सः।

२. विशेषः – भेदः

३. स्वार्थिकः प्रत्ययः – 'अज्ञाते' इत्यादिसूत्रैः स्वार्थे विहितः प्रत्ययः।

४. प्रकृतितोऽविशिष्टाः – प्रकृतेर्योऽर्थः, ततोऽभिन्नेऽर्थे विहितः प्रत्ययः।

५. परिगणनम् – गणना।

६. उदाहरणम् – सूत्रेण प्रतिपाद्यकार्याणां कतिपयप्रयोगेषु प्रदर्शनम्।

७. दिगुपदिष्टः समासः – दिक्शब्दमुच्चार्य विहितः समासः।

८. बहुव्रीहिवद्भावः – बहुव्रीहिसमासाभावस्थलेऽपि 'एकं बहुव्रीहिवत्' इति सूत्रेण आरोपितं बहुव्रीहित्वम्।

९. पुरस्तादपवादाः – सामान्यसूत्रात् पूर्वमेव प्रोक्तम् अपवादसूत्रम्।

१०. उन्मुग्धः – भ्रान्तः।

## ९.७ सन्दर्भग्रन्थः

१. महाभाष्यम्    २. प्रदीपटीका    ३. उद्योतटीका
४. छायाटीका    ५. शब्दकौस्तुभः    ६. लघुशब्देन्दुशेखरः

## ९.८ सहायकग्रन्थः

१. वैयाकरणसिद्धान्तकौमुदी    २. काशिकावृत्तिः
३. पदमञ्जरीटीका    ४. न्यासटीका
५. परिभाषेन्दुशेखरः    ६. प्रौढमनोरमा

## ९.९ बोधप्रश्नोत्तराणि

**१. उभस्य सर्वनामत्वे कोऽर्थः इति प्रश्नस्य भाष्ये किमुत्तरं प्रदत्तम्?**

**उत्तरम्–** उभस्य सर्वनामत्वे कोऽर्थः इति प्रश्नस्य भाष्ये उत्तरं प्रदत्तम्– 'उभस्य सर्वनामत्वेऽकजर्थः' इति।

**२. अकच्प्रत्ययार्थ एव उभशब्दस्य सर्वादिगणे पाठः कृतः इति किमर्थमुच्यते?**

**उत्तरम्–** उभशब्दस्य प्रयोगः केवलं द्विवचने तथा टापि एव भवति। द्विवचने टापि च सर्वनामसंज्ञाप्रयुक्तं किमपि कार्यं न भवति। अतः अकच्प्रत्ययार्थ एव उभशब्दस्य पाठः कृतः इत्युच्यते।

**३. अकच्प्रत्ययाभावे उभशब्दात् स्वार्थे कः प्रत्ययः स्यात्? का च तत्राऽऽपत्तिः?**

**उत्तरम्–** अकच्प्रत्ययाभावे उभशब्दात् स्वार्थे कप्रत्ययः स्यात्। सति तु कप्रत्यये द्विवचनपरत्वाभावेन उभयत्र, उभयतः, उभयपुत्रः उभयो मणिः, उभये देवमुनष्याः इत्यादाविव उभशब्दस्य स्थाने उभयशब्दस्य प्रयोगापत्तिः स्यात्। अकचि तु तन्मध्यपतितन्यायेन उभशब्देन अकच्सहितस्यापि ग्रहणात् तत्र द्विवचनपरत्वेन उभशब्दस्य स्थाने उभयशब्दस्य प्रयोगापत्तिर्न भवति।

**४. कप्रत्ययेऽपि द्विवचनपरत्वं कथं साधितमुभशब्दस्य भाष्यकारेण?**

**उत्तरम्–** 'स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्ति' इति वचनेन कप्रत्ययस्यापि द्वित्ववाचकत्वेन उभशब्दात् कप्रत्यये कृते तं कप्रत्ययमाश्रित्य द्विवचनपरत्वं साधि तमुभशब्दस्य भाष्यकारेण।

**५. 'स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्ति' इत्यस्य कोऽर्थः?**

**उत्तरम्–** स्वार्थे विधीयमानाः प्रत्ययाः क इत्यादयः प्रकृतेः यः अर्थः तस्मात् अर्थात् अभिन्नार्थकाः एव भवन्ति। अर्थात् प्रकृतेरेवार्थस्य बोधका भवन्ति इत्यर्थः।

**६. भवतः सर्वनामत्वे कानि प्रयोजनानि प्रदर्शितानि भाष्ये?**

**उत्तरम्–** भाष्ये भवतः सर्वनामत्वे त्रीणि प्रयोजनानि प्रदर्शितानि– भवकान् इत्यत्र अकच्। स च भवांश्च इति भवन्तौ इत्यत्र एकशेषः। भवादृक् इत्यत्र आत्वं च। पुनरग्रे भवता हेतुना, भवतो हेतोः इत्यत्र 'सर्वनाम्नस्तृतीया च' इति सूत्रस्य प्रवृत्तिरपि भवतः सर्वनामसंज्ञायाः प्रयोजनं प्रदर्शितं भाष्ये।

**७. 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे दिग्ग्रहणस्य किं प्रयोजनमुक्तं भाष्ये?**

**उत्तरम्–** 'विभाषा दिग्समासे बहुव्रीहौ' इति सूत्रे दिग्ग्रहणाभावे बहुव्रीहौ सर्वादीनां 'न बहुव्रीहौ' इति सूत्रेण सर्वनामसंज्ञायाः निषेधः प्राप्नोति, अनेन सूत्रेण विकल्पेन सर्वनामसंज्ञा प्राप्नोति। तत्र न ज्ञायते यत् कुत्र निषेधः स्यात्, कुत्र च विभाषा। अतः विषयभेदकरणाय सूत्रे दिग्ग्रहणं कृतम्। कृते हि दिग्ग्रहणे निश्चीयते यत् दिगुपदिष्टे बहुव्रीहौ विकल्पेन सर्वनामसंज्ञा भवति, अन्यत्र च सर्वनामसंज्ञायाः प्रतिषेधः।

**८. 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे समासग्रहणस्य किं प्रयोजनमुक्तं भाष्ये?**

**उत्तरम्–** समास एव यो बहुव्रीहिस्तत्रैव अस्य सूत्रस्य प्रवृत्तिर्भवतु इति, न तु बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्रापि इति बोधनाय सूत्रे समासग्रहणं कृतं सूत्रकारेण। तेन दक्षिणदक्षिणस्यै देहि इत्यत्र अस्य सूत्रस्य प्रवृत्त्यभावेन 'सर्वादीनि सर्वनामानि' इति सूत्रेण नित्यैव सर्वनामसंज्ञा भवति।

**९. 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे बहुव्रीहिग्रहणस्य किं प्रयोजनमुक्तं भाष्ये?**

**उत्तरम्–** 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे बहुव्रीहिग्रहणाभावे दिक्शब्दानां यत्र द्वन्द्वसमासः, तत्रापि अस्य सूत्रस्य प्रवृत्तिः स्यात्, यथा– दक्षिणोत्तरपूर्वाणाम् इत्यत्र। अतः द्वन्द्वे अस्य सूत्रस्य प्रवृत्त्यभावः बहुव्रीहिग्रहणस्य प्रयोजनमुक्तं भाष्यकारेण। पुनरग्रे भाष्ये प्रतिपादितं यत् परत्वात् 'द्वन्द्वे च' इत्यनेन बाधात्, लक्षणप्रतिपदोक्तपरिभाषया वा द्वन्द्वे अस्य सूत्रस्य प्रवृत्तिर्न भविष्यति। अतः सूत्रे बहुव्रीहिग्रहणमनावश्यकम्।

**१०. 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे बहुव्रीहिग्रहणाभावेऽपि द्वन्द्वसमासे अस्य सूत्रस्य अप्रवृत्त्यर्थं कः तर्कः प्रस्तुतः भाष्यकारेण?**

**उत्तरम्–** 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे बहुव्रीहिग्रहणाभावेऽपि द्वन्द्वसमासे अस्य सूत्रस्य अप्रवृत्त्यर्थं भाष्ये तर्कद्वयं प्रस्तुतम्– **१.** द्वन्द्वे च इति सूत्रं परत्वात् 'विभाषा दिक्समासे' इति सूत्रं बाधिष्यते। **२.** लक्षणप्रतिपदोक्तपरिभाषया दिक्समासशब्देन 'दिङ्नामान्यन्तराले' इति सूत्रेण दिग्वाचकानां यत्र समासस्तस्यैव ग्रहणात् यथा बहुव्रीहिसमासेऽपि या पूर्वा सोत्तरा अस्योन्मुग्धस्य सोऽयं पूर्वोत्तरः, तस्मैः पूर्वोत्तराय देहि इत्यत्र अस्य सूत्रस्य प्रवृत्तिर्न भवति तथैव दक्षिणोत्तरपूर्वाणाम् इत्यत्र द्वन्द्वसमासेऽपि अस्य सूत्रस्य प्रवृत्तिर्न भविष्यति।

**११. 'न बहुव्रीहौ' इत्युत्तरसूत्रे द्वितीयबहुव्रीहिग्रहणस्य आवश्यकताऽस्ति न वा?**

**उत्तरम्–** 'न बहुव्रीहौ' इति सूत्रेण बहुव्रीहिरेव यो बहुव्रीहिस्तत्रैव सर्वनामसंज्ञायाः प्रतिषेधः यथा स्यात्, बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्र मा भूदिति द्वितीयबहुव्रीहिग्रहणस्य प्रयोजनमुक्तम्। तेन एकैकस्मै देहि इत्यत्र बहुव्रीहिवद्भावस्थले सर्वनामसंज्ञायाः प्रतिषेधो न भवति। पुनरग्रे भाष्ये प्रतिपादितं यत् 'न बहुव्रीहौ' इति सूत्रे समासग्रहणस्यानुवृत्त्या सूत्रस्य अर्थो भविष्यति– समासो यो बहुव्रीहिस्तत्रैव प्रतिषेधो यथा स्यादिति, न तु बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्रापि। एवं हि एकैकस्मै देहि इत्यत्र बहुव्रीहिवद्भावस्थले सर्वनामसंज्ञायाः प्रतिषेधो न भविष्यति। अतः द्वितीयबहुव्रीहिग्रहणस्य आवश्यकता नास्ति।

**१२. 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' इति परिभाषायाः सोदाहरणमर्थः स्पष्टीक्रियताम्।**

**उत्तरम्–** 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' इति परिभाषायां लक्षणशब्दस्य लक्षणया अर्थो भवति– लाक्षणिकः इति। शब्दविशेषमनुच्चार्य सामान्यतः लक्षणेन = सूत्रेण निष्पन्नं शब्दस्वरूपं लाक्षणिकं कथ्यते। प्रतिपदम् = शब्दविशेषमुच्चार्य निष्पन्नम्, अथवा लक्षणं विनैव साक्षादुच्चारितं शब्दस्वरूपं प्रतिपदोक्तं कथ्यते। अतः परिभाषाया अर्थो भवति– लाक्षणिक-प्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं भवति। तद्यथा– 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' इति सूत्रेण पाशब्देन 'पा पाने' इत्यस्यापि ग्रहणं प्राप्नोति, 'पै ओवै शोषणे' इत्यत्र पठितस्य पै धातोः ऐकारस्य 'आदेच उपदेशेऽशिति' इति सूत्रेण आत्वे कृते निष्पन्नस्य-पा' इत्यस्यापि। तत्र 'पा पाने' इति धातुपाठे साक्षादुच्चारितत्वात् 'पा' इति प्रतिपदोक्तम् 'पै' इति धातुः धातुपाठे ऐकारान्तरूपेण पठितः, स च आत्वे कृते 'पा' इति रूपं प्राप्नोति, अतः इदं पाशब्दस्वरूपं लाक्षणिकम्। तत्र परिभाषया 'गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु' इति सूत्रे पाशब्देन 'पा पाने' इत्यस्यैव ग्रहणं भवति न तु पै इत्यस्य। अतः लुङि 'पा

पाने' इत्यस्य सिचो लुका अपात् इति रूपम्, 'पै शोषणे' इत्यस्य च अपासीत् इति रूपं भवति। 'विभाषा दिक्समासे बहुव्रीहौ' इत्यत्र दिक्समासशब्देन 'दिङ्नामान्यन्तराले' इति सूत्रेण दिक् इति शब्दविशेषमुच्चार्य विहतः यः समासः प्रतिपदोक्तः ग्रहणं भवति।

## ९.१० अभ्यासप्रश्नाः

१. सर्वादिगणे उभशब्दस्य पाठः कथं प्रत्याख्यातो भाष्यकारेण।

२. 'अवचनादापि तत्परविज्ञानम्' इति वार्तिकं सप्रसङ्गं व्याख्यायताम्।

३. 'भवतोऽकच्छेषाऽऽत्वानि' इति वार्तिकेन प्रयोजनानामुदाहरणमात्रं प्रदर्शितम्, प्रयोजनानां परिगणनं वा कृतम्? इति स्पष्टीक्रियताम्।

४. 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रं सपदकृत्यं व्याख्यायताम्।

५. 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे बहुव्रीहिग्रहणस्य प्रत्याख्यानप्रकारः प्रदर्श्यताम्।

६. एकदेशिभाष्येण 'न बहुव्रीहौ' इत्यत्र अनुवृत्त्या द्वितीयस्य बहुव्रीहेः किं प्रयोजनमुक्तम्?

—◆—

## दशमः पाठः ( न बहुव्रीहावित्यारभ्य अन्तरं बहिर्योगो. इति यावत् )

**पाठसंरचना**

## १०.१ प्रस्तावना

द्वितीयस्य खण्डस्य दशमः पाठोऽयं वर्तते। इतः पूर्वं भवन्तः सर्वनामसंज्ञाविधायकं 'सर्वादीनि सर्वनामानीति सूत्रं, विकल्पेन च सर्वनामसंज्ञाविधायकं ''विभाषा दिक्समासे बहुव्रीहौ'' इति सूत्रञ्चाधीतवन्तः। पाठेऽस्मिन् सर्वप्रथमं सर्वनामसंज्ञायाः निषेधकं ''न बहुव्रीहौ'' इति सूत्रं भवन्तः पठिष्यन्ति। तत्र सूत्रस्य नैकानि उदाहरणानि महाभाष्यकारेण प्रदत्तानि। यथा- प्रियं विश्वं यस्य सः प्रियविश्वस्तस्मै प्रियविश्वाय इत्यत्र प्रकृतसूत्रेण सर्वनामसंज्ञायाः निषेधात् ''सर्वनाम्नः स्मै'' इति सूत्रेण ङेः स्थाने ''स्मै'' आदेशो न भवति। अन्यथा प्रियविश्वस्मै इत्यनिष्टप्रयोगः स्यात्। एवं त्वकं पिता यस्य सः त्वत्कपितृकः, अहकं पिता यस्य सः मत्कपितृकः इत्यत्र प्रकृतसूत्रेण सर्वनाम्नो निषेधात् अकजभावाच्चोक्तरूपमिष्यते। यदि बहुव्रीहौ अपि सर्वनामसंज्ञा स्यात्तर्हि अव्ययसर्वनाम्नाम्...' इति सूत्रेण अकचि सति त्वकत्पितृकः, मकत्पितृक इति स्यात्। अन्ते महाभाष्यकारेण सूत्रमिदं प्रत्याख्यातम्।

पाठेऽस्मिन् विद्यमानेषु षट्सु सूत्रेषु द्वितीयं सूत्रं ''तृतीयासमासे'' इत्यस्ति। अत्र भवन्तः समास इति वर्तमाने = अनुवर्तमाने पुनः समासग्रहणस्य प्रयोजनं ज्ञास्यन्ति। सूत्रमिदमपि तृतीयासमासे सर्वनामसंज्ञायाः निषेधं करोति। तेन मासेन पूर्वाय मासपूर्वाय इत्यत्र सर्वनामसंज्ञायाअभावात् ङेः स्थाने स्मै आदेशाभावाच्च मासूपर्वस्मै इत्यनिष्टरूपं न भवति।

एतदनन्तरं पाठेऽस्मिन् तृतीयं सूत्रं 'विभाषा जसि'' इति वर्तते। अनेन सूत्रेण जस्स्थानिकशीभावाख्यं कार्यं प्रति द्वन्द्वे सर्वनामसंज्ञा वा विधीयते। तेन वर्णाश्च आश्रमाश्च इतरे चेतीतरेतरद्वन्द्वसमासे सति वर्णाश्रमेतरे, वर्णाश्रमेतरा इति रूपद्वयं सिद्धं भवति।

अतः परं यानि त्रीणि सूत्राणि पाठेऽस्मिन् भवन्तः पठिष्यन्ति, तानि अष्टाध्यायीस्थानि सन्ति। तानि जसि परे वा सर्वनामसंज्ञाविधायकानि वर्तन्ते। सर्वादिगणपठितान्यपि एतानि त्रीणि सूत्राणि सर्वनामसंज्ञाविधायकानि सन्ति। तानि गणसूत्राणि सर्वासु विभक्तिषु नित्यां सर्वनामसंज्ञां कुर्वन्ति। तत्र पूर्वपरेति सूत्रे भवन्तः पठिष्यन्ति यत् गणपाठे सत्यपि कथं पुनः पाठः? पूर्वं गणपाठः, सूत्रपाठो वा? अनन्तरं स्वमज्ञातिधनाख्यायामित्यत्र आख्याग्रहणस्य प्रयोजनं ज्ञास्यन्ति यत् ज्ञातिधनपर्यायवाची यः स्वशदः तस्यैव निषेधो यथा स्यात् स्वे, स्वाः पुत्राः स्वे, स्वाः गावः इत्यत्र निषेधो मा भूत्, विकल्पेन सर्वनामसंज्ञा यया स्यादित्येतदर्थं सूत्रे आख्याग्रहणम्। अस्मात्परम् ''अन्तरं बहिर्योगोपसंव्यानयोः'' इति सूत्रे भवन्तः ज्ञास्यन्ति यत्

उपसंव्यानग्रहणं सूत्रे न कर्तव्यं बहिर्योगेनैव सिद्धत्वात्। अनन्तरम् अन्तरायां पुरि वसति इत्यत्र अन्तरस्यां पुरि इत्यनिष्टरूपं मा भूदित्येतदर्थं 'अपुरि' इति वचनं कर्तव्यम्। येन पू:शब्दस्य विशेष्यत्वे अन्तरशब्दस्य सर्वनामसंज्ञा मा भूत्। अनन्तरं 'द्वितीयायै, द्वितीयस्यै। तृतीयायै, तृतीयस्यै इत्यादिरूपसिद्ध्यर्थं वा प्रकरणे तीयस्य ङित्सूपसंख्यानमिति वार्तिकं पठिष्यन्ति भवन्तिः। इत्थं षड्भिः रसैः समलङ्कृतो दशमः पाठो वर्तते। यदधीत्यैव भवतिः सर्वनामसंज्ञायाः पूर्णतां पारङ्गतताञ्च धारयिष्यन्ति।

न बहुव्रीहावित्यारभ्य अन्तरं बहिर्योगो. इति यावत्

## १०.२ उद्देश्यम्

अस्य पाठस्याध्ययनेन भवन्तः-

- ''न बहुव्रीहौ'' इति सूत्रस्यार्थम् उदाहरणं प्रयोजनं च ज्ञास्यन्ति।
- सूत्रमिदं कर्तव्यं वेति ? तत्र भाष्यकारस्याभिप्रायं ज्ञातुमर्हन्ति।
- पाठमिमं पठित्वा 'तृतीयासमासे' इति सूत्रस्थसमासग्रहणस्य प्रयोजनं ज्ञास्यन्ति।
- ''विभाषा जसि'' इति सूत्रस्यार्थोदाहरणं च विज्ञाय अन्यान् अपि बोधयितुं समर्थाः भविष्यन्ति।
- पूर्वादीनां गणसूत्रादतिरिक्तोऽपि पाठः कथम् आवश्यक इति ज्ञास्यन्ति। गणपाठसूत्रपाठयोः पौर्वापर्यं ज्ञातुं शक्ष्यन्ति।
- स्वमज्ञातिधनाख्यायामित्यत्र आख्याग्रहणस्य प्रयोजनम् ज्ञातुमर्हन्ति।
- सूत्रे उपसंख्यानग्रहणं कथं बहिर्योगेन इति विज्ञाय अन्यानपि बोधयितुं समर्था भविष्यन्ति।
- अस्य पाठस्याध्ययनेन ''अपुरि'' इति वा-प्रकरणे तीयस्य ङित्सूप-संख्यानमिति वार्तिकञ्चाधीत्य उक्तवार्तिकद्वारा सिद्धान् साधुशब्दान् ज्ञातुं प्रयोक्तुं च समर्थाः भविष्यन्ति।

## १०.३ न बहुव्रीहौ ( १-१-२९ )

### १०.३.१ पदपरिचयः, अनुवृत्तिः, सूत्रार्थश्च

'न' इति निषेधात्मकमेकं पदम्। ''बहुव्रीहौ'' इति सप्तम्यन्तं द्वितीयं पदम्। एवं द्विपदात्मकमिदं सूत्रम्। 'सर्वादीनि सर्वनामानि' इति सम्पूर्णं सूत्रमनुवर्तते। 'बहुव्रीहौ' इत्यत्र विषयसप्तमी। तेन बहुव्रीहौ प्रसक्ते सति ततः प्रागेव विग्रहवाक्ये अनेन सूत्रेण सर्वनामसंज्ञा निषिध्यते।

सूत्रार्थः - बहुव्रीहौ चिकीर्षिते सर्वादीनि सर्वनामानि न स्युः।

### १०.३.२सूत्रोदाहरणे बाधकसाधकपक्षः

''प्रियविश्वाय'' द्व्यन्याय त्र्यन्याय इत्युदाहरणेषु समागतो बाधकसाधकपक्षः -

१. प्रियविश्वाय - ''न बहुव्रीहौ'' इति सूत्रस्य किमुदाहरणमिति जिज्ञासायां महाभाष्यकारः प्रियविश्वायेति उक्तवान्। प्रियं विश्वं यस्य सः प्रियविश्वः तस्मै प्रियविश्वाय

इत्यत्र बहुव्रीहिसमासत्वात् प्रकृतसूत्रेण सर्वनामसंज्ञाया अभावाच्च न ङेः स्थाने ''स्मै'' आदेशो भवति। सर्वादिगणे विश्वशब्दस्यैव पाठो न तु प्रियविश्वेत्यस्य, एवं सर्वादीनि सर्वनामानीति सूत्रेण सर्वनामसंज्ञायाः प्राप्त्यभावात् कथं निषेध इति शङ्का न कर्तव्या। यतो हि द्वन्द्वे च इति ज्ञापकात् तदन्तस्यापि सर्वनामसंज्ञा भवति।

एतदनन्तरं बाधकभाष्यत्वेन आगतं यत् सूत्रस्यास्य प्रियविश्वायेति प्रयोजनं भवितुं नार्हति यतो हि ''बहुव्रीहौ सर्वनामसंख्ययोरुपसंख्यानमिति'' वार्तिकेन सर्वनाम्नः पूर्वनिपाते विश्वप्रियाय इति भविष्यति। एवं सर्वनामसंज्ञायाः प्राप्तिरेव नास्ति इति कृत्वा अयं प्रयोगः उदाहरणमस्य न भविष्यति।

एतदनन्तरं साधकभाष्यत्वेन समागतं यदस्य सूत्रस्य 'प्रियविश्वाय' इत्युदाहरणं भवितुमर्हति। यतो हि 'वा प्रियस्य' इति पूर्वनिपातो भवतीति वार्तिकमपि अग्रे वक्ष्यति भाष्यकारः। एवं स्पष्टं यत् प्रियविश्वाय इत्युदाहरणमस्य भविष्यति।

२. द्व्यन्याय, ३. त्र्यन्याय - द्वौ अन्यौ यस्य सः द्व्यन्यः, तस्मै द्वयन्यायेति, त्रयो अन्ये यस्य सः, तस्मै त्र्यन्यायेति चापि अस्य सूत्रस्य उदाहरणमस्ति। अत्र प्रकृतसूत्रेण सर्वनाम्नो निषेधात् ङेस्थाने ''स्मै'' आदेशो न जातः। अत्रापि बाधकभाष्यत्वेन आगतं यत् इदमपि उदाहरणं भवितुं नार्हति। अत्रापि सर्वनाम्न एव पूर्वनिपातेन भवितव्यम्। अन्यशब्द एव पूर्वं भविष्यतीति भावः। अनन्तरं साधकभाष्यमागतं यत् उक्तप्रयोगद्वयमुदाहरणत्वेन भविष्यति। यतो हि वक्ष्यति भाष्यकारः, ''संख्यासर्वनाम्नोर्यो बहुव्रीहिः परत्वात् तत्र संख्यायाः पूर्वनिपातो भवति एवं संख्यायाः पूर्वनिपाते (पूर्वप्रयोगे) सति उक्तद्वयमुदाहरणं भविष्यति।

## १०.३.३सूत्रार्थान्तरप्रदर्शनम्

'न बहुव्रीहौ' इति सूत्रेण प्रियविश्वायेत्यादौ सर्वाद्यन्तस्य प्रतिषेधः कृतः। तेन ''प्रियविश्वस्मै'' इत्याद्यनिष्टप्रयोगो न भवति। उक्तोदाहरणेषु विश्वरूप-सर्वनामशब्दः, अन्यरूपसर्वनामशब्दश्चान्ते वर्तते। यद्यपि उपर्युक्तोदाहरणे सर्वाद्यन्तबहुव्रीहेर्निषेधः कृतो विद्यते। तथापि अनेन सूत्रेण न केवलं सर्वाद्यन्तबहुव्रीहेरेव निषेधः क्रियते, अपितु असर्वाद्यन्तस्यापि प्रतिषेधः क्रियते। स च प्रतिषेधः अकच् मा भूत् इत्येतदर्थं भवति। यद्यपि असर्वाद्यन्तस्य निषेधे अजन्तेषु को भवतु अकज्वा भवतु न कश्चिद् विशेषस्तथायि व्यञ्जनान्तेषु विशेषो भवत्येव। यथा- यदि ''न बहुव्रीहौ'' इति सूत्रेण असर्वाद्यन्तस्यापि निषेधो न स्यात्तर्हि अहकं पिता यस्य इति बुव्रीहिसमासे अस्मकद् सु पितृ सु इत्यलौकिकविग्रहवाक्ये अकचि सति मकत्पितृकः, युष्मकद् सु पितृ सु इति विग्रहवाक्ये अकचि सति त्वकत्पितृक इति च स्यात्। सूत्रेण सर्वनामसंज्ञायाः निषेधे तु अकजभावे के प्रत्यये 'त्वं-म इत्यादेशे च सति ''मत्कपितृकः'' त्वत्कपितृकश्च इष्यते।

'अन्तरङ्गानपि विधीन् बहिरङ्गो विधिर्बाधते' इत्यस्य प्रसङ्गः गोनर्दीयपक्षश्च -

इतः पूर्वं ज्ञातं यत् 'न बह्ुवीहौ' इति प्रकृतसूत्रेण अहकं पिता यस्य, त्वकं पिता यस्य इति बहुव्रीहिसमासे सर्वनाम्नो निषेधात् अकचप्रत्ययो न भवति। तेन कप्रत्यये सति त्वत्कपितृकः, मत्कपितृकः, इतीष्टरूपं सिद्धं भवति। अन्यथा अकचि सति मकत्पितृकः त्वकत्पितृक इति स्यात्। अत्र शङ्कते यत् एका परिभाषा अस्ति ''असिद्धं बहिरङ्गमन्तरङ्गे''। अन्तरङ्गे कार्ये कर्तव्ये बहिरङ्गमसिद्धं भवतीति परिभाषार्थः। अनया परिभाषया अन्तरङ्गं यत् अकच्कार्यं तत् कथं बहिरङ्गेण ''न बहुव्रीहौ'' इति सूत्रेण वार्यते इति जिज्ञासायामुच्यते यत् ''असिद्धं बहिरङ्गम्'' इति परिभाषायाः बाधिका परिभाषा अपि

वर्तते 'अन्तरङ्गानपि विधीन् बहिरङ्गो विधिर्बाधते'। एवं स्पष्टं यत् यद्यपि अकच्कार्यमन्तरङ्गकार्यं तथापि बहिरङ्गेण निषेधविधिना बाध्यते। तेनेष्टसिद्धिः। अन्तरङ्गानपि विधीन् बहिरङ्गो विधिर्बाधते इत्यत्र किं प्रमाणम् इति जिज्ञासाशान्त्यर्थमुच्यते 'प्रत्ययोत्तरपदयोश्च' इति सूत्रे उत्तरपदग्रहणमेव प्रमाणम्। यथा- त्वत्पुत्रः, मत्पुत्रः, इत्यत्र तव पुत्रः, मम पुत्रः इति विग्रहे षष्ठीसमासे युष्मद् ङस्, पुत्र सु, अस्मद् ङस्, पुत्र सु इत्यत्र ''सुपोधातु '' इति सुब्लुगपेक्षया अन्तरङ्गत्वात् ङस्लुकः पूर्वं ''त्वमावेकवचने'' इति सूत्रेण त्वमादेशौ भविष्यतः। उत्तरपदग्रहणं व्यर्थं सत् ज्ञापयति अन्तरङ्गानपि धिीन् बहिरङ्गो विधिर्बाधते एवं ''सुपोधातु...'' इति बहिरङ्गेण लुका अन्तरङ्गंस्य ''त्वमावेकवचने'' इति सूत्रस्य बाधः क्रियते। एवं त्वमादेशविधानाय उत्तरपदग्रहणं चरितार्थं भवति।

न बहुव्रीहावित्यारभ्य अन्तरं बहिर्योगो. इति यावत्

गोनर्दीयपक्षः - महाभाष्यकारस्य पतञ्जलेरपरं नाम गोनर्दीयोऽप्यस्ति। तस्य पक्षः गोनर्दीयपक्षः। एवं गोनर्दीयपक्षे सूत्रमिदं न कर्तव्यमिति कृत्वा महाभाष्यकारेण सूत्रमिदं प्रत्याख्यातम्। यथा पूर्वम् अस्मिन्नेव सूत्रे भवन्तः अधीतवन्तो यत् अस्य सूत्रस्य किम् प्रयोजनमिति जिज्ञासायामाह महाभाष्यकारः- प्रियविश्वाय, द्व्यन्याय, त्र्यन्यायेति सर्वाद्यन्तस्य बहुवीहेः निषेधपक्षे प्रयोजनानि। असर्वाद्यन्तबहुव्रीहेः निषेधपक्षे तु त्वत्कपितृकः, मत्कपितृकश्च इत्युदाहरणम्। अन्ते महाभाष्यकारोऽस्य सूत्रस्य प्रत्याख्यानं कुर्वन्नाह- प्रियविश्वाय, द्व्यन्याय, त्र्यन्यायेत्येतदर्थं सूत्रमिदं कर्तव्यम्। यतो हि ''संज्ञोपसर्जनीभूतास्तु न सर्वादयः'' इति वचनेनैवोक्तरूपाणि सिद्धानि भविष्यन्ति। प्रियविश्वायेत्यादिषु विश्वादयः शब्दाः उपसर्जनीभूताः (गुणभूताः) सन्ति। उपसर्जनप्रतिषेधेनापि एतसिद्धम्।

तथा च ''त्वत्कपितृकः' ''मत्कपितृकः'' इत्याद्यर्थमपि 'न बहुव्रीहौ' सूत्रमिदं नावश्यकम्। यतो हि अकच्प्रत्यय एव तत्र अभीष्टो वर्तते। अर्थात् त्वकत्पितृकः, मकत्पितृक इति रूपे एव इष्टापत्तिं मत्वा सूत्रमिदं प्रत्याख्यातम्। यथोत्तरं मुनीनां प्रामाण्यम् इति वचनानुसारेण महाभाष्यकारस्येदं मतमेव प्रमाणं भवेत्। उक्तरूपमिच्छन्नाह पठञ्जलिः -

**अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयौ।**
**त्वकत्पितृको मकत्पितृक इत्येव भवितव्यम्॥**

अयं भावः - मुक्तसंशयौ = संशयरहितौ 'अव्ययसर्वनाम्नामकच् प्राक्टेः' इति अकच्, ''स्वाङ्गशिटामदन्तानाम्'' इति स्वरश्च, अन्तरङ्गत्वात्पूर्वं कर्तव्यौ। अत एव त्वकत्पितृकः, मकत्पितृक इत्येव भवति।

**मूलग्रन्थपाठो व्याख्या च**

**न बहुव्रीहौ १-१-२९**

**किमुदाहरणम्? प्रियविश्वाय। नैतदस्ति प्रयोजनम्। सर्वाद्यन्तस्य बहुव्रीहेः प्रतिषेधेन भवितव्यम्। वक्ष्यति चैतद्- 'बहुव्रीहौ सर्वनामसंख्ययोरूपसंख्यानमिति'। तत्र विश्वप्रियाय इति भवितव्यम्।**

**व्याख्या**- ''न बहुव्रीहौ'' इति सूत्रस्य प्रयोजनबोधनेच्छया आह- किमुदाहरणमिति। सूत्रस्यास्य किमुदाहरणमस्ति। सूत्राभावे प्रियविश्वायेति भवितुं नार्हति, ''प्रियविश्वस्मै'' इत्यनिष्ट-प्रयोगः स्यादत आह- प्रियविश्वायेति। प्रियं विश्वं यस्य सः प्रियविश्वः, तस्मै ''प्रियविश्वङे'' इत्यत्र द्वन्द्वे च इति ज्ञापकात् तदन्तस्यापि सर्वनामसंज्ञेति कृत्वा सर्वनामसंज्ञायाम् सत्यां ''सर्वनाम्नः स्मै'' इत्यनेन ''स्मै'' आदेशे सति प्रियविश्वस्मै इत्यनिष्टं स्यात् तन्मा भूत् इत्येतदर्थं ''न बहुव्रीहौ'' इति प्रकृतसूत्रेण सर्वनामसंज्ञायाः निषेधेन प्रियविश्वायेतीष्टं रूपं भवति।

एतदनन्तरं प्रियविश्वायेति प्रयोजनं खण्डयन् बाधकभाष्यमाह–नैतदस्ति प्रयोजनम्। प्रियविश्वायेति सूत्रस्य प्रयोजनं भवितुं नार्हतीत्यर्थः। कथमिति जिज्ञासायामाह–सर्वाद्यन्तस्य बहु–––इति। अयं भावः – यस्मिन् बहुव्रीहौ सर्वादयः अन्ते भविष्यन्ति तत्र निषेधो भविष्यति। अत्र हि ''बहुव्रीहौ 'सर्वनामसंख्ययोरुपसंख्यानमिति वक्ष्यमाणेन वचनेन सर्वनाम्नः पूर्वप्रयोगो भविष्यति। तदा विश्वप्रियाय इति प्रयोगो न तु प्रियविश्वायेति। बहुव्रीहिसमासे सर्वनाम्नः संख्यायाश्च पूर्वप्रयोगो भवतीति वार्तिकार्थः।

एवं प्रियविश्वायेत्यस्योदाहरणत्वेन बाधे सति उदाहरणान्तरं प्रदातुमाह –

**मूलग्रन्थपाठः**

**इदं तर्हि द्व्यन्याय त्र्यन्याय। न नु चात्रापि सर्वनाम्नः एव पूर्वनिपातेन भवितव्यम्। नैष दोषः। वक्ष्यत्येतत्- संख्यासर्वनाम्नोर्यो बहुव्रीहिः परत्वात् तत्र संख्यायाः पूर्वनिपातो भवतीति।**

**व्याख्या**– महाभाष्यकारः पतञ्जलिः वदति यत् यदि एवं (प्रियविश्वायेत्युदाहरणं नास्ति) तर्हि ''न बहुव्रीहौ'' इति सूत्रस्य द्व्यन्याय त्र्यन्यायेत्युदाहरणं (प्रयोजनं) बोध्यम्। त्र्यन्यायेत्यनन्तरम् इत्युदाहरणमिति शेषः बोध्यः।

द्व्यन्याय, त्र्यन्याय – द्वौ अन्यौ यस्य स द्व्यन्यः, तस्मै द्व्यन्यायेत्यत्र, त्रयो अन्ये यस्य स त्र्यन्यः, तस्मै त्र्यन्याय इत्यत्र च अन्यशब्दस्य अन्ते सत्वात् सर्वनामसंज्ञायाः प्राप्तिः, प्रकृतसूत्रेण च सर्वनाम्नो निषेधात् नात्र ''स्मै'' आदेशो भवति। इत्थं स्पष्टं यत् द्व्यन्याय त्र्यन्यायेत्यस्य सूत्रस्योदाहरणमस्ति।

द्व्यन्यायेत्याद्युदाहरणमपि खण्डयितुमाह– ननु चात्रापि सर्व... इति। द्व्यन्याय त्र्यन्यायेत्यपि उदाहरणत्वेन भवितुं नार्हति। यतो हि ''बहुव्रीहौ सर्वनाम...'' इति पूर्ववचनेन... अत्रापि अन्यशब्दस्य पूर्वनिपातो भविष्यति। तेन नोक्तोदाहरणम्। इदानीं प्रयोजनं बाधकतत्वं निराकर्त्तुमाह–नैष दोष इति। इदानीं महाभाष्यकारेण प्रतिपाद्यते यत् द्व्यन्याय त्र्यन्यायेत्युदाहरणं भविष्यति न कश्चन दोषः। यतो हि संख्यायाः, सर्वनाम्नश्च यो बहुव्रीहिः परत्वात् तत्र संख्यायाः पूर्वनिपातो भविष्यतीति वक्ष्यमाणेन वचनेन संख्यायाः पूर्वनिपाते सति ''न बहुव्रीहौ'' इति सूत्रस्य उदाहरणं द्व्यन्याय त्र्यन्यायेति भविष्यति। बहुव्रीहौ सर्वनामसंख्ययोरुपसंख्यानमिति वार्तिके संख्याशब्दस्य उल्लेखः पश्चात् (परः) वर्तते। अस्मात्कारणादेव लिखितं परत्वात्संख्यायाः पूर्वनिपातः। व्याकरणशास्त्रे 'विप्रतिषेधे परं' कार्यमित्यनेन परस्य बलवत्त्वं प्रसिद्धमेव।

इदानीं प्रियविश्वायेत्यस्य पुनरुदाहरणत्वं व्यवस्थापयन्नाह –

**मूलग्रन्थपाठः**

**इदं चाप्युदाहरणं प्रियविश्वाय। ननु चोक्तं विश्वप्रियायेति भवितव्यमिति। वक्ष्यत्येतत् ''वा प्रियस्येति''**

**व्याख्या**– पूर्वं बाधकभाष्येण प्रतिपादितं यत् प्रियविश्वायेत्युदाहरणं न भविष्यति। किन्तु इदानीं पुनः प्रियविश्वायेत्युदाहरणं भवितुमर्हतीति साधकभाष्येण उच्यते। अर्थात् यतो हि ''वा प्रियस्य'' इति वक्ष्यमाणेन वचनेन प्रियशब्दस्यापि विकल्पेन पूर्वनिपातो भवति। तेन प्रियविश्वायेति उदाहरणं ''न बहुव्रीहौ'' इति सूत्रस्य भविष्यति।

अधुना मतान्तरं दर्शयितुमुच्यते –

न बहुव्रीहावित्यारभ्य अन्तरं बहिर्योगो. इति यावत्

**मूलग्रन्थपाठः**

**न खल्वप्यवश्यं सर्वाद्यन्तस्यैव बहुव्रीहेः प्रतिषेधेन भवितव्यम्। किं तर्हि असर्वाद्यन्तस्यापि भावितव्यम्। किं प्रयोजनम्? अकच् मा भूदिति॥ किं च स्यात् यद्यत्राकच् स्यात् को न स्यात्। कश्चेदानीं काकचोर्विशेषः। व्यञ्जनान्तेषु विशेषः- अहकं पिता यस्य मकत्पितृकः। त्वकं पिता यस्य त्वकत्पितृकः इति प्राप्नोति। मत्कपितृकः, त्वत्कपितृक इति चेष्यते।**

**व्याख्या**- ''न बहुव्रीहौ'' इति सर्वाद्यन्तस्यैव बहुव्रीहेरर्थात् यस्य बहुव्रीहेरन्ते सर्वादयः शब्दाः सन्ति तस्यैव निषेध इति नाग्रहः। अपि तु असर्वद्यन्तस्यापि बहुव्रीहेः निषेधं सूत्रमिदं करोति। किं प्रयोजनमिति जिज्ञासायमुक्तं यत्-निषेधे सति अकच्प्रत्ययो यथा न स्यात्, कश्च स्यादिति। यदि असर्वाद्यन्तस्यापि प्रकृतसूत्रेण निषेधो न स्यात्तदा अकच् स्यात् को न स्यात्, इष्यते तु के सति त्वत्कपितृकः, मत्कपितृक इति मनसि निधाय एव लिखितं कश्चेदानीं काकचोर्विशेषः इति? उत्तरितं यत् व्यञ्जनान्तेषु विशेषः। अर्थात् हलन्तेषु सर्वनामशब्देषु विशेषो वर्तते। यथा- अहकं पिता यस्य, त्वकं पिता यस्येति लौकिकविग्रहे ''अस्मकद् सु पितृ सु'' ''युष्मकद् सु पितृ सु'' इत्यलौकिकविग्रहे बहुव्रीहिसमासे प्रकृतसूत्रेण निषेधे सति अकजभावे के सति अस्मत्क सु, पितृ सु ''युष्मत्क सु पितृ सु'' इति भेदः स्पष्ट एव। इत्थं निषेधेन अकजभावेन च के सति मपर्यन्तभागस्य त्वमादेशे त्वत्कपितृकः, मत्कपितृकः इतीष्टरूपं सिद्धं भवति। सूत्राभावे अकचिसति त्वकत्पितृकः, मकत्पितृकः इति स्यात्।

यद्यपि ''अन्तरङ्गे कार्ये कर्तव्ये बहिरङ्गमसिद्धं भवतीत्यर्थकेन ''असिद्धं बहिरङ्गमन्तरङ्गे'' इति वचनेन अन्तरङ्गं कार्यं बहिरङ्गशास्त्रेण बाधितुं न शक्यते। तथापि कुत्रचिद् स्थलेषु बहिरङ्गशास्त्रेण अन्तरङ्गशास्त्रस्य बाधो भवतीति प्रतिपादयन्नाह -

**मूलग्रन्थपाठः**

**कथं पुनरिच्छतापि भवता बहिरङ्गेण प्रतिषेधेनान्तरङ्गो विधिः शक्यो बाधितुम्। अन्तरङ्गानपि विधीन् बहिरङ्गो विधिर्बाधते गोमत्प्रिय इति यथा। क्रियते तत्र यत्नः प्रत्ययोत्तरपदयोश्चेति। ननु चेहापि क्रियते न बहुव्रीहाविति।**

**व्याख्या**- त्वत्कपितृकः, मत्कपितृक इत्यत्र अकच्प्रत्ययस्य निषेधं कर्तुमेव ''न बहुव्रीहौ'' इति सूत्रेण बहुव्रीहौ सर्वनामसंज्ञाया निषेधो भवति। केवलं युष्मदस्मदोरपेक्षत्वात् अकच्कार्यं हि अन्तरङ्गकार्यमस्ति। उभयपदापेक्षत्वात् ''न बहुव्रीहौ'' इति कार्यं बहिरङ्गकार्यमस्ति। तथा च ''असिद्धं बहिरङ्गमन्तरङ्गे'' इति वचनेन अन्तरङ्गकार्यस्य बलवत्त्वं बोध्यते। कथं? ''युष्मद् सु पितृ सु'' ''अस्मद सु पितृ सु'' इत्यवस्थायाम् अन्तरङ्गत्वात् प्राप्तमकच्प्रत्ययं बहिरङ्गेण ''न बहुव्रीहौ'' इति निषेधेन भवान् इच्छया बाधते।

यतो हि ''प्रत्ययोत्तरपदयोश्च'' इति क्रियमाणेन यत्नेन ज्ञायते यत् 'अन्तरङ्गानपि विधीन् बहिरङ्गो विधर्बाधते'। इति नियमोऽपि ''असिद्धं बहिरङ्गमन्तरङ्गे'' इति नियमस्य अपवादभूतो वर्तते। यथा- गोमत्प्रिय इति। गोमान् प्रियो यस्येति लौकिकविग्रहे, गोमत् सु प्रिय सु इत्यलौकिकविग्रहे बहुव्रीहिसमासे अन्तरङ्गेण प्राप्तं हलङ्यादिलोपं, बहिरङ्गः, ''सुपो धातुप्रातिपदिकयोः'' इति लुग् बाधते। तेन गोमान् प्रियः इत्यनिष्टप्रयोगो न भवति। एवं यथा गोमत्प्रिय इत्यत्र बहिरङ्गेण 'सुपोधातु' इति लुका अन्तरङ्गोऽपि हल्ङ्यादिलोपः, प्रत्ययोत्तरपदयोश्चेति क्रियमाणेन यत्ननिर्देशेन बाध्यते। तथा अत्रापि ''न बहुव्रीहौ'' इति क्रियमाणेन निर्देशेन अन्तरङ्गोऽपि अकच्प्रत्ययो वार्यते।

इदानीं ''न बहुव्रीहौ'' इत्यस्य अन्यत् प्रयोजनं प्रदर्श्य तस्य अन्तरङ्गस्य अकच्प्रत्ययस्य बाधकत्वे असमर्थतां प्रकटयितुमाह–अस्त्यन्यदेतस्येति। अन्ते च सिद्धान्तपक्षं ''न बहुव्रीहौ'' इति सूत्रस्य प्रत्याख्यानरूपं पक्षं प्रतिपादयितुमाह–उपसर्जनप्रतिषेधेनेति।

**मूलग्रन्थपाठः**

**अस्त्यन्यदेतस्य वचने प्रयोजनम्। किम्? प्रियविश्वाय। उपसर्जनप्रतिषेधेनाप्येतत् सिद्धम्॥ अयं खल्वपि बहुव्रीहिरस्त्येव प्राथमकल्पिकः, यस्मिन्नैकपद्यमैकस्वर्यमेकविभक्तिकत्वं च। अस्ति तादर्थ्यात् ताच्छब्द्यम्। बहुव्रीह्यर्थानि पदानि बहुव्रीहिरिति। तद्यत् तादर्थ्यात् ताच्छब्द्यम् तस्येदं ग्रहणम्। गोनर्दीयस्त्वाह–**

**अकच्स्वरौ तु कर्तव्यौ प्रयङ्गं मुक्तसंशयौ।**
**त्वकत्पितृको मकत्पितृक इत्येव भवितव्यम्॥**

**व्याख्या**– यथा– प्रत्ययोत्तरपदयोश्चेत्यनेन यत्नेन गोमत्प्रिय इत्यत्र बहिरङ्गेण 'सुपो धातु.' इति लुका अन्तरङ्गस्य ''हलङ्यादिलोपस्य बाधो भवति, न तथा ''न बहुव्रीहौ'' इति यत्नेन अन्तरङ्गस्य अकच्प्रत्ययस्य बाधो भविष्यति। यतो हि ''न बहुव्रीहौ'' इति यत्नस्य प्रियविश्वायेत्यन्यत् प्रयोजनं वर्तते। अन्यस्मिन् प्रयोजने सति बाधकत्वं भवितुं नार्हति।

एतदनन्तरं महाभाष्यकारेण सूत्रस्य प्रत्याख्यानपक्षरूपः सिद्धान्तपक्षः समुपस्थापितः। तथा हि– ''न बहुव्रीहौ'' इति सूत्रस्य ''प्रियविश्वाय'' द्व्यन्यायेत्यादीनि, त्वत्कपितृकः मत्कपितृक इति च उदाहरणानि (प्रयोजनानि) उक्तानि। तत्र प्रियविश्वाय द्व्यन्याय, त्र्यन्यायेत्यत्र विश्वशब्दस्य, अन्यशब्दस्य चोपसर्जनत्वात् ''संज्ञोपसर्जनप्रतिषेधः'' इति वचनेनैव सर्वनामसंज्ञाया निषेधात् न ङेः स्थाने ''स्मै'' आदेशो भवति। एवमुक्तोदाहरणार्थं ''न बहुव्रीहौ'' इति सूत्रं नावश्यकमस्ति। इत्थं ''न बहुव्रीहौ'' इति यत्नेन अन्तरङ्गस्याकच्प्रत्ययस्य बाधो भवति। तथा च त्वत्कपितृको मत्कपितृक इत्यत्र अस्मात् कारणादपि अकच्प्रत्ययस्य निवृत्तिर्भवति। यतो हि ''न बहुव्रीहौ'' इति सूत्रे बहुव्रीहिपदमलौकिकप्रक्रियावाक्यमस्ति। अस्यापि बहुव्रीह्यर्थत्वात् बहुव्रीहिपदेन व्यवहारो भवति। तादर्थ्यात् ताच्छब्द्यम्। बहुव्रीह्यर्थानि पदानि बहुव्रीहिरित्यस्योक्त एवार्थः। ''युष्मत् सु पितृ सु'' ''अस्मद् सु पितृ सु'' इत्यलौकिकप्रक्रियावाक्ये एव युष्मदस्मदोः सर्वनामसंज्ञाया निषेधो भवति।

इत्थं स्पष्टं यत् बहुव्रीहिः द्विविधात्मको भवति।

१. प्रथमकल्पे भवः प्राथमकल्पिकः मुख्यः एकार्थीभावात्मकः समासरूपः। यत्रैकं पदं, एकः स्वरः एका विभक्तिश्च भवति। यथा भवन्तः जानन्ति एकार्थीभावरूपसमासे सति ऐकपद्यमैकस्वर्यमेकविभक्तिकत्वञ्च भवति।

२. तादर्थ्यात् ताच्छब्द्यम् इति नियमानुसारेण एकार्थीभावसमासार्थं यदलौकिकप्रक्रियावाक्यं तदपि बहुव्रीहिपदेन बोध्यते। अत्रैतद् द्वितीयं बहुव्रीहिपदेन बोध्यते। एतदर्थमेव ''न बहुव्रीहौ'' इति सप्तम्यन्तपदस्य ग्रहणमस्ति। अन्यथा न 'बहुव्रीहिः' इति प्रथमान्तमेव स्यात्। सप्तम्यन्ते, बहुव्रीहिसमासे अलौकिकप्रक्रियावाक्ये सर्वादयः सर्वनामसंज्ञका न स्युरित्यर्थः। अयमर्थः बहुव्रीहिसमासे चिकीर्षिते इत्यनेनापि आयाति। प्रथमान्ते तु नैतत्स्यादिति भावः।

अन्ते महाभाष्यकारेण सूत्रमिदं प्रत्याख्यातम्। तेनोक्तं यत् प्रियविश्वायेत्यादौ ''संज्ञोपसर्जनप्रतिषेधः'' इति वचनेनैव सर्वनामसंज्ञाया निषेधो भविष्यति। तदर्थं सूत्रमिदं

नावश्यकम्। तथा च त्वत्कपितृकः, मत्कपितृक इत्येतदर्थमपि सूत्रमिदमावश्यकम् नास्ति। यतो हि अकज्विशिष्टः, त्वत्पितृकः, मकत्पितृक एवेष्टरूपमस्ति। एतदर्थं महाभाष्यकारेण लिखितं ''अव्ययसर्वनाम्नामकच्प्राक् टेः'' इत्यनेन विहितोऽकच्प्रत्ययः ''स्वाङ्गाशिटामदन्तानाम्'' इत्यनेन विहितः सर्वनाम्नः आद्युदात्तस्वरश्च अन्तरङ्गत्वात् संशयं परिज्यज्य कर्तव्यः। तेन त्वकत्पितृकः, मकत्पितृक इति रूपमेव साधु रूपमस्ति। यथोत्तरं मुनीनां प्रामाण्यमित्यनेन अस्माभिरपि तदेवाङ्गीकार्यम्।'न बहुव्रीहौ' इति सूत्रं केवलमदृष्टार्थं पारायणादौ पुण्यार्थमस्ति।

न बहुव्रीहावित्यारभ्य अन्तरं बहिर्योगो. इति यावत्

**बोधप्रश्नः**

१. ''न बहुव्रीहौ'' इति सूत्रस्य कानि उदाहरणानि अत्र समागतानि।

२. असर्वाद्यन्तस्य निषेधे किमुदाहरणम्?

३. सूत्रसत्वे, सूत्राभावे च किमुदाहरणम्?

### १०.३.४ सर्वनामसंज्ञाया निषेधे न्यूनतापरिहाराय वार्तिकं तत्प्रत्याख्यानञ्च

आढ्यो भूतपूर्व आढ्यपूर्वः तस्मै आढ्यपूर्वाय देहि इत्यत्र सर्वनामसंज्ञाया निषेधं कर्त्तुं वार्तिकमाह- 'प्रतिषेधे भूतपूर्वस्योपसंख्यानम्' इति। सर्वनामसंज्ञाया निषेधे भूतपूर्वस्य पूर्वाद्यन्तशब्दस्य उपसंख्यानं कर्तव्यमिति वार्तिकार्थः। अर्थात् भूतपूर्वार्थकस्य आढ्य पूर्वादिशब्दानां सर्वनामसंज्ञाया अभावार्थं प्रतिषेधः कर्तव्यः। तेन आढ्यपूर्वाय इत्यत्र न ''स्मै'' आदेशः। अत्र हि पूर्वशब्दस्य सर्वादिगणपठितत्वात् सर्वनामसंज्ञायाः प्राप्तिर्वर्तते।

उपर्युक्ताक्षेपनिरासाय महाभाष्यकारेण झटित्येव प्रतिपादितं यत् ''प्रतिषेधे भूतपूर्वस्योपसंख्यानम्'' इति वचनस्य आवश्यकता नास्ति। यतो हि – 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायाम्' इति गणसूत्रे व्यवस्थावाचिनः पूर्वादिशब्दस्य ग्रहणात्, आढ्यपूर्वशब्दे पूर्वशब्दो न व्यवस्थावाची, अतो न सर्वनामसंज्ञा। एतन्मनसि निधायैव लिखितम्- ''प्रतिषेधे भूतपूर्वस्योपसंख्यानानर्थक्यं पूर्वादीनां व्यवस्थायामिति वचनात्'' इति। अर्थात् प्रतिषेधे = सर्वनामसंज्ञाया निषेधे भूतपूर्वस्योपसंख्यानमावश्यकं नास्ति। यतोहि व्यवस्थावाचिन एव पूर्वादयः सर्वनामसंज्ञका भवन्ति। आढ्यपूर्वशब्दे न व्यवस्था गम्यमाना अस्ति।

**मूलग्रन्थपाठो व्याख्या च**

**मूलग्रन्थपाठः**

**(वा.) प्रतिषेधे भूतपूर्वस्योपसंख्यानम्''**

**प्रतिषेधे भूतपूर्वस्योपसंख्यानं कर्तव्यम्। आढ्यो भूतपूर्वः आढ्यपूर्वः। आढ्यपूर्वाय देहीति।**

**(वा.) प्रतिषेधे भूतपूर्वस्योपसंख्यानानर्थक्यं पूर्वादीनां व्यवस्थायामिति वचनात्।**

**प्रतिषेधे भूतपूर्वस्योपसंख्यानमनर्थकम्। किं कारणम्। पूर्वादीनां व्यवस्थायामिति वचनात्। पूर्वादीनां व्यवस्थायां सर्वनामसंज्ञोच्यते। न चात्र व्यवस्था गम्यते।**

**व्याख्या**- आढ्यो भूतपूर्वः, आढ्यपूर्वः तस्मै देहीति आढ्यपूर्वाय देहीत्यत्र ङेः स्थाने स्मै आदेशो मा भूत् इत्येतदर्थं भूतपर्वार्थक पूर्वाद्यन्तस्य प्रतिषेधो वक्तव्य इत्यर्थकं

''प्रतिषेधे भूतपूर्वस्योपसंख्यानमि''ति वचनं कर्तव्यम्। तेन आढ्यपूर्वायेतीष्टरूपं सिद्धं भवति। अत्र पूर्वशब्दस्य सर्वादिगणपठितत्वात् सर्वनामसंज्ञायाः प्राप्तिः।

एतदनन्तरं लिखितं महाभाष्यकारेण यत् आढ्यपूर्वाय इत्यत्र सर्वनामसंज्ञाया निषेधो न कर्तव्यः। यतो हि व्यवस्थायामेव पूर्वादीनां सर्वनामसंज्ञा 'पूर्वपरावरदक्षिणोत्तर' इति सूत्रेण भवति। आढ्यपूर्वाय इत्यत्र पूर्वशब्दो न व्यवस्थायामस्ति। इत्थं सर्वनाम्नः प्राप्त्यभावात् निषेधो नावश्यक इति।

**बोधप्रश्नः**

१. ''प्रतिषेधे भूतपूर्वस्योपसंख्यानमिति वचनं कथं नावश्यकम्?

### १०.३.५ निष्कर्षः

बहुव्रीहौ चिकीर्षिते सर्वादीनि सर्वनामानि न स्युरित्यर्थकेन ''न बहुव्रीहौ'' इति सूत्रेण बहुव्रीहिसमासे सर्वनामसंज्ञाया निषेधः क्रियते। तेन प्रियविश्वाय, द्व्यन्याय, त्र्यन्याय इत्यत्र सर्वनामसंज्ञाभावात् न ङेः स्थाने स्मै आदेशः। तथा च ''न बहुव्रीहौ'' इति सूत्रेण सर्वनामसंज्ञायाः निषेधात् अहकं पिता यस्य, त्वकं पिता यस्येति विग्रहेण बहुव्रीहिसमासे अकच्प्रत्ययो न भवति। तेन कप्रत्यये सति त्वत्कपितृकः, मत्कपितृक इति रूपं सिद्धं भवति। वस्तुतो निष्कर्षरूपेण 'न बहुव्रीहौ' इति सूत्रं न कर्तव्यम् इति महाभाष्यकारेण प्रतिपादितम्। तथा सति प्रियविश्वाय, द्व्यन्याय, त्र्यन्यायेत्यत्र ''संज्ञोपसर्जनप्रतिषेधः'' इत्यनेन सर्वनामसंज्ञाया निषेधो भवति। तथा अहकं पिता यस्य सः, त्वकं पिता यस्य स इत्यत्र बहुव्रीहिसमासे अकजेव भविष्यति। तेन त्वकत्पितृको मकत्पितृक इति अकज्विशिष्टमेव रूपं भविष्यतीति कृत्वा सूत्रमिदं प्रत्याख्यातम्। तथा आढ्यपूर्वायेत्यत्र ङेः स्थाने स्मै आदेशो मा भूदित्येतदर्थं प्रतिषेधे भूतपूर्वस्योपसंख्यानमिति वार्तिकं कर्तव्यम् इत्याक्षिप्य अन्ते इदमपि वार्तिकं पतञ्जलिना प्रत्याख्यातम्। तेनोक्तं यत् प्रतिषेधवचनमनर्थकम्। व्यवस्थायामेव पूर्वादीनां सर्वनामसंज्ञा भवति। आढ्यपूर्वाय इत्यत्र व्यवस्थावाची पूर्वशब्दो नास्तीति न दोषः।

## १०.४ तृतीयासमासे (१-१-३०)

### १०.४.१ अनुवृत्तिः, समासप्रदर्शनम्, सूत्रार्थः, उदाहरणम्

अनुवृत्तिः- ''न बहुव्रीहौ'' इत्यतो ''न'' इति पदम्, ''सर्वादीनि.'' इत्यतः सर्वनामग्रहणञ्चानुवर्तते।

समासप्रदर्शनम्- ''तृतीयासमासे'' इत्यत्र द्विविधात्मकः समासो भवति-

१. तृतीयायाः समासस्तस्मिन् इति तृतीयासमासे।

२. तृतीयायाः असमासे तृतीयाऽसमासे।

१. सूत्रार्थः - तृतीयासमासे सर्वनामता न स्यात्। उदाहरणम् - मासेन पूर्वाय मासपूर्वाय।

२. सूत्रार्थः - तृतीयाया असमासेऽपि = तृतीयासमासीयलौकिक-विग्रहवाक्यरूपगौणसमासस्यापि सर्वनामता न स्यात्। उदाहरणम्- मासेन पूर्वाय। तृतीयासमासार्थवाक्येऽपि सर्वनामसंज्ञा नेति भावः।

### १०.४.२ सूत्रे समासग्रहणस्य प्रयोजनम्

न बहुव्रीहावित्यारभ्य अन्तरं बहिर्योगो. इति यावत्

''विभाषा दिक्समासे.'' इति पूर्वसूत्रादेव ''समासे'' इति पदस्य अनुवृत्ति र्भवितुमर्हति। एवं पूर्वेणैव समासपदलाभे पुनः समासग्रहणं किमर्थमिति जिज्ञासायामुच्यते यत् समासेन द्विविधोऽर्थो गृह्यते। एकस्तावत् प्रधानएकार्थीभावरूपः। यस्मिन्नैकपद्यमैकस्वर्यमेकविभक्तिकत्वञ्च भवति। यथा - मासपूर्वाय इति। द्वितीयस्तावत् तादर्थ्यात् ताच्छब्द्यमिति नियमात् समासार्थलौकिकविग्रहवाक्यरूपम्। यथा- मासेन पूर्वाय। पुनः समासग्रहणस्येदं प्रयोजनं यत् समासार्थवाक्येऽपि निषेधो यथा स्यात्। एवं पुनः समासग्रहणसामर्थ्यात् मासेन पूर्वाय इति लौकिकवाक्येऽपि सर्वनामसंज्ञा न भवति इति एकं समाधानम्।

अथवा समास इति अनुवर्तमाने पुनः समासग्रहणस्य प्रयोजनं योगाङ्गं यथा विज्ञातं भवतु इत्यस्ति। अर्थात् सूत्रे तृतीया + असमासे इति विच्छेदं कर्तुमेव अत्र ''समासे'' इति पदं लिखितम्। एवं योगविभागे सति १. तृतीया २. असमासे इतिच्छेदः। तत्र ''तृतीया'' इत्यस्यार्थो भविष्यति तृतीयासमासे सर्वादीनि सर्वनामसंज्ञानि न भवन्ति। तेन मासपूर्वाय देहीत्यत्र न ''स्मै'' आदेशः। तथा ''असमासे'' इति द्वितीयपदस्यार्थो भविष्यति असमासे च 'तृतीयायाः सर्वनामसंज्ञा न भवति, तेन मासेन पूर्वाय इति असमासे तृतीयासमासार्थवाक्येऽपि सर्वनामसंज्ञाऽभावात् न ''स्मै'' आदेश इति द्वितीयं समाधानम्।

#### मूलग्रन्थपाठो व्याख्या च

**समास इति वर्तमाने पुनः समासग्रहणं किमर्थम्? अयं तृतीयासमासोऽस्त्येव प्राथमकल्पिकः। यस्मिन्नैकपद्यमैकस्वर्यमेकविभक्तिकत्वं चेति। अस्ति च तादर्थ्यात् ताच्छब्द्यम्। तृतीयासमासार्थानि पदानि तृतीयासमास इति। तद्यत् तादर्थ्यात् ताच्छब्द्यं तस्येदं ग्रहणम्।**

**व्याख्या**- विभाषा दिक्समासे बहुव्रीहौ १-१-२८ इति सूत्रात् 'समासे' इति पदस्य अनुवृत्ति- र्भवितुं शक्नोति। एवम् अनुवृत्त्या सिद्धे पुनः समासग्रहणं किमर्थमिति समासग्रहणस्य प्रयोजनज्ञानाय पृच्छति-समास इति वर्तमाने इति।

प्रथमं समाधानं प्रदातुमाह महाभाष्यकारः - अयमिति=अयं तृतीयासमासो द्विविधात्मको भवति। एकस्तावत् प्रथमकल्पे भवः प्राथमकल्पिकः - मुख्यमेकार्थीभावरूपम्। यत्रैकपदम्, एकस्वरः, एकविभक्तिश्च भवति। द्वितीयस्तावत् मुख्याय एकार्थीभावरूप- तृतीयासमासाय कृतं लौकिकविग्रहववाक्यं भवति। एतल्लौकिकविग्रहवाक्यं हि तृतीयासमासाय भवति। अतः मासेन पूर्वाय, संवत्सरेण पूर्वाय इति लौकिकवाक्यस्यापि तृतीयासमासपदेन ग्रहणं स्यादित्येतदर्थं पुनः समासग्रहणं वर्तते।

यथा- मासेन पूर्वाय मासपूर्वाय। अत्र मासपूर्वायेति एकार्थीभावरूप तृतीयासमासोऽस्ति। तदर्थमेव मासेन पूर्वाय इति लौकिकवाक्यमति तृतीयासमासो भविष्यति। तेन मासपूर्वाय इति पदस्य इव मासेन पूर्वाय इति लौकिकवाक्येऽपि सर्वनामसंज्ञा प्रकृतसूत्रेण निषिध्यते। सर्वनामसंज्ञाऽभावात् उभयत्रैव न ''स्मै'' आदेशः।

समाधानान्तरं प्रदातुमाह-अथवेति।

#### मूलग्रन्थपाठः

**अथवा समास इति वर्तमाने पुनः समासग्रहणस्यैतत् प्रयोजनम्। योगाङ्गं यथा**

**विज्ञायेत। सति च योगाङ्गे योगविभागः करिष्यते। ''तृतीया''। तृतीयासमासे सर्वादीनि सर्वनामसंज्ञानि न भवन्ति। मासपूर्वाय देहि। संवत्सरपूर्वाय देहीति। ततोऽसमासे। असमासे च तृतीयायाः सर्वादीनि सर्वनामसंज्ञानि न भवन्ति। मासेन पूर्वाय देहि। संवत्सेरण पूर्वाय देहीति।**

**व्याख्या-** अथवा ''विभाषा दिक्समासे...'' इति सूत्रात् ''समासे'' इति पदं ''तृतीयासमासे'' इति सूत्रेऽपि अनुवर्तितुमर्हति। पुनः समासपदग्रहणसामर्थ्यात् प्रकृतसूत्रे योगविभागो भवति। तत्र प्रथमः ''तृतीया'' इति योगः द्वितीयश्च ''असमासे'' इति योगश्च भवति। प्रथमयोगेन समस्तस्थले निषेधः, द्वितीयेन च असमासे, अर्थात् समासार्थं यत् लौकिकवाक्यं तत्र निषेधः क्रियते। तेन मासेन पूर्वाय, संवत्सरेण पूर्वाय इत्यसमासेऽपि सर्वनामसंज्ञाया निषेधे सति न ''स्मै'' इति आदेशः। इत्थं ''तृतीया'' इत्यस्य अर्थो भवति- तृतीयासमासे (समस्तस्थले) सर्वादीनि सर्वनामानि न भवन्तीति। एवम् मासपूर्वाय देहि, संवत्सरपूर्याय देहीति रूपं सिद्धं भवति।

''असमासे'' इत्यस्यार्थः- असमासे च तृतीयायाः सर्वादीनि सर्वनामसंज्ञानि न भवन्ति। तेन मासेन पूर्वाय देहि, संवत्सरेण पूर्वाय देहीति रूपं सिद्धम्।

**बोधप्रश्नः**

५. ''तृतीया समासे इति सूत्रेण कस्याः संज्ञाया निषेधः क्रियते ?

६. समासग्रहणस्य कति समाधानं भवति ?

७. समासपदस्यानुवृत्तिः कस्मात् सूत्रात् सिद्धा ?

### १०.४.३ निष्कर्षः

सूत्रेऽस्मिन् समासग्रहणस्य समाधानद्वयं प्रदत्तम्। उभयोरपि समाधानयो-स्तात्पर्यमिदमेव वर्तते यत् तृतीयासमासार्थवाक्येऽपि (मासेन पूर्वायेत्यादौ) सर्वनामसंज्ञा मा भूत्। तत्र प्रथमं समाधानम् समासो द्विविधात्मको भवति। एकस्तावत् एकार्थीभावरूपो मुख्यः। यत्रैकपद्यमैकस्वर्यमेकविभक्तित्वञ्च भवति। द्वितीयस्तावत् तृतीयासमार्थानि पदानि। मासेन पूर्वायेत्यादि लौकिकवाक्यमपि 'तृतीयासमासे' इत्यनेन गृहीतं स्यादित्येतदर्थं पुनः समासग्रहणम्। तेन वाक्येऽपि न संज्ञेति भावः।

द्वितीयं समाधानम्- पुनः समासग्रहणस्यैतत् प्रयोजनं यत् योगाङ्गं यथोपजायेत। अर्थात् सूत्रच्छेदं कृत्वा १. तृतीया २. असमासे इत्येवं विधो योगविभागो यथा स्यात्। तेन ''असमासे'' इत्यस्यार्थो भविष्यति-असमासे च तृतीयायाः सर्वादीनि सर्वनामसंज्ञानि न भवन्ति। तेन मासेन पूर्वायेत्यादौ वाक्येऽपि (समासभिन्नसदृशे) सर्वनामसंज्ञाया निषेधो भवतीति दिक्।

## १०.५ विभाषा जसि ( १-१-३१ )

### १०.५.१ अनुवृत्तिः, सूत्रार्थः, उदाहरणम्

अनुवृत्तिः - 'सर्वादीनि.' इत्यतः सर्वनामपदं ''द्वन्द्वे च'' इत्यतः ''द्वन्द्वे'' इति पदञ्चानुवर्तते।

''जसि'' इत्यविभक्तिको निर्देशः। जसः, इः इति जसिः तस्मिन् इति

विग्रहे सप्तम्येकवचनविवक्षायाम् ''जसि इ'' इति स्थिते आर्षत्वात् सप्तम्याः लुक्। जसि इत्यत्र इ-शब्दः इवर्णपरोऽस्ति। तेन ''शी'' इत्यस्य इकारो बोध्यते। इत्थं जसादेशे शीभावे कर्तव्ये द्वन्द्वेसर्वनामसंज्ञा वा स्यादिति सूत्रार्थो निष्पन्नो भवति।

न बहुव्रीहावित्यारभ्य अन्तरं बहिर्योगो. इति यावत्

उदाहरणम् - वर्णाश्रमेतरे, वर्णाश्रमेतराः। वर्णाश्च आश्रमाश्च इतरे चेति विग्रहे इतरेतर द्वन्द्वसमासे वर्णाश्रमेतर जस् इति स्थिते ''द्वन्द्वे च'' इति सूत्रेण सर्वनामसंज्ञाया नित्यनिषेधे प्राप्ते प्रकृतसूत्रेण सर्वनामसंज्ञा विकल्प्यते। तेन सर्वनामसंज्ञा पक्षे ''जसः शी'' इत्यनेन ''शी'' इत्यादेशे अनुबन्धलोपे गुणे वर्णाश्रमेतरे इति रूपं सिद्धं भवति। सर्वनामसंज्ञाया अभावे ''शी'' न भविष्यति तदा पूर्वसवर्णदीर्घे सति ''वर्णाश्रमेतराः'' इति रूपं सिद्धं भवति। जसः इ इति 'जसि' अत्र गृह्यते। तेन इवर्णरूपं शीकार्यं प्रत्येव विभाषा। अतो नाकच् किन्तु कप्रत्यय एव। वर्णाश्रमेतरकाः।

**मूलग्रन्थपाठो व्याख्या च**

**जसः कार्यं प्रति विभाषा। अकज्झि न भवति। (द्वन्द्वे चेति प्रतिषेधात्)।**

**व्याख्या**- सूत्रस्यार्थप्रतिपादनाय अतिव्याप्तिदोषनिरासाय च लिखितं जसः कार्यमिति। जसि इति पदम् अविभक्तिकं वर्तते। जसः इः इति जसि। तस्मिन्निति विग्रहे जसि इ इति स्थिते आर्षत्वात् सप्तम्याः लुक्। इशब्देन ''शी'' इत्यस्य इवर्णस्य बोधो भवति। तेन शीकार्यं प्रति एव विभाषा भवति। अकज्कार्यं प्रति तु 'द्वन्द्वे च' इति सूत्रेण सर्वनामसंज्ञायाः निषेधोभवति। तेन के सति वर्णाश्रमेतरका इति रूपमेव भवति।

**बोधप्रश्नः**

८. कथं जसः स्थाने शीकार्यं प्रत्येव विभाषा ?

**१०.५.२ निष्कर्षः**

महाभाष्यकारेण ''विभाषा जसि'' इति सूत्रस्य अर्थो व्यवस्थापितः। तेन ध्वनितं यत् सूत्रस्थजसिपदं सप्तम्यन्तं नास्ति अपितु जसः इः इति जसि अस्ति। ''इ'' इत्यनेन ''शी'' वर्णस्य बोधो भवति। तेन शीभावाख्यं कार्यं प्रत्येव विभाषा। अकच्कार्यं प्रति तु निषेधः।

## १०.६ पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् (१-१-३३)

### १०.६.१ अनुवृत्तिः, सूत्रार्थः, उदाहरणानि

अनवृत्तिः- ''सर्वादीनि सर्वनामानि'' इत्यतः सर्वनामानि इति पदं, ''विभाषा जसि'' इति सम्पूर्णं सूत्रञ्चानुवर्तते।

सूत्रार्थः- पूर्वादिसप्तानां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणपाठात्सर्वत्र या प्राप्ता सा जसि वा स्यात्। व्यवस्थापदेनात्र स्वाभिधेयापेक्षावधिनियमो गृह्यते। ''अपेक्ष्यते'' इति अपेक्षः कर्मणि घञ्। स्वस्य = पूर्वादिशब्दस्य अभिधेयम् = वाच्यं तेन अपेक्षस्यापेक्ष्यमाणस्य = अवधेर्नियमो व्यवस्थाशब्देन विवक्षित इति भावः।

उदाहरणानि - पूर्वे, पूर्वाः। परे, पराः। अवरे, अवराः। दक्षिणे, दक्षिणाः। उत्तरे, उत्तराः। अपरे, अपराः। अधरे, अधराः। उक्तोदाहरणेषु प्रकृतसूत्रेण विभाषया सर्वनामसंज्ञा जसि परे यदा जाता, तदा ''जसः शी'' इत्यनेन श्यादेशे अनुबन्धलोपे गुणे ''पूर्वे'' इति

सिद्धम्। यदा सर्वनामसंज्ञा न भवति तदा ''शी'' इत्यादेशोऽपि न भवति। तेन पूर्वसवर्णदीर्घे सति ''पूर्वाः'' इति रूपं भवति। एवं ''परे, पराः'' इत्यादिषूदाहरणेष्वपि बोध्यम्।

अत्रायं विशेषो यत् ''पूर्वपरा'' इत्यादिसूत्रम् एकं सर्वादिगणे पठितं सूत्रमस्ति। द्वितीयं चेदमष्टाध्याय्यां पठितं सूत्रमस्ति। उभयोर्मध्ये कः पूर्वपाठः, कश्च परपाठ इति विचार एवात्र भाष्ये समागतः। सूत्रमिदं किमर्थमिति प्रश्नः, अत एव कृतः।

### १०.६.२ अवरादीनां सूत्रपाठे प्रयोजनविचारः सिद्धान्तपक्षश्च

यथा भवद्भिः ज्ञातं यत् ''पूर्वपरा'' इति एकं गणसूत्रम् (सर्वादिगणे समागतं सूत्रम्) द्वितीयं च अष्टाध्याय्यां पठितं सूत्रं वर्तते। तत्र महाभाष्यकारेण जिज्ञासितं यत् यदि गणसूत्रमस्ति। तर्हि कथं पुनः अष्टाध्याय्यां तत्सूत्रमेव लिखितमिति प्रश्ने तेन पूर्वपक्षत्वेन समाधानत्रयमुक्तम्। तत्र प्रथमम् समाधानं तत्खण्डनञ्च -

१. अष्टाध्यायीस्थं ''पूर्वपरा'' इति सूत्रं व्यर्थं यतो हि गणसूत्रेणैव पूर्वादीनां सर्वनामसंज्ञा भविष्यति ? इति प्रश्ने महाभाष्यकारेणोक्तं सूत्रमिदं व्यर्थं नास्ति यतः, अनेनैव सूत्रेण सर्वनामसंज्ञा पूर्वादीनां भविष्यति गणसूत्रमेव व्यर्थमस्ति। एवं गणसूत्रं व्यर्थमिदं सूत्रं वेति ज्ञानं कर्तुमेतत्पूर्वं ज्ञातव्यं यत् पूर्वपाठः कः, कश्च परपाठ इति। यो हि पूर्वपाठो भविष्यति सः सिद्धः, यश्च परपाठः स च व्यर्थतामाप्नोति।''पूर्वादिभ्यो नवभ्यो वा'' इति सूत्रस्थ-नवग्रहणेन ज्ञायते यत् गणपाठः पूर्वः, सूत्रपाठः पर इति। यदि सूत्रपाठः पूर्वस्तर्हि नवैव पूर्वादीनि सन्ति। तेषामेव ग्रहणं 'पूर्वादिभ्यः' इत्यनेन भविष्यति। नवग्रहणं व्यर्थं भविष्यति। यदा गणपाठः पूर्वस्तदा पूर्वादयो नवाधिकाः भवन्ति। नवानामेव ग्रहणं भवतु इत्येतदर्थं नवग्रहणं कृतं सार्थकम्। तथा हि- गणपाठे येन क्रमेण वर्तते तद्धि विलिख्यते। पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् (गणसूत्र १) स्वमज्ञातिधनाख्यायाम् (ग. सू. २) अन्तरं बहिर्योगोपसंव्यानयोः (ग.सू.३) त्यद्, तद्, यद्, एतद्, इदम्, अदस्, एक, द्वि, युष्मद्, अस्मद् भवतु, किम्।

इत्थं स्पष्टं यत् गणपाठः, पूर्वः, सूत्रपाठः परः इति। इत्थं प्रथमे समाधाने खण्डिते पुनः प्रश्नः समागतो यत् गणपाठेन सर्वनामसंज्ञा सिद्धा, पुनः सूत्रमिदं किमर्थमिति प्रश्ने द्वितीयं समाधानम्, तत्खण्डनञ्च -

२. एतत् सूत्रं (अष्टाध्याय्यां पठितं) हि व्यवस्थायामसंज्ञायां च सर्वनामसंज्ञां करोति। अतो न व्यर्थमित्यपि वक्तुं शक्यते। यतो हि गणसूत्रेणापि व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा उच्यते। एवं स्पष्टं यत् गणपाठेन सिद्धे पुनः सूत्रमिदं किमर्थमिति प्रश्ने तृतीयं समाधानं तत्खण्डनञ्च -

३. किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ५-३-२ इति सूत्रं वर्तते। तेन प्राग्दिशीयाः त्रलादिप्रत्ययाः अद्व्यादिभ्यः सर्वनामभ्यो भवन्ति। यदा द्व्यादिपदेन- द्वि युष्मद् अस्मद् भवतु, किम् पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् (ग.सू.१)

स्वमज्ञातिधनाख्यायाम् (ग. सू.-२) अन्तरं बहिर्योगोपसंव्यानयोः (ग.सू.-३) इत्येतेषां ग्रहणं भवति, तदा पूर्वादिभ्योऽपि प्रादिशीयाः प्रत्ययाः अप्राप्ताः भवन्ति। तेन पूर्वत्र, उत्तरत्रादिशब्दानां सिद्धिर्न स्यात्। अतः एव पुनः अष्टाध्यायीस्थेन ''पूर्वपरा'' इति सूत्रेण सर्वनामसंज्ञाया विधानं भवति। तेन द्व्यादिपर्युदासेन पूर्वादीनां पर्युदासो न भवति, पुनः सर्वनामसंज्ञाविधानसामर्थ्यात्। अत्र यो हि पाठो मया प्रदत्तः। सः पाठः केषाञ्चिदाचार्याणां मते भवति। अस्मिन्नेव मते भाष्यमिदं संगच्छते।

न बहुव्रीहावित्यारभ्य अन्तरं बहिर्योगो. इति यावत्

एतदनन्तरं महाभाष्यकारेण उक्तं यत् द्व्यादिपर्युदासेन पर्युदासो मा भूदित्येतदर्थमपि सूत्रमिदं न कर्तव्यम्। यतो हि ''पूर्वत्रासिद्धम्'' इति सूत्रेण ''जश्भावादिति चेदुत्तरत्राभावादपवादप्रसङ्गः'' इति ''ढो ढे लोपः'' इति सूत्रस्थेन वार्तिकेन ज्ञायते यत् पूर्वादिभ्यः त्रलादयः प्रत्ययाः भवन्ति। द्व्यादिपर्युदासेन पर्युदासो न भवति। यदि पूर्वादिभ्यः त्रलादयो न स्युस्तर्हि सूत्रस्थं ''पूर्वत्र'' इति पदं, वार्तिकस्थम्, ''उत्तरत्र'' इति पदञ्च कथं स्यात्। एवं स्पष्टं यत् निपातनादेव (ज्ञापनादेव) द्व्यादिपुर्यदासेन पर्युदासो न भविष्यति। पुनः सूत्रं किमर्थमिति प्रश्नः पुनः समागतः ? इदानीं सिद्धान्तपक्षम्, उत्तररूपेणाह महाभाष्यकारः -

सिद्धान्तपक्षः- ''विभाषा जसि'' इति सम्पूर्णं सूत्रमनुवर्तते। तेन अष्टाध्यायीस्थेन ''पूर्वपरावर'' इति सूत्रेण जसि परे विकल्पेन पूर्वादीनां सर्वनामसंज्ञा क्रियते। गणसूत्रे तु ''विभाषा'' इति पदं ''जसि'' इति पदं च नास्ति। अतः गणसूत्रेण सर्वत्र या नित्या सर्वनामसंज्ञा प्राप्ता सा जसि वा भवतु इत्येतदर्थं पुनः सूत्रमिति बोध्यम्।

**मूलग्रन्थपाठो व्याख्या च**

**(वा.) अवरादीनां च पुनः सूत्रपाठे ग्रहणानर्थक्यं गणे पठितत्वात्**

**अवरादीनां च पुनः सूत्रपाठे ग्रहणमनर्थकम्। किं कारणम्। गणे पठितत्वात्। गणे ह्येतानि पठ्यन्ते। कथं पुनर्ज्ञायते स पूर्वः पाठः। अयं पुनः पाठ इति। तानि हि पूर्वादीनि, इमान्यवरादीनि॥ इमान्यपि पूर्वादीनि। एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति स पूर्वः पाठः। अयं पुनः पाठ इति। यदयं 'पूर्वादिभ्यो नवभ्यो वेति' नवग्रहणं करोति। नवैव हि पूर्वादीनि॥**

**व्याख्या**- अवरशब्दोऽत्र पूर्वस्योपलक्षणम्। ''पूर्वपरावर'' इति एकं गणसूत्रमस्ति। द्वितीयं च अष्टाध्याय्यां पठितं सूत्रम्। गणसूत्रेण पूर्वादीनां सर्वनामसंज्ञा भवितुमर्हति, तर्हि पुनः सूत्रपाठो न कर्तव्य इति मनसि निधाय उच्यते - अवरादीनां च पुनरित्यादि। पूर्वादीनां गणे पाठात् पुनस्तेषां सूत्रपाठे ग्रहणमनर्थकमस्ति।

कथं सूत्रपाठ एवानर्थको न पुनः गणपाठ इति जिज्ञासाशान्त्यर्थं पृच्छति - ''कथं पुनर्ज्ञायते'' इत्यादि। कथं ज्ञायते यत् गणपाठः पूर्वः, सूत्रपाठः पुनरितिप्रश्ने उत्तरितं -यतो हि पूर्वकाले गणपाठः, अवरकाले = उत्तरकाले सूत्रपाठो वर्तते। अवरादीनि इत्यत्र अवरकालपाठात् पूर्वशब्दोऽवरशब्देन उच्यते। एवं स्पष्टं यत् गण पाठः पूर्वः, पश्चात् च सूत्रपाठ इति। मानाभावात् सूत्रपाठोऽपि पूर्वपाठ एव भवितुमर्हतीति भावप्रकाशनाय उक्तम्- इमान्यपि पूर्वादीनि इति = अष्टाध्यायी पठितान्यपि, पूर्वकालाश्रयाणीत्यर्थः।

इदानीं गणपाठः पूर्वः, पश्चाच्च सूत्रपाठ इति सिद्धान्तं व्यवस्थापयन्नाह-इवं तर्ह्याचार्येत्यादि। आचार्यपाणिनेः व्यवहारः बोधयति यत् गणपाठ एव पूर्वः। अयं सूत्रपाठः पुनरिति। तथा हि- पूर्वादिभ्यो नवभ्यो वेति सूत्रे नवग्रहणेन ज्ञायते यत् गणपाठ एव पूर्वः।

अयं सूत्रपाठः पुनरिति। यदि सूत्रपाठः पूर्वस्तर्हि नवैव हि पूर्वादीनि सन्ति। अतस्तेषामेव ग्रहणं ''पूर्वादिभ्यः'' इत्यनेन भविष्यति। नवग्रहणं तदा आवश्यकं नास्ति। यदा तु गणपाठः पूर्वस्तदा पूर्वादयो नवाधिकाः भवन्ति। नवानामेव ग्रहणं स्यादित्येतदर्थं सूत्रे नवग्रहणम्। एवं स्पष्टं यत् गणपाठः पूर्वः, सूत्रपाठः पुनरिति। एतत्सर्वं हि अस्मात् कारणादुक्तं यतो हि महाभाष्यकारेण लिखितं यत् गणपाठेन सिद्धे सूत्रपाठो व्यर्थ इति। एवं कथं नोक्तं यत् सूत्रपाठेन सिद्धे गणपाठो व्यर्थ इति। विपरीतप्रश्ननिवारणाय पूर्वपाठः गणपाठः सूत्रपाठो वेति विचारः कृतो विद्यते भाष्ये। एवं गणपाठस्य पूर्वत्वे सिद्धे पुनःप्रश्नः समागतो यत् गणपाठेन सिद्धे पुनः सूत्रपाठः किमर्थमिति जिज्ञासायां द्वितीयं समाधानं दातुमाह–

**मूलग्रन्थपाठः**

**इदं तर्हि प्रयोजनं व्यवस्थायामसंज्ञायामिति वक्ष्यामिति।**

**व्याख्या**– द्वितीयप्रयोजनं प्रतिपादयितुमाह। सूत्रे व्यवस्थायाम् असंज्ञायाम् इति वक्ष्यामि = वदिष्यामि। तेन सूत्रपाठेन व्यवस्थायाम्, असंज्ञायाम् पूर्वादीनां सर्वनामसंज्ञा भविष्यति इति विशेषः। तेन न व्यर्थः सूत्रपाठ इति प्रयोजनभाष्याशयः।

ननु गणसूत्रेऽपि व्यवस्थायामसंज्ञायामिति पदं वर्तते। तेन न गणसूत्रपाठयोः विशेषः। विशेषाभावाच्च पुनः सूत्रपाठो व्यर्थ इति प्रतिपादयन्नाह–

**मूलग्रन्थपाठः**

**एतदपि नास्ति प्रयोजनम्। एवं विशिष्टान्येवैतानि गणे पठ्यन्ते।**

**व्याख्या**– एतदपि नास्ति प्रयोजनम् = व्यवस्थामसंज्ञायाञ्च सर्वनामसंज्ञा अष्टाध्यायी–पाठेन इति प्रयोजनमपि वक्तुं न शक्यते। यतो हि व्यवस्थायाम् असंज्ञायामिति पदं गणसूत्रेऽपि अस्ति। एवं विशेषाभावे सत्यपि पुनः सूत्रपाठः कथमिति प्रश्नः पुनः जागर्ति। नन्वेवं पूर्वपक्षित्वेन तृतीयं समाधानं, तत्खण्डनञ्च कुर्वन्नाह महाभाष्यकारः–

**मूलग्रन्थपाठः**

**इदं तर्हि प्रयोजनम्– द्व्यादिपर्युदासेन पर्युदासो मा भूदिति। एतदपि नास्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति–नैषां द्वयादिपर्युदासेन पर्युदासो भवतीति। यदयं 'पूर्वत्रासिद्धम्' इति निपातनं करोति।**

**वार्तिककारश्च पठति 'जश्भावादिति चेदुत्तरत्राभावादपवादप्रसङ्गः' इति।**

**व्याख्या**– यदा द्वि, युष्मद्, अस्मद् भवतु किम्, इत्यस्यानन्तरं पूर्वपरावरेत्यादीनां पाठो वर्तते तदा द्व्यादिपर्युदासेन पर्युदासो मा भूदिति भाष्यं सङ्गच्छते। अयं भावः 'किं सर्वनामबहुभ्योऽद्व्यादिभ्य इत्येकं सूत्रं वर्तते। अद्व्यादिभ्यः = द्व्यादिभिन्नेभ्यः किं सर्वनामबहुभ्यः प्राग्दिशीयाः त्रलादिप्रत्ययाः भवन्तीति सूत्रार्थः। द्व्यादिपर्युदासेन द्वि, युष्मद्, अस्मद्, भवतु किम् इत्यस्यैव ग्रहणं यथा स्यात्, पुनः पूर्वादीनां सर्वनामसंज्ञाविधानात्, पूर्वादीनां द्व्यादिपर्युदासेन निषेधो मा भूदित्येतदर्थं पुनः सूत्रपाठ इति।

ननु इदानीं तृतीयमपि प्रयोजनं भवितुं नार्हति इत्येतदर्थं लिखितम् – एतदपि नास्ति प्रयोजनमिति। अर्थात् द्व्यादिपर्युदासेन पर्युदासो मा भूदित्येतदर्थमपि सूत्रमिदं नावश्यकमस्ति। यतो हि आचार्यव्यवहारेण ज्ञायते यत् पूर्वादीनां द्व्यादिपर्युदासेन ग्रहणं न भवति। यथा–सूत्रकारेण लिखितं ''पूर्वत्रासिद्धम्'' इति। वार्तिककारेण च ''जश्भावादिति चेदुत्तरत्र...''

इति। यदि पूर्वादीनां द्व्यादिपुर्यदासेन ग्रहणं स्यात्, तदा ''पूर्वत्र'' इति वचनम् ''उत्तरत्र'' इति वचनं च न स्यात्। एवं स्पष्टं यत् पूर्वोत्तरशब्दाभ्यां त्रल्रूपप्राग्दिशीयप्रत्ययः आचार्येण कृतस्तेन ज्ञायते यत् पूर्वादीनां द्व्यादिपुर्यदासेन पुर्यदासो न भवति। एवं पुनः सूत्रपाठः कथमिति प्रश्नः पुनः समागतः। इदानीं सिद्धान्तपक्षमाह–

न बहुव्रीहावित्यारभ्य अन्तरं बहिर्योगो. इति यावत्

**मूलग्रन्थपाठः**

**इदं तर्हि प्रयोजनम्–जसि विभाषा वक्ष्यामीति।**

**व्याख्या**– अयमेव सिद्धान्तपक्षोऽऽस्ति। अयं भावः विभाषा जसि इति सम्पूर्णं सूत्रमनुवर्तते। तेन अष्टाध्यायीस्थेन सूत्रेण जसि परे विकल्पेन पूर्वादीनां सर्वनामसंज्ञा क्रियते। जसि परे विकल्पेन पूर्वादीनां सर्वनामसंज्ञा क्रियते। गणसूत्रेण तु नित्या, सर्वासु विभक्तिषु सर्वनामसंज्ञा विधीयते। इत्युभयोर्मध्ये अस्ति विशेषः। तेन न सूत्रपाठो व्यर्थतामाप्नोतीति दिक्।

**बोधप्रश्नः**

९. कथं ज्ञायते गणपाठः पूर्वः सूत्रपाठः पुनरिति ?

१०. द्व्यादिपर्युदासेन पर्युदासो मा भूदिति भाष्यं कदा सङ्गच्छते ?

११. गणपाठसूत्रपाठयोः कः विशेषः ?

**१०.६.३ निष्कर्षः**

पूर्वपरेति सूत्रे महाभाष्यकारेण पुनः सूत्रपाठोऽनर्थको नास्तीति कृत्वा समाधानत्रयं समुपस्थापितम्। तत्खण्डनञ्च विधाय सिद्धान्तपक्षो व्यवस्थापितः। तत्र प्रथमं समाधानमुक्तं यत् सूत्रपाठोऽनर्थको नास्ति अपितु गणपाठ एवानर्थको भवितुमर्हति। सूत्रपाठस्य पूर्वत्वेनेति। तत्र तेनोक्तं यत् ''पूर्वादिभ्योः...'' इति सूत्रस्थनवग्रहणेन ज्ञायते यत् गणपाठः पूर्वः सूत्रपाठः पुनरिति। तेन सूत्रपाठ एव व्यर्थः। तत्र द्वितीयं समाधानमेवमुक्तं यत् व्यवस्थायामसंज्ञायामिति सूत्रपाठेऽस्ति। इति विशेष इत्यपि वक्तुं न शक्यते, गणपाठेऽपि उक्तपदद्वयस्य सत्वात्। तत्र तृतीयं समाधानमागतं यत् द्व्यादिपर्युदासेन पूर्वादीनां पर्युदासो मा भूदित्येतदर्थं पुनः सूत्रेण सर्वनामसंज्ञा विधीयते। पुनः सूत्रपाठेन सर्वनामसंज्ञाया विधानात् द्व्यादिपर्युदासेन पर्युदासो न भवतीति तृतीयं समाधानमपि कर्तुं न शक्यते। ''पूर्वत्रासिद्धम्'' इति सूत्रस्थ ''पूर्वत्र'' इति पदेन, वार्तिकस्थोत्तरत्रेति पदेन च ज्ञायते यत् द्व्यादिपर्युदासेन पूर्वादीनां पुर्यदासो न भवति। एवं समाधानत्रये खण्डिते सति सिद्धान्तपक्षं व्यवस्थापयन्नाह– सूत्रपाठे ''विभाषा जसि'' इति पदं वर्तते गणपाठे तु नास्तीति कृत्वा सूत्रपाठो व्यर्थो नास्तीति।

## १०.७ स्वमज्ञातिधनाख्यायाम् (१-१-३४)

### १०.७.१ पदच्छेदः, समासः, अनुवृत्तिः, सूत्रार्थः, उदाहरणम्

पदच्छेदः– स्वम्, अज्ञातिधनाख्यायाम् इति विच्छेदः।

समासः– ज्ञातिश्च धनं च ज्ञातिधने, तयोराख्या ज्ञातिधनाख्या, न ज्ञातिधनाख्या इति अज्ञातिधनाख्या, तस्याम्, अज्ञातिधनाख्यायाम्। स्वमिति शब्दस्वरूपापेक्षया नपुंसकम्।

अनुवृत्तिः– ''सर्वादीनि...'' इत्यतः सर्वनामानि, ''विभाषा जसि'' इति च सम्पूर्णं सूत्रमनुवर्तते।

सूत्रार्थः– ज्ञातिधनान्यवाचिनः स्वशब्दस्य गणसूत्रेण या प्राप्ता नित्या सर्वनाम संज्ञा सा जसि वा स्यात्।

उदाहरणम्– स्वे, स्वाः। आत्मान, आत्मीया वेत्यर्थः। स्वशब्दस्य चत्वारोऽर्था भवन्ति। तथा हि १. आत्मा २. आत्मीयम् ३. ज्ञातिः ४. धनम्। तत्र ज्ञातौ, धने चार्थे सर्वनामसंज्ञा न भवति। अज्ञातिधनाख्या इति निषेधांशेन निषेधात्। तथा च आत्मनि, आत्मीये चार्थे यदा स्वशब्दस्तदा सर्वनामसंज्ञा भवति। एवम् स्व + जस् इति स्थिते प्रकृतसूत्रेण सर्वनामसंज्ञा विकल्पेन जायते। यदा सर्वनामसंज्ञा तदा जसः शी इत्यनेन ''शी'' इत्यादेशे गुणे च सति ''स्वे'' इति पदम्, सर्वनामसंज्ञाया अभावे तु पूर्वसवर्णदीर्घे सति रुत्वविसर्गयोः कृतयो ''स्वाः'' इति पदं च सिद्धं भवति।

### १०.७.२ आख्याग्रहणप्रयोजनम्

ज्ञातिः = बान्धवः। ज्ञातिधनयोः पर्यायवाची यः स्वशब्दस्तस्य प्रतिषेधो यथा स्यादित्येतदर्थं सूत्रे आख्याग्रहणम्। यथा– इमे स्वा ईर्ष्यन्ति नः। अत्र स्वशब्दस्य बान्धवोऽर्थः। अत एव न सर्वनामसंज्ञा, न च श्यादेशः। प्रभूताः स्वा न भुज्यन्ते। अत्र च स्वशब्दस्य धनरूपार्थोऽस्ति। अस्मात् कारणात् स्वशब्दस्य सर्वनामसंज्ञा न भवति तेन ''शी'' इत्यादेशोऽपि न भवति। एवमुभयोरुदाहरणयोः ज्ञातिधनपर्यायवाची स्वशब्दो वर्तते। तेन सर्वनामसंज्ञायाः प्रतिषेधः। ''स्वे पुत्राः'', ''स्वे गावः'' इत्यत्र च प्रतिषेधो न भवति। आख्याग्रहणसमर्थ्यात्। यदि सूत्रे आख्याग्रहणं न स्यात् स्वमज्ञातिधने तदा ''स्वे पुत्राः'', ''स्वे गावः'' इत्यत्रापि स्यादेव प्रतिषेधः। यतो हि पुत्रादिभिः सामानाधिकरण्यात् स्वशब्दो ज्ञातिधनयोर्वर्तते। आख्याग्रहणे तु सति न दोषः, अर्थात् स्वे पुत्रा इत्यादौ प्रतिषेधो न भवति। यतो हि स्वे पुत्रा इत्यादौ स्वशब्दः, आत्मीयाख्याऽस्ति। ज्ञातिधनयोस्तु नास्ति।

### मूलग्रन्थपाठः व्याख्या च

**आख्याग्रहणं किमर्थम्? ज्ञातिधनपर्यायवाची यः स्वशब्दस्तस्य यथा स्यात्, इह मा भूत्– स्वे पुत्राः, स्वाः पुत्राः। स्वे गावः, स्वाः गावः।**

**व्याख्या**– स्वशब्दस्य चत्वारोऽर्थाः भवन्ति। १. आत्मा २. आत्मीयः ३. ज्ञातिः ४. धनं च। यदा आत्मनि च आत्मीये चार्थे स्वशब्दो भवति तदा तस्य सर्वनामसंज्ञा। यदा च ज्ञातिधनयोरर्थयोः स्वशब्दस्तदा सर्वनामसंज्ञायाः प्रतिषेधो भवति। एवम् स्वे पुत्रा इत्यादौ स्वशब्द आत्मीयेऽर्थे एव वर्तते। पुत्रादिशब्दस्तु ज्ञातिधनयोर्वर्तते न स्वशब्द इति सर्वनामसंज्ञायाः प्रतिषेधो न भविष्यतीति प्रश्नः। एवम् आख्याग्रहणं किमर्थमिति जिज्ञासायामुक्तं यत् यदि सूत्रे आख्याग्रहणं न स्यात्तदा ''स्वे पुत्राः'' इत्यादावपि प्रतिषेधः स्यात् तन्मा भूदित्येतदर्थं सूत्रे आख्याग्रहणम्। आख्याग्रहणे सति ''इमे स्वा ईर्ष्यन्ति नः'' ''प्रभूताः स्वा न भुज्यन्ते'' इत्यादावेव प्रतिषेधो भवति। स्वे पुत्राः, स्वाः पुत्राः, स्वे गावः स्वाः गाव इत्यादौ तु प्रतिषेधो न भवति। अत्रायं विशेषः – ''इमे स्वा ईर्ष्यन्ति नः'' ''प्रभूताः स्वा न भुज्यन्ते'' इत्यत्र स्वशब्दः क्रमेण ज्ञात्यर्थे, धनेऽर्थे चास्ति। स्वे गाव इत्यादौ तु आत्मीयेत्यादावर्थे स्वशब्दो वर्तते।

### बोधप्रश्नः

१२. स्वशब्दस्य कति अर्था भवन्ति? के च ते?

१३. आख्याग्रहणे सति कुत्र प्रतिषेधो नास्ति?

#### १०.७.३ निष्कर्षः

न बहुव्रीहावित्यारभ्य अन्तरं बहिर्योगो. इति यावत्

सूत्रे आख्याग्रहणाभावे ''स्वमज्ञातिधने'' इति सूत्रं स्यात्। तथा सति स्वे पुत्रा इत्यादावपि पुत्रशब्देन सामानाधिकरण्यात् स्वशब्दे ज्ञातिधनरूपार्थस्य विद्यमानत्वात् प्रतिषेधः स्यात्, तन्मा भूदित्येदर्थं सूत्रे आख्याग्रहणम्। तथा सति स्व पुत्रा इत्यादौ स्वशब्दस्य आत्मीयाख्यात्वेन न प्रतिषेध इति दिक्।

### १०.८ अन्तरं बहिर्योगोपसंव्यानयोः (१-१-३६)

#### १०.८.१ पदच्छेदः, समासः, अनुवृत्तिः, सूत्रार्थः, उदाहरणम्

पदच्छेदः- अन्तरम् बहिर्योग उपसंव्यानयोरितिच्छेदः।

समासः- बहिः = अनावृतप्रदेशः, तेन योगः = सम्बन्धो यस्य स बहिर्योगः = बहिर्विद्यमानोऽर्थ इति यावत्। उपसंवीयते परिधीयते इति उपसंव्यानम् अन्तरीयं वस्त्रम्। बहिर्योगश्च, उपसंव्यानञ्च, तयोरिति बहिर्योगोपसंव्यानयोः।

अनवृत्तिः- सर्वनामानि, ''विभाषा जसि'' इति सम्पूर्णसूत्रञ्चानुवर्तते।

सूत्रार्थः- बाह्ये परिधानीये चाऽर्थेऽन्तरशब्दस्य या पूर्वसूत्रेण प्राप्ता सर्वनाम संज्ञा सा जसि वा स्यात्।

उदाहरणम्- बहिर्योगे - अन्तरे, अन्तरा वा गृहाः। बाह्या इत्यर्थः। उपसंव्याने - अन्तरे, अन्तरा वा शाटकाः। परिधानीया इत्यर्थः। यदा अन्तरशब्दः बहिर्योगे उपसंख्याने वाऽर्थे भवति तदा तस्य विकल्पेन सर्वनामसंज्ञा भवति। सर्वनामसंज्ञापक्षे तु जसः स्थाने श्यादेशे गुणे सति ''अन्तरे'' इति रूपम्, सर्वनामसंज्ञाया अभावे श्यादेशो न भवति। तेन पूर्वसवर्णदीर्घे सति अन्तरा इति रूपं च सिद्धं भवति।

#### १०.८.२ उपसंव्यानग्रहणप्रयोजनं तत्प्रत्याख्यानञ्च

उपसंवीयते = परिधीयते = धार्यते यत् तत् उपसंव्यानम्। शाटकादिक-मित्यर्थः। अन्तरीयं वस्त्रमिति। अत्र उप-समुपसर्गपूर्वव्येञ्धातोः कर्मणि ल्युटि सति उपसंव्यानमिति पदं सिद्धं भवति। तथा यदा करणेऽर्थे ल्युट्प्रत्ययस्तदा उपसंवीयते = प्ररिवेष्ट्यते (शरीरम्) अनेन इति विग्रह उपसंव्यानशब्दस्य सिद्धिर्भवति। एवं सति उत्तरीयमर्थो भवति।

तथा च ''बहिर्योग'' इत्यस्यापि अर्थद्वयं भवति।

१. बहिरित्यनावृतो देश उच्यते, तेन योगो बहिर्योगः। स च बाह्यस्य भवति। एवम् अन्तरे गृहा इति नगरबाह्याश्चण्डालादिगृहा उच्यन्ते। अर्थात् नगरात् बाह्या ये गृहास्ते बहिर्योगका भवन्ति।

२. तत्र द्वितीयोऽर्थस्तदा भवति यदा बहिश्शब्देन बाह्य उच्यते। तदानीं बाह्येन = बहिर्भूतेन योगः = सम्बन्धः = बहिर्योग इति। एवं नगराभ्यन्तरे ये गृहास्त उच्यन्ते। यतो हि बहिर्भूतेन योग आभ्यन्तरस्यैव भवति।

इत्थमुपसंव्यानार्थस्य बहिर्योगेन सिद्धत्वात् उपसंव्यानग्रहणं न कर्तव्यम्। एतदनन्तरं महाभाष्यकारेणोक्तं यत् उपसंव्यानग्रहणं शाटकयुगाद्यर्थमस्ति। अतो न व्यर्थतामाप्नोति। अर्थात् यत्र शाटकयुगम् = शाटकयुगलम् तत्र न ज्ञायते किमन्तरीयं किमुत्तरीयमिति।

उपसंव्यानशबदस्य कर्मव्युत्पत्याश्रयणात् ज्ञायते यत् शाटकयुगले अन्तरीयार्थकस्यान्तरशब्दस्य सर्वनामसंज्ञा भवति। उत्तरीयार्थकस्यान्तरशब्दस्य सर्वनामसंज्ञा न भवति। इति शाटकयुगले पार्थक्यप्रदर्शनाय सूत्रे उपसंव्यानग्रहणं कर्तव्यमेव।

एतदनन्तरं महाभाष्यकारेण उक्तं यत् शाटकयुगाद्यर्थं तावत् उपसंव्यानपदं सूत्रे आवश्यकं नास्ति। यतो हि यो मनुष्यः प्रेक्षापूर्वकारी (बुद्ध्या कार्यं करोति) भवति। तस्य ज्ञानं भवत्येव यत् शाटकयुगले इदमन्तरीयमिदमुत्तरीयमिति। इत्थं बहिर्योगेन सिद्धमुपसंव्यानग्रहणं न कर्तव्यमिति कृत्वा महाभाष्यकारेण प्रत्याख्यातमुपसंव्यानपदमिति।

अनिष्टापत्तिपरिहाराय उच्यतेऽधुना यत् गणसूत्रे।

''अपुरीति वक्तव्यम्'' इति। अपुरि - पूर्यर्थे अन्तरशब्दस्य सर्वनामसंज्ञा मा भूदित्येतदर्थं अपुरीति वक्तव्यम्। पुर्यां विशेष्यभूतायामन्तरशब्दः सर्वनामसंज्ञको न भवतीति वार्तिकार्थः।

उदाहरणम्- अन्तरायां पुरि - अन्तराशब्दात् सप्तम्येकवचनविवक्षायां ङिप्रत्ययेऽनुबन्धलोपे ''अन्तरा + इ'' इति स्थिते अपुरीति वार्तिकेन सर्वनामसंज्ञाया निषेधात् न स्याडागमो भवति। किन्तु ''ङेराम्नद्या...'' इत्यनेन आमादेशे ''याडापः'' इत्यनेन याडागमो भवति। तेन ''अन्तरायां पुरि'' इति रूपं सिद्धं भवति।

अत्रायं विशेषः- यद्यपि अन्तरशब्द एव सर्वादिगणे पठितो न तु टाबन्त अन्तराशब्दः। तत्र सर्वनाम्नः प्राप्तिरेव नास्ति कथम् ''अपुरि'' इति निषेधः इति चेदुच्यते - ''प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्'' इति परिभाषया, एकादेशस्य पूर्वान्तत्वेन वा अन्तरशब्देन अन्तराशब्दस्यापि ग्रहणाद् सर्वनाम्नः प्राप्तिरस्त्येव। अत एव ''अपुरि'' इति वार्तिकमावश्यकम्। इष्टानुपत्तिनिराकररणाय पुनरुच्यते भाष्ये- वा प्रकरणे तीयस्य ङित्सूपसंख्यानम्- तीयप्रत्ययान्तस्य गणे पाठाभावात् द्वितीयतृतीयशब्दयोरप्राप्ता सर्वनामसंज्ञा प्रकृतवार्तिकेन विकल्पेन प्रतिपाद्यते। एवमप्राप्तविभाषेयमिति स्पष्टम्।

वार्तिकार्थः- वा प्रकरणे तीयप्रत्ययान्तस्य ङित्सु ङे-ङसि-ङस्-ङि- इत्येतेषु परेषु सर्वनामसंज्ञावचनं कर्तव्यमिति।

उदाहरणानि- द्वितीयस्मै, द्वितीयाय। द्वितीयस्मात्, द्वितीयात्। द्वितीयस्मिन्- द्वितीये। तृतीयस्मै, तृतीयाय। तृतीयस्मात्, तृतीयात्। तृतीयस्मिन् तृतीये इत्युदाहरणानि। सर्वत्रैव प्रकृतवार्तिकेन यदा सर्वनामसंज्ञा, तदा क्रमेण ङे-ङसि-ङि-प्रत्ययानां स्थाने स्मै- स्मात्- स्मिन्-इत्यादेशा भवन्ति। यदा च न सर्वनामसंज्ञा तदा रामवद्रूपाणि भवन्ति।

तथा च यदा द्वितीयशब्दः तृतीयशब्दश्च स्त्रीत्वेऽर्थे भवति, तदा द्वितीया- तृतीया=शब्दात् ङित्सु विभक्तिषु परेषु प्रकृतवार्तिकेन विकल्पेन सर्वनामसंज्ञायाः सत्वात् स्याडागमो भवति न तु याडागमः। यदा च सर्वनामसंज्ञा न भवति तदा याडागमो बोध्यः। एवम् द्वितीयस्यै द्वितीयायै तृतीयस्यै, तृतीयायै इत्यादिरूपाणि भवन्ति। एवं सति यदा ''वा प्रकरणे तीयस्य...'' इति वार्तिकं क्रियते तदा ''विभाषा द्वितीया तृतीयाभ्यामिति'' सूत्रं न कर्तव्यं भवति। सूत्रवार्तिकयोर्मध्ये वार्तिकमवश्यमेव कर्तव्यं भवति।येन द्वितीयस्मै, द्वितीयायेत्यादीनामपि सिद्धिर्यथा स्यात्। इत्थं वार्तिकेन ''विभाषा द्वितीया...'' इति सूत्रस्य कार्यं भवति, किन्तु सूत्रेण वार्तिकस्य सम्पूर्णं कार्यं भवितुं नार्हति, स्त्रीत्वविशिष्टस्य सूत्रे ग्रहणात्। एवं वार्तिकं कर्तव्यं सूत्रञ्च न कर्तव्यमिति दिक्।

**मूलग्रन्थपाठो व्याख्या च**

**(वा.) उपसंव्यानग्रहणमनर्थकं बहिर्योगेन कृतत्वात्**

**उपसंव्यानग्रहणमनर्थकम्। किं कारणम्? बहिर्योगेन कृतत्वात्। बहिर्योग इत्येव सिद्धम्।**

न बहुव्रीहावित्यारभ्य अन्तरं बहिर्योगो. इति यावत्

**(वा.) न व शाटकयुगाद्यर्थम्**

**न वाऽनर्थकम्। किं कारणम्? शाटकयुगाद्यर्थम्। शाटकयुगाद्यर्थं तर्हीदं स्यात्। यत्रैतन्न ज्ञायते- किमन्तरीयं किमुत्तरीयमिति।**

**अत्रापि य एष मनुष्यः प्रेक्षापूर्वकारी भवति, निर्ज्ञातं तस्य भवति इदमन्तरीयमिदमुत्तरीयमिति॥**

**व्याख्या**- उपसंव्यानपदस्य प्रत्याख्यानाय आक्षेपो भवति- उपसंवीयते = परिधीयते = धार्यते यत् तदुपसंव्यानम्। उपसंवीयते = परिवेष्ट्यते शरीरम् अनेन तदुपसंव्यानम्। एवमुपसंव्यानशब्दः कर्मकरणार्थभेदाद्भिन्नार्थः। तथा च बहिर्योगशब्दोऽपि द्विविधात्मको भवति। बहिरित्यनावृतो देश उच्यते तेन योगो बहिर्योगः। स च बाह्यस्य भवतीति अन्तरे गृहा इति नगरबाह्याश्चण्डालादिगृहा उच्यन्ते। यदा तु बहिश्शब्देन बाह्य उच्यते। बाह्येन योगो बहिर्योग इति तदा नगराभ्यन्तरे ये गृहास्त उच्यन्ते। एवमुपंव्यानशब्दस्यार्थः बहिर्योगेत्यनेन सिद्धः उसंव्यानपदं न कर्तव्यमिति मनसि निधाय आक्षिप्यते भाष्ये - उपसंव्यानग्रहणमनर्थकमिति। उपसंव्यानग्रहणम् अनर्थकम् = सार्थकम् नास्ति। तत्र कारणमुक्तम् बहिर्योगेत्यनेनैव उपसंव्यानपदप्रयोजनं सिद्धं भवति।

प्रत्याख्यानबाधाय पुनरुपसंव्यानपदस्य प्रयोजनं व्यवस्थापयन्नाह-न वा शाटकेति। उपसंव्यानपदमनर्थकं नास्ति। तत्र कारणं शाटकयुगाद्यर्थं पदस्य सत्वादिति। अर्थात् यत्र शाटकयुगम् = शाटकयुगलं भविष्यति तत्र विज्ञातं न भविष्यति यत् किमन्तरीयं किमुत्तरीयमिति। उपसंव्यानग्रहणसामर्थ्यात् (कर्मव्युत्पत्याश्रयणात्) ज्ञातं यदन्तरीयवाचकस्यान्तरशब्दस्य सर्वनामसंज्ञा। उत्तरीयवाचकस्यान्तरशब्दस्य न सर्वनामसंज्ञेति पार्थक्यप्रदर्शनाय उपसंव्यानपदं सूत्रे कर्तव्यं भवति। एवमुपसंव्यानपदं शाटकयुगाद्यर्थं कर्तव्यमिति भाष्यस्याशयोऽस्ति।

प्रत्याख्यानसाधकः सिद्धान्तत्वेन उपसंव्यानपदं सूत्रे आवश्यकं नास्तीति प्रतिपादयितुमाह- अत्रापि इति। अर्थात् अन्तरीयोत्तरीयपार्थक्यप्रदर्शनाय (शाटकयुगले) सूत्रे उपसंव्यानपदमावश्यकं नास्ति। यतो हि तत्पार्थक्यं बुद्ध्या एव संभवति। यो हि मनुष्यः =प्रेक्षापूर्वकारी भवति बुदध्या कार्यं करोति तस्य ज्ञातं भवत्येव इदमन्तरीयमिदमुत्तरीयमिति। एवं सिद्धं यत् शाटकयुगलेऽपि पार्थक्यप्रदर्शनाय उपसंव्यानपदं न कर्तव्यमिति कृत्वा महाभाष्यकारेण उपसंव्यानपदं प्रत्याख्यातम्।

**मूलग्रन्थपाठः**

**(वा.) अपुरीति वक्तव्यम्**

**इह मा भूत्- अन्तरायां पुरि वसति॥**

**व्याख्या**- अनिष्टापत्तिपरिहाराय उच्यते- अपुरीति वार्तिकं वक्तव्यम्= गणसूत्रे एतत् कर्तव्यमिति। अन्तरायां पुरि वसति इत्यत्र सर्वनामसंज्ञा मा भूदित्येतदर्थं वचनमिदं वक्तव्यम्। अन्यथा सर्वनामसंज्ञात्वात् स्याडागमः स्यात्। तदा अन्तरस्यामित्यनिष्टप्रयोगः स्यात्। तन्निवारणायैव प्रकृतवार्तिकं कृतं विद्यते।

**मूलग्रन्थपाठः**

**(वा.) वा प्रकरणे तीयस्य ङित्सूपसंख्यानम्**

**वा प्रकरणे तीयस्य ङित्सूपसंख्यानं कर्तव्यम्। द्वितीयायै, द्वितीयस्यै, तृतीयायै-तृतीयस्यै। ''विभाषा द्वितीयातृतीयाभ्याम्'' इत्येतन्न वक्तव्यं भवति।**

**किं पुनरत्र ज्यायः ?**

**उपसंव्यानमेवात्र ज्यायः। इदमपि सिद्धं भवति- द्वितीयाय द्वितीयस्मै, तृतीयाय-तृतीयस्मै।**

**व्याख्या**- वा प्रकरणे तीयप्रत्ययान्तस्य (द्वितीय-तृतीयशब्दस्य) ङे-ङसि-ङस्-ङि- इत्येतेषु ङित्सु परेषु सर्वनामसंज्ञावचनं कर्तव्यमित्यर्थकं वार्तिकं कर्तव्यम्। येन द्वितीयायै, द्वितीयस्यै तृतीयायै, तृतीयस्यै इति रूपस्य सिद्धिर्भवतु। यदा प्रकृतवार्तिकेन सर्वनामसंज्ञा, तदा स्याडागमेन द्वितीयस्यै इत्यादि रूपस्य सिद्धिर्भवति। यदा च सर्वनामसंज्ञा न भवति तदा स्याडागमोऽपि न भवति। परन्तु याडागमो भवति। तेन ''द्वितीयायै'' इत्यादिरूपस्य सिद्धिर्बोद्धव्या। अत्र शंकते यत् उक्तरूपस्य सिद्धिः ''विभाषा द्वितीयातृतीयाभ्याम्'' इति सूत्रेणैव भवितुमर्हति। एवं सत्यपि वार्तिकमिदं किमर्थम्? इति प्रश्ने आह- विभाषा... इत्येतन्न कर्तव्यं भवतीति। अर्थात् वार्तिके सति सूत्रं न कर्तव्यं भवति। वार्तिकमेव मास्तु, सूत्रं भवतु इति जिज्ञासाशान्त्यर्थमाह- किं पुनरत्र ज्यायः? उपसंव्यानमेवात्र ज्याय इति। अयं भावः- सूत्रवार्तिकयोः वार्तिकमेव (उपसंख्यानवचनमेव) कर्तव्यम्। यतो हि वार्तिके सत्येव द्वितीयस्मै- द्वितीयाय तृतीयस्मै तृतीयायेत्यादि प्रयोगाः सिद्धा भवन्ति। अतः सूत्रं मास्तु उपसंख्यानवचनं भवतु इति दिक्।

**बोधप्रश्नः**

१४. उपसंव्यानवचनमावश्यकं न वा?

१५. ''अपुरि'' इति वार्तिकाभावे को दोषः ?

१६. ''विभाषा द्वितीयातृतीयाभ्यामिति सूत्रं कथं न कर्तव्यम्?''

### १०.८.३ निष्कर्षः

''अन्तरं बहिर्योगोपसंव्यानयोः'' इति सूत्रे उपसंव्यानग्रहणं न कर्तव्यम्। यतो हि बहिर्योग इत्यनेनैव बाह्यरूपार्थो गृह्यते। बाह्येन योगो बाह्ययौग इति। बाह्येन योगोऽभ्यन्तरस्यैव भवति। एवमुपसंव्यानशब्दस्यान्तरीयरूपो योऽर्थः स च ''बहिर्योग'' इत्यनेनैव सिद्धो भवतीति कृत्वा उपसंव्यानग्रहणं प्रत्याख्यातं भगवता पतञ्जलिना। शाटकयुगलार्थमपि उपसंव्यानपदमावश्यकं नास्ति। यतो हि बुद्धिमन्तः पुरुषाः स्वयमेव निर्धारयन्ति यत् शाटकयुगले किमन्तरीयं किमुत्तरीयमिति।

एतदनन्तरं विभाषया या सर्वनामसंज्ञा तस्या अव्याप्त्यतिव्याप्तिवारणाय वार्तिकद्वयं लिखितम्। तत्र प्रथमम् ''अपुरि'' इति। पूर्या विशेष्यत्वेऽन्तरशब्दस्य सर्वनामसंज्ञा न भवति। तेन अन्तरायां पुरि इत्यत्र स्याडागमो न भवति। द्वितीयञ्च 'वा प्रकरणे तीयस्य ङित्सूपसंख्यानमिति' वार्तिकं लिखितम्। वार्तिकमिदं विलिख्य ''विभाषा द्वितीया...'' इति सूत्रं प्रत्याख्यातम्। वार्तिके सति तीयप्रत्ययान्तस्य (द्वितीय-तृतीयशब्दयोः) सर्वनामसंज्ञा वा भवति। तेन सर्वनामोद्देश्यं कार्यमपि वा भवति। एवम् द्वितीयायै, द्वितीयस्यै, तृतीयस्मै तृतीयायेत्यादिप्रयोगाः सिध्यन्तीति दिक्।

## १०.९ सारांशः

अस्मिन् दशमे पाठे भवन्तः ''न बहुव्रीहौ'' ''तृतीयासमासे'' विभाषा जसि

'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्' 'स्वमज्ञातिधनाख्यायाम्' अन्तरं बहिर्योगोपसंव्यानयोरिति षड् सूत्राणि अधीतवन्तः। तत्र न ''बहुव्रीहौ'' इति सूत्रे सूत्रस्य अर्थद्वयं प्रतिपादितम्। तत्र सर्वाद्यन्तस्य बहुव्रीहेः प्रतिषेध इत्यर्थे प्रियविश्वाय द्व्यन्याय, त्र्यन्यायेत्युदाहरणानि प्रदत्तानि। तथा असर्वाद्यन्तस्य बहुव्रीहेः प्रतिषेध इत्यर्थे त्वत्कपितृको मत्कपितृक इत्युदाहरणं प्रदत्तम्। अन्ते महाभाष्यकारेण सूत्रमिदं प्रत्याख्यातम्। तेनोक्तं यत् प्रियविश्वायेत्यादि सर्वाद्यन्तबहुव्रीहेरुदाहरणं ''संज्ञोपसर्जनप्रतिषेध'' इति वचनेनैव सिद्धम्। ''त्वत्कपितृको मत्कपितृक'' इति असर्वाद्यन्तबहुव्रीहेरुदाहरणं तु मा भवतु। त्वकत्पितृको मकत्पितृक इति अकच्प्रत्ययविशिष्टमेवोदाहरणं भवतु इति कृत्वा प्रत्याख्यातं भाष्ककारेण ''न बहुव्रीहौ'' इति सूत्रम्। तथा च आढ्यो भूतपूर्वः- आढ्यपूर्व ''आढ्यपूर्वाय देहि'' इत्यत्र सर्वनामसंज्ञा मा भवतु इत्येतदर्थं 'प्रतिषेधे भूतपूर्वस्योपसंख्यानमिति' वचनम् कर्तव्यमित्युक्त्वा प्रतिषेधवचनमपि प्रत्याख्यातम्। तेनोक्तं यत् प्रतिषेधवचनमावश्यकं नास्ति। व्यवस्थायामेव पूर्वादीनां सर्वनामसंज्ञा भवति। ''आढ्यपूर्व'' इत्यत्र पूर्वशब्दो व्यवस्थार्थको नास्ति। एतदनन्तरं ''तृतीयासमासे'' इति सूत्रे समासग्रहणस्य प्रयोजनद्वयमुक्तम्। एकं तावत् तादर्थ्यात्ताच्छब्द्यमिति। द्वितीयं ''तृतीया + असमासे'' इति योगविभागार्थं पुनः समासग्रहणम्। एतेन मासेन पूर्वाय देहीति असमासेऽपि (तृतीयासमासार्थवाक्येऽपि) निषेधो भवति।

न बहुव्रीहावित्यारभ्य अन्तरं बहिर्योगो. इति यावत्

''विभाषा जसि'' इति सूत्रस्यार्थो व्यवस्थापितः। जसः इ इति जसि इति अविभक्तिकं पदमस्ति। ''इशब्देन'' ''शी'' इति इवर्णस्य बोधो भवति। तेन जस्स्थनिकशीकार्यं प्रत्येव विभाषा भवति। अकज्कार्यं प्रति तु न विभाषेति।

''पूर्वपरावर...'' इति सूत्रे पूर्वपरेत्यादिगणपाठः पूर्व इति व्यवस्थाप्य पुनः सूत्रपाठस्य प्रयोजनम्- ''विभाषा जसि'' इति सम्पूर्णं सूत्रमनुवर्तते। तेन सूत्रमिदं जसि परे वा सर्वनामसंज्ञां करोतीत्युक्तम्।

''स्वमज्ञातिधनाख्यायामिति'' सूत्रे ''स्वे पुत्राः, स्वाः पुत्राः, स्वे गावः, स्वाः गावः, इत्यत्र ''अज्ञातिधने'' इति निषेधांशेन निषेधो मा भवतु इत्येतदर्थं सूत्रे आख्याग्रहणमिति आख्याग्रहणस्य प्रयोजनमुक्तम्।

'अन्तरं बहिर्योगोपसंव्यानयोः' इति सूत्रे भगवता उपसंव्यानपदस्य खण्डनं कृतम्। तेनोक्तं यत् ''बहिर्योग'' इत्येव सिद्धम् सूत्रे उपसंव्यानेति पदं नावश्यकम्। शाटकयुगाद्यर्थमपि नास्ति। यतो हि बुद्धिमान् पुरुषः स्वयमेव निर्धारयति यत् शाटकयुगले किमन्तरीयं किमुत्तरीयमिति। अनन्तरम् ''अन्तरायां पुरि'' इत्यत्र सर्वनामसंज्ञायाअभावाय ''अपुरि'' इति वचनं लिखितम्। तथा च द्वितीयायै द्वितीयस्यै, तृतीयायै तृतीयस्यै, द्वितीयस्मै, द्वितीयाय, तृतीयस्मै, तृतीयायेत्यादिप्रयोगाणां सिद्धिः स्यादित्येतदर्थं 'वा प्रकरणे तीयस्य ङित्सूपसंख्यानमि'ति उपसंख्यानवार्तिकं कर्तव्यम्। एतेन ''विभाषा द्वितीयातृतीयाभ्याम्'' इति सूत्रं न करणीयमिति षड्रसैः परिपूरितोऽयं दशमः पाठो भवद्भिः पठितः।

## १०.१० शब्दावली

| | | | |
|---|---|---|---|
| १. | पूर्वनिपातः | – | पूर्वप्रयोगो भवति। |
| २. | अन्तरङ्गः | – | अन्तः = अन्तर्भूतम् (मध्ये) अङ्गं = निमित्तं यस्य तदन्तरङ्गम्। |
| ३. | बहिरङ्गः | – | बहिर्भूतमङ्गं = निमित्तं यस्य तद् बहिरङ्गम्। |
| ४. | तादर्थ्यात् ताच्छब्द्यम् | – | तस्य अर्थस्तदर्थः। तदर्थस्य भावस्तादर्थ्यम्। |

तस्मात् तादर्थ्यात्। तस्य शब्दस्तच्छब्दः। तच्छब्दस्य भावस्ताच्छब्द्यमिति। यदर्थो यो भवति तेन शब्देन तस्यापि ग्रहणं भवतीति भावः। यथा- तृतीयासमासार्थानि पदानि तृतीयासमास इति।

| | | | |
|---|---|---|---|
| ५. | आख्या | – | अर्थः। |
| ६. | ज्ञातिः | – | बान्धवोऽर्थः। |
| ७. | बहिर्योगः | – | बहिरित्यनावृतो देशः। तेन योगो बहिर्योगः। स च बाह्यस्य भवतीति अन्तरे गृहा इति नगरबाह्याश्चण्डालादिगृहा उच्यन्ते। यदा बहिश्शब्देन बाह्य उच्यत तदा बाह्येन योगो बहिर्योग इति नगराभ्यन्तरे ये गृहास्त उच्यन्ते। |
| ८. | उपसंव्यानम् | – | उपसंवीयते = परिधीयते यत् तदुपसंव्यानम्। अन्तरीयं वस्त्रमित्यर्थः। तच्च शाटकादिरूपमिति। |
| ९. | शाटकयुगाद्यर्थम् | – | शाटकयुगलार्थमित्यर्थः। |

## १०.११ सन्दर्भग्रन्थः

पातञ्जलमहाभाष्यम्।

## १०.१२ सहायकग्रन्थः

| | | | |
|---|---|---|---|
| १. | सिद्धान्तकौमुदी | २. | प्रौढमनोरमा |
| ३. | काशिका | ४. | लघुशब्देन्दुशेखरः |
| ५. | प्रदीपोद्योतटीका | ६. | छायाटीका |

## १०.१३ बोधप्रश्नोत्तराणि

१. ''न बहुव्रीहौ'' इति सूत्रस्य प्रियविश्वाय, द्व्ययन्याय, त्र्यन्याय त्वत्कपितृको मत्कपितृक इत्युदाहरणानि अत्र समागतानि

२. असर्वाद्यन्तस्य बहुव्रीहेः निषेधे त्वत्कपितृको मत्कपितृक इत्युदाहरणम्।

३. ''न बहुव्रीहौ'' इति सूत्रसत्वे त्वत्कपितृको मत्कपितृक इत्युदाहरणम्। यदा महाभाष्यकारेण सूत्रं प्रत्याख्यातम् अर्थात् सूत्राभावे त्वकत्पितृको मकत्पितृक इत्युदाहरणं भवति।

४. प्रतिषेधे भूतपूर्वस्योपसंख्यानमिति वचनमावश्यकं नास्ति। यतो हि व्यवस्थायामेव पूर्वादीनां ''पूर्वपरावर.'' इति सूत्रेण सर्वनामसंज्ञा भवति। आढ्यपूर्वाय इत्यत्र पूर्वशब्दो व्यवस्थावाची नास्ति।

न बहुव्रीहावित्यारभ्य अन्तरं बहिर्योगो. इति यावत्

५. ''तृतीयासमासे'' इति सूत्रेण सर्वनामसंज्ञाया निषेध: क्रियते।

६. समासग्रहणस्य द्वे समाधाने भवत:।

७. ''विभाषा दिक्समासे बहुव्रीहौ'' इति सूत्रात् समासपदस्य अनुवृत्ति: सिद्धा।

८. जसि इति पदमविभक्तिकमस्ति। जस: इ: इति जसि। अत्र सप्तम्या आर्षत्वात् लुग् वर्तते। इशब्देन ''शी'' इत्यस्य इवर्णस्य बोधो भवति। एवं स्पष्टं यत् शीकार्यं प्रत्येव विभाषा।

९. आचार्यपाणिने: पूर्वादिभ्यो नवभ्यो वेति सूत्रे नवग्रहणेन ज्ञायते यत् गणपाठ: पूर्व: सूत्रपाठ: पुनरिति।

१०. यदा द्वि, युष्मद्, अस्मद्, भवतु, किम् इत्यस्यानन्तरं पूर्वपरावरेत्यादीनां पाठो वर्तते तदा द्व्यादिपर्युदासेन पर्युदासो मा भूदिति भाष्यं संगच्छते।

११. सूत्रपाठे ''विभाषा जसि'' इति सम्पूर्णसूत्रस्यानुवृत्तिर्भवति। गणपाठे तु नास्ति। एवम् गणसूत्रेण सर्वासु विभक्तिषु नित्या सर्वनामसंज्ञा, अष्टाध्यायीस्थेन सूत्रेण जसि परे विकल्पेन सर्वनामसंज्ञा विधीयते। इति उभयोर्मध्येऽस्ति विशेष:।

१२. स्वशब्दस्य चत्वारोऽर्था भवन्ति। ते च १. आत्मा २. आत्मीय: ३. ज्ञाति: ४. धनं च।

१३. आख्याग्रहणे सति स्वे गाव: स्वे पुत्रा: इत्यादौ सर्वनामसंज्ञाया निषेधो न भवति।

१४. उपसंव्यानवचनमावश्यकं नास्ति। 'बहिर्योग' इत्यनेनैव सिद्धत्वात्।

१५. ''अपुरि'' इति वार्तिकाभावे सर्वनामसंज्ञात्वात् अन्तरस्यामिति स्याडागमेनानिष्टप्रयोग: स्यात्। तन्माभूदित्येतदर्थम् ''अपुरि'' इति वचनं कर्तव्यम्।

१६. द्वितीयस्मै, द्वितीयायेत्यादिप्रयोगा: वार्तिके सत्येव सिद्धा भवन्ति।''विभाषा द्वितीया...'' इति सूत्रेण एते प्रयोगा: सिद्धा: भवितुं नार्हन्ति। अत: वार्तिकमवश्यमेव कर्तव्यम्। वार्तिके सति सूत्रं न कर्तव्यं भवतीति।

## १०.१४ अभ्याप्रश्ना:

**लघूनि उत्तराणि प्रदेयानि–**

१. ''न बहुव्रीहौ'' इति सूत्रस्य उदाहरणानि लिखत?

२. ''न बहुव्रीहौ'' इति सूत्रं कर्तव्यं न वा?

३. प्रतिषेधे भूतपूर्वस्योपसंख्यानमित्यस्य किमुदाहरणम्?

४. ''विभाषा जसि'' इति सूत्रस्य कोऽर्थ:?

५. गणपाठ: पूर्व: सूत्रपाठो वा?

६. उपसंव्यानग्रहणं कर्तव्यं न वा?

७. ङिद्विभक्तिं लिखत?

**व्याख्यायताम्** –

१. कश्चेदानीं काकचोर्विशेषः ?

२. प्रतिषेधे भूतपूर्वस्योपसंख्यानम् ?

३. समास इति वर्तमाने पुनः समासग्रहणं किमर्थम् ?

४. पूर्वपरावरेति सूत्र पाठः पूर्वो गणपाठो वेति ?

५. आख्याग्रहणं किमर्थम् ?

६. उपसंव्यानपदस्य प्रयोजनं प्रत्याख्यानञ्च लिखत ?

**निबन्धात्मकमुत्तरं लिखत**

१. ''न बहुव्रीहौ'' इति सूत्रं भाष्यदिशा व्याख्यायताम्।

## एकादशः पाठः ( १. स्वरादिनिपातमव्ययम्, १-१-३७ तद्धितश्चासर्वविभक्तिः ४-१-३८ )

**पाठसंरचना**



## ११.१ प्रस्तावना

द्वितीयखण्डस्य एकादशः पाठोऽयं वर्तते। इतः पूर्वं भवद्भिः दशमे पाठे 'न बहुव्रीहौ'। 'तृतीयासमासे' 'विभाषा जसि' 'पूर्वापरावर.' 'स्वमज्ञाति.' 'अन्तरं बहिर्यो.' इति सर्वनामसंज्ञासम्बद्धानि सूत्राणि पठितानि। अस्मिन् एकादशे पाठे भवन्तः 'स्वरादिनिपात-मव्ययम्' १-१-३७ 'तद्धितश्चासर्वविभक्तिः' १-१-३८ इति अव्ययसंज्ञाविधायके द्वे सूत्रे पठिष्यन्ति।

तत्र स्वरादिगणपठिताः निपाताश्चाव्ययसंज्ञाः स्युरित्यर्थक 'स्वरादिनिपातमव्ययमि'ति सूत्रे चादिगणात् पृथक् यो हि स्वरादिगणः कृतस्तस्य प्रयोजनं व्यवस्थाप्य निपातसंज्ञया अव्ययसंज्ञायाः गतार्थत्वं नास्ति, अव्ययसंज्ञया निपातसंज्ञायाश्चारितार्थ्यञ्च नास्तीति कृत्वा उभयोः संज्ञयोः पृथक्करणप्रयोजनं (पार्थक्यप्रयोजनं) व्यवस्थापितम्। अर्थात् चादिगणोऽपि कर्तव्यः, स्वरादिगणोऽपि। निपातसंज्ञाऽपि, अव्ययसंज्ञापि पृथक्-पृथक् कर्तव्या।

तथा च यस्मात्सर्वा विभक्तिर्नोत्पद्यते स तद्धितान्तोऽव्ययं स्यादित्यर्थके 'तद्धितश्चासर्वविभक्तिः' इति सूत्रे विना, 'नाना' इति शब्दस्य अव्यससंज्ञा भवतु इत्येतदर्थम् अविभक्तिनिमित्तस्योपसंख्यानं कर्तव्यमित्युक्तम्। एतदनन्तरम् अलिङ्गमसंख्यमव्ययसंज्ञं स्यादित्यर्थकम् 'अलिङ्गमसंख्यमिति वा' वचनं कर्तव्यमित्युक्तम्। एतत्सर्वमपि न्यासरूपं वचनम् अव्ययार्थकानां तद्धितप्रत्ययानां पाठं कृत्वा प्रत्याख्यातम्। तथा चोक्तम्- पाठाद्वा सिद्धमेतत्। कथं पाठः कर्तव्यः ? तसिलादयः प्राक् पाशपः। शश् प्रभृतयः प्राक् समासान्तेभ्यः। मान्तः। तसिवती। कृत्वोऽर्थः। नानाञाविति।

एतदनन्तरम् अविभक्तिश्शब्दोऽव्ययसंज्ञो भवतीति, तद्धितश्चासर्वविभक्तिरिति च यथा सूत्रमस्तीत्यपि उक्तम्।

तथा चान्ते महाभाष्यकारेणोक्तं यत् यद्यपि परमोच्चैः परमनीचैरित्यादीनां स्वरादीत्यादिगणे पाठो नास्ति तथापि तदन्तविधिना तेषामव्ययसंज्ञा भविष्यतीति न कश्चन दोषः।

एवं तदन्तविधिनाऽव्ययसंज्ञायां सत्याम् अत्युच्चैः, अत्युच्चैसौ, अत्युच्चैस इत्यादावपि अव्ययसंज्ञा प्राप्नोतीति वक्तुं न शक्यते यतो हि अव्ययेति महत्या संज्ञया ज्ञायते यत् स्त्रीत्वादीनि, एकत्वादीनि च यन्न व्येति तदव्ययं भवति। एवमन्वर्थसंज्ञामाश्रित्य प्रतिपादितं यद' त्युच्चैसौ' इत्यादौ अव्ययसंज्ञा न भविष्यति। अत एव औकारादिविभक्तेर्लुगपि न।

## ११.२ उद्देश्यम्

अस्य पाठस्याध्ययनेन भवन्तः-

- स्वरादिग्रहणस्य निपातग्रहणस्य च प्रयोजनं विज्ञाय अन्यान् अपि बोधयितुं समर्था भविष्यन्ति।
- अविभक्तिः, अलिङ्गमसंख्यमिति वा न्यासं ज्ञात्वा सिद्धान्तत्वेन तान् तद्धितप्रत्ययान् ज्ञास्यन्ति। येऽव्ययसंज्ञायां कारणानि सन्ति।
- 'अत्युच्चैसौ' इत्यादौ अव्ययसंज्ञा कथं न भवतीति ज्ञास्यन्ति।
- सूत्रस्य प्रयोजनविषये ज्ञास्यन्ति।
- एतत् सूत्रं विनाऽपि कथं कार्यं सेत्स्यतीति ज्ञास्यन्ति।
- असर्वविभक्तिपदे कः समासोऽङ्गीकरणीयः इति सम्यग् बोधो भवेत्

## ११.३ स्वरादिनिपातमव्ययम् १-१-३७

### ११.३.१ समासः, अर्थः, उदाहरणम्

समासः- स्वरः, आदिः येषां ते स्वरादयः, ते च निपाताश्चेति समाहारद्वन्द्व-समासे स्वरादिनिपातम्, इति प्रथमान्तमेकं पदम्। 'अव्ययम्' इत्यपि प्रथमान्तं द्वितीयं पदम्। एवं द्विपदात्मकमिदं सूत्रम्।

सूत्रार्थः- स्वरादयो निपाताश्चाव्ययसंज्ञाः स्युः। स्वरादयश्चादयश्च सिद्धान्त-कौमुद्या अव्ययप्रकरणे पठिताः सन्ति। तत्रैव ते दृष्टव्याः।

उदाहरणम्- स्वर् = स्वर्गे, परलोके चार्थे भवति। स्वरादिगणपठितत्वात्, अव्ययसंज्ञा भवति। तेन 'अव्ययादाप्सुपः' इति सूत्रेण सुपो लुकि रेफस्य विसर्गे सति 'स्वः' इति रूपं सिद्धं भवति। स्वरादिगणपठितेभ्यः अन्यशब्देभ्योऽपि सुपो लुक्कार्यं ज्ञातव्यम्।

च = चादिगणपठितोऽयं शब्दोऽस्ति। तेन 'चादयोऽसत्वे' इति सूत्रेण निपातसंज्ञा भवति। निपातसंज्ञात्वात् प्रकृतसूत्रेण अव्ययसंज्ञा, अव्ययसंज्ञात्वाच्च सुपो लुकि सति 'च' इति पदं सिद्धं भवति। एवं चादिगणपठिताः ये शब्दाः सन्ति। तेभ्योऽपि उक्तकार्याणि ज्ञातव्यानि।

अत्रेदं शङ्कते यत् अव्ययसंज्ञायाः प्रमुखं प्रयोजनं सुपो लुक् यदि वर्तते तर्हि सुबुत्पत्तिरेव मा भवतु। तेन अव्ययसंज्ञाविधायकं सूत्रमपि आवश्यकं नास्तीति वक्तुं न शक्यते। यतो हि 'अपदं न प्रयुञ्जीत' इति नियमेन सुबुत्पत्त्यभावे तेषां प्रयोग एव भवितुं नार्हति। तेषां लोके प्रयोगः स्यादित्येतदर्थं सुबुत्पत्तिरावश्यकी। सुबुत्पत्तौ च लुग्विधायकं सूत्रमपि आवश्यकम्। एवं लुग्विधानाय अव्ययसंज्ञाविधाकं सूत्रमपि कर्तव्यं भवतीति ।

### ११.३.२ चादितः स्वरादीनां पृथक्पाठप्रयोजनम्, निपाताव्ययसंज्ञयोः पृथक्करणप्रयोजनञ्च।

'स्वरादिनिपातमव्ययमि'ति सूत्रे महाभाष्यकारेण पतञ्जलिना जिज्ञासितं यत् स्वरादीनां चादितः पृथग्ग्रहणं किमर्थम्? कथं न चादिगणे एव स्वरादीनामपि पाठः कृतः। उक्तजिज्ञासाशान्त्यर्थं तेनोक्तं यत् चादीनाम् असत्त्ववचनानामेव निपातसंज्ञा, तेषामेवाव्ययसंज्ञा च भवति। स्वरादीनां च सत्ववचनामसत्ववचनानां च अव्ययसंज्ञा इष्यते। यदि स्वरादीनां चादिगणे एव पाठः स्यात्तदा असत्ववचनानामेव स्वरादीनाम् अव्ययसंज्ञा स्यात्। सत्त्ववचनानाञ्च न स्यात्। उभयोरव्ययसंज्ञा स्यादित्येतदर्थं स्वरादीनां चादितः पृथग् ग्रहणं कृतम्।

तथा च स्वरादीनां चादीनां पृथक्पाठस्तु 'निपाता आद्युदात्ता' इति स्वरभेदार्थोऽपि अस्ति। यदि स्वरादीनामपि चादिगणे पाठः स्यात् तदा तेषां निपातसंज्ञा भविष्यति। निपातसंज्ञायाञ्च सत्याम् आद्युदात्तापत्तिः स्यात्। तन्माभूदित्येतदर्थं पृथक्पाठः।

एतदनन्तरं पतञ्जलिना अपरः प्रश्नः समुपस्थापितो यत् कथम् 'अव्ययसंज्ञा' 'निपातसंज्ञा' इत्युभे संज्ञे क्रियेते, न निपातसंज्ञैवेति। अर्थात् 'प्राग्रीश्वरान्निपाताः' 'स्वरादीनि चादयोऽसत्वे' इति सूत्रमेव कथं न कृतम्।

उक्तप्रश्नं निराकर्त्तुमाह-नैवं शक्यमिति। अर्थात् निपाताव्ययेत्युभयोः संज्ञयोरावश्यकता वर्तते। यदि स्वरादीनामपि निपातसंज्ञा स्यात् तर्हि 'निपात एकाजनाङ्' इति सूत्रेण उक्ता प्रगृह्यसंज्ञा स्वरादीनामप्येकाचां स्यात्। तथा सति क्व + इव = क्वेव इतीष्यते तन्न स्यात्। 'प्लुतप्रगृह्या.' इति सूत्रेण प्रकृतिभावविधानात्। 'क्व' इत्यत्र हि 'किमोऽत्' इति अत्प्रत्ययो वर्तते। तकारस्य इत्संज्ञा भवति। 'अयमत्प्रत्ययः' एकाजरूपोऽस्तीति प्रतिपादयन्नाह कैयटः- 'किमोऽत्' इत्यत्प्रत्ययः, दक्षिणादाच् इत्याच्।

एतदनन्तरं प्रतिपादितं यत् निपातसंज्ञा मास्तु अव्ययसंज्ञैव भवतु। न अव्ययसंज्ञैव स्यादिति जिज्ञासायामुच्यते- एवं कर्तुं न शक्यते। यतो हि अव्यये 'नञ्कुनिपातानामिति' स्वरविधायकं सूत्रं वक्ष्यते। यदि निपातसंज्ञा न स्यात् तर्हि सूत्रे चादीनां प्रादीनां च पाठः कर्तव्यो भवतीति गौरवम्। तन्मा भूदित्येतदर्थं निपातसंज्ञाऽपि पृथक् कर्तव्या। तथा सति अव्यये 'नञ्कुनिपातानाम्' इति सूत्रं कर्तव्यमिति। एवं स्पष्टं यत् स्वरादिनिपात-मव्ययमिति सूत्रे स्वरादीनां निपातानां च पृथग्ग्रहणं कर्तव्यम्। निपातसंज्ञापि, अव्ययसंज्ञापीति उभयसंज्ञापि कर्तव्येति।

**मूलग्रन्थपाठो व्याख्या च**

**किमर्थं पृथग्ग्रहणं स्वरादीनां क्रियते, न चादिष्वेव पठ्येरन्?**

**चादीनां वै असत्ववचनानां निपातसंज्ञा। स्वरादीनां पुनः सत्ववचनानाम-सत्ववचनानां च॥**

**व्याख्या**– 'स्वरादिनिपातमव्ययम्' इति सूत्रे स्वरादीनामव्ययसंज्ञां कर्तुं स्वरादिग्रहणं कृतं विद्यते। तत्र महाभाष्यकारेण प्रश्नः समुपस्थापितो यत् यदि चादिगणे स्वरादीनामपि पाठः स्यात्तदा 'निपातमव्ययम्' इत्यनेनैव स्वरादीनामपि अव्ययसंज्ञा भविष्यति। स्वरादीनां पृथक्सूत्रे ग्रहणं न कर्तव्यं भवतीति लाघवम्। एवं सत्यपि स्वरादीनां पृथक्ग्रहणं किमर्थम् ?

एतदनन्तरं 'निपातमव्ययमिति' सूत्रे सति इष्टसिद्धिर्न भविष्यति। अर्थात् स्वरादीनामपि चादिगणे पाठेनैव अव्ययसंज्ञेति भवितुं नार्हतीति प्रतिपादयन्नाह–चादीनां वै इति। वै = एवार्थे, व्युत्क्रमे चास्ति। तेन असत्ववचनानामेवेत्यर्थः। अर्थात् चादिगणे स्वरादिशब्दानां पाठो भवितुं नार्हति। यतो हि 'चादयोऽसत्वे' इति सूत्रेण असत्ववाचिनामेव निपातसंज्ञा, तेषामेवाव्ययत्वञ्च भवति किन्तु स्वरादीनां सत्ववाचिनामसत्ववाचिनाञ्च अव्ययसंज्ञा भवति। यथा – स्वस्ति वाचयति, स्वः पश्य, स्वस्तिष्ठति, स्वर् आगतः इत्यत्र विद्यमानः स्वस्तिस्वःशब्दः कर्मकर्तृ–अपादानविशिष्ट एवास्ति। अतो नैककारकयोगात् स्वस्तिस्वःशब्दः सत्ववाची एव। इत्थं स्पष्टं यत् यदि स्वरादीनामपि चादिगणे पाठात् निपातसंज्ञया अव्ययसंज्ञा स्यात्तर्हि असत्ववाचिनामेव स्वरादीनामव्ययसंज्ञा स्यात्, इष्यते तु सत्ववाचिनामपि अव्ययसंज्ञा। एवं सिद्धं यत् स्वरादीनां चादितः पृथग्ग्रहणमावश्यकमस्ति।

नन्वेवं भवतु नाम चादितः स्वरादिगणः पृथक्। परन्तु प्राग्रीश्वरान्निपाताः, स्वरादीनि, 'चादयोऽसत्वे' इति सूत्रन्यासेनैव अर्थात् निपातसंज्ञयैव कार्यं भवितुमर्हति न वेति जिज्ञासाशान्त्यर्थमाह–

**मूलग्रन्थपाठः**

**अथ किमर्थमुभे संज्ञे क्रियेते, न निपातसंज्ञैव स्यात्।**

**नैवं शक्यम्। 'निपात एकाजनाङ्' इति प्रगृह्यसंज्ञोक्ता, सा स्वरादीनामप्येकाचां प्रसज्येत।**

**व्याख्या**– किमर्थं निपातसंज्ञापि क्रियते, अव्ययसंज्ञापि क्रियते। 'स्वरादीनि, चादयोऽसत्वे' इति सूत्रं प्रकल्प्य कथं न एकैव निपातसंज्ञा कृतेति जिज्ञासाशान्त्यर्थमाह नैवं शक्यमिति।

अयं भावः– 'स्वरादीनि', 'चादयोऽसत्वे' इति केवलं निपातसंज्ञयैवेष्टसिद्धिर्न भविष्यति। यतो हि 'निपात एकाजनाङ्' इति सूत्रेण उक्ता या प्रगृह्यसंज्ञा सा स्वरादीनामपि एकाचां स्यात्। यथा क्व + इव = क्वेव इत्यत्र 'आद्गुणः' इति सूत्रेण गुणो भवति। यदि अव्ययसंज्ञा न स्यात्, तस्य स्थाने निपातसंज्ञैव स्यात्तर्हि 'क्व' इत्यत्र 'किमोऽत्' इति सूत्रेण विधीयमानः (प्रवृत्तः) अत् प्रत्ययः (अप्रत्ययः) तकारस्येत्संज्ञकत्वेन एकाजेवास्ति। तेन 'निपात एकाच्' इति सूत्रेण प्रगृह्यसंज्ञायाः सत्वेन 'प्लुतप्रगृह्या.' इति सूत्रेण प्रकृतिभावः स्यात्। तन्मा भूदित्येतदर्थं पृथगव्ययसंज्ञापि क्रियते। यदा अव्ययसंज्ञा वर्तते। तदा 'क्व' इत्यस्य निपातसंज्ञा नास्ति। किन्तु अव्ययसंज्ञैव। एवं निपातसंज्ञाया अभावात् 'क्वेव' इत्यत्र न प्रगृह्यसंज्ञा भवति। अपितु गुणे सतीष्टसिद्धिः। इत्थं स्पष्टं यत् पृथक् अव्ययसंज्ञापि आवश्यकी अस्ति।

ननु अव्ययसंज्ञाया आवश्यकत्वे सति अव्ययसंज्ञैवास्तु निपातसंज्ञा माऽस्तु इति मनसि निधायाह–

**मूलग्रन्थपाठः**

**एवं तर्हि अव्ययसंज्ञैव स्यात्। तच्चाशक्यम्। वक्ष्यत्येतत् 'अव्यये नञ्कुनिपातानाम्' इति। तद्गरीयसा न्यासेन परिगणनं कर्तव्यं स्यात्। तस्मात् पृथक् ग्रहणं कर्तव्यम्। उभे च संज्ञे कर्तव्ये।**

**व्याख्या**- अव्ययसंज्ञाया आवश्यकत्वं पूर्वं प्रतिपादितम्। इदानीं निपातसंज्ञायाआवश्यकत्वं व्यवस्थापयितुं प्रश्नः समुपस्थापित एवं तर्हीति। एवं तर्हि = अव्ययसंज्ञाया आवश्यकत्वे व्यक्ते सति अव्ययसंज्ञैव अस्तु निपातसंज्ञा मास्तु इति प्रश्नस्य आशयः।

निपातसंज्ञाऽपि पृथक् कर्तव्येति प्रतिपादयितुमाह-तच्चाशक्यमित्यादि। केवलमव्यय-संज्ञया इष्टान्वाख्यानं कर्तुं न शक्यते। यतो हि अग्रे 'अव्यये नञ्कुनिपातानाम्' इति स्वरविधायकं वार्तिकं वक्ष्यति = वदिष्यति। वार्तिकेऽस्मिन् निपातग्रहणं कृतमस्ति। यदि निपातसंज्ञा पृथक् न स्यात्तर्हि वार्तिके च वा, ह, अह, प्र, परेत्यादिनिपातानां ग्रहणं कर्तव्यं भविष्यति येन गौरवं स्पष्टमेव। अव्ययेषु च, वा, ह, अह, प्र, परेत्यादिनिपातानामेव प्रकृतवार्तिकेन पूर्वपदप्रकृतिस्वरो भवतु, इत्येतदर्थं चादीनां प्रादीनां पाठ आवश्यकोऽस्ति। तथा च नञ्कु-अव्ययानामिति सूत्रं कृत्वा (निपातानामपि अव्ययसंज्ञां कृत्वा) इष्टसिद्धेः प्रकल्पनं भवितुं नार्हति। यतो हि तदानीं चादि-प्राद्यतिरिक्तानामपि अव्ययानां पूर्वपदप्रकृतिस्वरः स्यात्। तन्माभूदित्येतदर्थं निपातस्य पृथक् ग्रहणं कर्तव्यम्। उभे संज्ञे च कर्तव्ये = अव्ययसंज्ञा निपातसंज्ञा च पृथक्-पृथक् कर्तव्येति दिक्।

**बोधप्रश्नः**

१. स्वरादीनां चादितः पृथग्ग्रहणं किमर्थम्?

२. कथम् अव्ययसंज्ञा निपातसंज्ञा इत्युभयसंज्ञे क्रियेते?

३. कथं न अव्ययसंज्ञैव कृता।

### ११.३.४ निष्कर्षः

'स्वरादिनिपातमव्ययम्' इति सूत्रे स्वरादिग्रहणं निपातग्रहणञ्च पृथक्-पृथक् कर्तव्यमिति, निपातसंज्ञाऽपि, अव्ययसंज्ञा च पृथक्-पृथक् कर्तव्येति च महाभाष्यकारेण व्यवस्थापितम्। तेनोक्तं यत् 'चादयोऽसत्वे' इति सूत्रेण असत्ववचनानां चादीनां निपातसंज्ञा भवति। असत्ववचनानामेव चादीनां च अव्ययसंज्ञा भवति। स्वरादीनां च सत्ववचनानामसत्ववचनानामव्ययसंज्ञा इष्यते। यदि अव्ययसंज्ञाविधायकसूत्रे स्वरादीनाम् पृथग्ग्रहणं न स्यात्तर्हि (अर्थात् चादिपाठेनैव स्वरादीनामपि अव्ययसंज्ञा स्यात्तर्हि) चादिवत् असत्ववचनानामेव स्वरादीनामव्ययसंज्ञा स्यात्, सत्ववचनानां न स्यादतः स्वरादीनामपि चादितः पृथक् पाठः कर्तव्यः।

एतदनन्तरं महाभाष्यकारेणोक्तं यत् यदि स्वरादीनामपि निपातसंज्ञा स्यात्तर्हि 'निपात एकाजनाङ्' इति सूत्रेण उक्ता प्रगृह्यसंज्ञा स्वरादीनामप्येकाचां स्यात्। तथा सति क्व + इव-क्वेव इतीष्यते तन्न स्यादित्येतदर्थम् अव्ययसंज्ञाऽपि पृथक्कर्तव्येति।

एतदनन्तरं तेन प्रतिपादितं यत् यदि अव्ययसंज्ञा आवश्यकी तर्हि अव्ययसंज्ञैव भवतु निपातसंज्ञा माऽस्तु इति तृतीये प्रश्ने तेन व्यवस्थापितं यत् उभयोः संज्ञयोरावश्यकता वर्तते। यतो हि 'अव्यये नञ्कुनिपातानामिति' स्वरविधायकं वार्तिकं वक्ष्यते। यदि निपातसंज्ञा न स्यात्तर्हि चादीनां प्रादीनां च पृथक् पाठः कर्तव्यो भवतीति गौरवम्। तन्मा भूदित्येतदर्थं निपातसंज्ञापि पृथक् कर्तव्येति त्रिभिः प्रश्नैः, त्रिभिश्च उत्तरैः परिपूरितं स्वरादिनिपातमव्ययमिति सूत्रं महाभाष्यकारेण व्याख्यातमिति।

## ११.४ तद्धितश्चासर्वविभक्तिः (१-१-३८)

### ११.४.१ सूत्रविमर्शः

पदच्छेदः– तद्धितः, च असर्वविभक्तिरितिच्छेदः।

समासः– न सर्वा असर्वा। असर्वा विभक्तिर्यस्मादिति बहुव्रीहिसमासे सति असर्वविभक्तिरिति पदं भवति।

अनुवृत्तिः– स्वरादिनिपातमव्ययमिति सूत्रादव्ययमिति पदमनुवर्तते।

सूत्रार्थः– यस्मात् सर्वा = वचनत्रयात्मिका विभक्तिर्नोत्पद्यते स तद्धितान्तोऽव्ययं स्यादिति सूत्रार्थः।

उदाहरणम्– 'पञ्चम्यास्तसिल्' इत्यारभ्य 'द्वित्र्योश्च धमुञ्' इत्यन्ताः तद्धितप्रत्यया अन्ते यस्य भविष्यन्ति ते तद्धितप्रत्ययान्ताः शब्दा अव्ययसंज्ञकाः सन्ति। एवं 'बह्वल्पार्थात्' इत्यारभ्य 'अव्यक्तानुकरणात्' इति डाजन्ताः। 'अमु चच्छन्दसि' इत्यम्, 'किमेत्तिङव्यय' इत्याम् च। 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' 'द्वित्रिचतुर्भ्यस्सुच्' 'विभाषा बहोर्धा' इति त्रयश्च। तेनैकदिक् 'तसिश्च' इति तसिः। 'तेन तुल्यं...' इति विहितो वतिः। 'विनञ्भ्यां नाना.' इति विहितौ नानाञौ। उक्ततद्धितप्रत्ययेन विशिष्टाः शब्दा एव प्रकृतसूत्रसम्बद्धाः सन्ति। अत उक्ततद्धितप्रत्ययान्ताः शब्दा एव अव्ययसंज्ञका भवन्ति। यथा– यस्मादिति यतः। यच्छब्दात् पञ्चम्यास्तसिल् इति सूत्रेण तसिल्प्रत्ययः। अनुबन्धलोपे 'त्यदादीनामः' इत्यनेन अकारादेशे पररूपे 'यतस्' इत्यस्य तद्धितान्तत्वात्प्रातिपदिकत्वेन सुबुत्पत्तौ, प्रकृतसूत्रेण अव्यसंज्ञात्वात् 'अव्ययादाप्सुपः' इति सूत्रेण सुपो लुकि सकारस्य रुत्वे, विसर्गे च कृते 'यतः' इति अव्ययपदं सिद्धं भवति।

एवं तस्मिन्निति तत्र इत्यपि उदाहरणत्वेन बोध्यम्। तच्छब्दात् त्रल्प्रत्ययेऽनुबन्धलोपे, अत्वे, पररूपे, प्रकृतसूत्रेण अव्ययत्वे, सुपो लुकि सति 'तत्र' इति अव्ययपदं निष्पन्नं भवति। इत्थमन्येऽपि उक्ततद्धितप्रत्ययविशिष्टाः शब्दा अस्य सूत्रस्योदाहरणत्वेन बोध्याः।

### ११.४.२ 'असर्वविभक्तौ' इति निर्देशे 'अविभक्तिनिमित्तस्योपसंख्यानम्' इति कथनस्य प्रयोजनम् आक्षेपः समाधानञ्च। त्रलादीनां चोपसंख्यानमिति वार्तिकस्यावश्यकत्वम्।

महाभाष्यकारेण विना, नानेति शब्दयोरव्ययसंज्ञा स्यादित्येतदर्थम् 'असर्वविभक्तौ' 'अविभक्तिनिमित्तस्य' अपि अव्ययसंज्ञा वक्तव्येत्युक्तम्। अर्थात् यस्य तद्धितस्य उत्पत्तौ कापि विभक्तिः निमित्तरूपा नास्ति तस्यापि अव्ययसंज्ञा भवतीति वक्तव्या। यथा– विना, नाना इति। अत्र वि–नञ् शब्दाभ्यां 'विनञ्भ्यां नानाञौ.' इति सूत्रेण ना, नाञ्तद्धितप्रत्ययो र्विधाने कापि विभक्तिर्निमित्तरूपा नास्ति। अतः एतौ द्वौ तद्धिप्रत्ययौ अविभक्तिनिमित्तौ स्तः। एवं यदि असर्वविभक्ताविभक्तिनिमित्तस्योपसंख्यानं क्रियते तर्ह्येव 'विना नाना' इत्यनयोरव्ययसंज्ञा भविष्यति। तेन 'अव्ययादाप्सुपः' इत्यनेन सुपो लुकि सति 'विना नाना' इतीष्टरूपयोः सिद्धिः।

असर्वविभक्तिरित्येवोच्यमाने 'विना, नाना' इत्यनयोरव्ययसंज्ञा कथं न स्यादिति जिज्ञासायामुक्तम् – सर्वविभक्तिर्ह्यविशेषादिति। अर्थात् यः कामपि विभक्तिं निमित्तत्वेन नाश्रयते सो हि सर्वविभक्तिर्भवति। 'विना नाना' इत्यत्र एकापि विभक्तिः निमित्तरूपा नास्ति अतः एषः सर्वविभक्तिरिति। एवमसर्वविभक्तिरित्येवोच्यमाने अविभक्तिरित्यनुच्यमाने 'विना नाना' इत्यनयोख्ययसंज्ञा न स्यादतः असर्वविभक्तावभिक्तिनिमित्तस्योपंसख्यानमावश्यकम्।

एतदनन्तरं पतञ्जलिनोक्तं यत् यदि अविभक्तिनिमित्तस्योपसंख्यानं क्रियते तर्हि परस्परापेक्षत्वरूपान्योऽन्याश्रयदोषः स्यात्। तथा हि– यदि अविभक्तिः स्यात्तदा अव्ययसंज्ञा, यदा च अव्ययसंज्ञा तदा 'अव्ययादाप्सुपः' इति सूत्रेण सुपो लुकि सति अविभक्तित्वं स्यात्। एवम् अव्ययसंज्ञया अविभक्तित्वमुत्पाद्यते। इत्थं स्पष्टं यत् अव्ययसंज्ञायामविभक्तित्वस्य आवश्यकता अस्ति, अविभक्तित्वेऽव्ययसंज्ञाया आवश्यकता वर्तते। इति रीत्या अन्योऽन्याश्रयदोषः स्यात्। अत एव झटित्येव

महाभाष्यकारेण अलिङ्गमसंख्यमिति समाधानान्तरमुक्तम्।

एतदनन्तरं महाभाष्यकारेण प्रतिपादितं यत् 'अविभक्तौ' इत्युच्चारिते यो हि अन्योऽन्याश्रयदोष उक्तः स दोषो न भविष्यति। यतो हि अव्ययसंज्ञायामविभक्तित्वस्य आवश्यकता वर्तते, परन्तु अव्ययसंज्ञया अविभक्तित्वं नोद्भाव्यते। एवं नास्ति अन्योऽन्याश्रयः। तथा हि- यद्यपि विभक्तिलोपमारभमाणा वैयाकरणा अविभक्तिकान् शब्दान् प्रयुञ्जते। परन्तु वैयाकरणेभ्यो अन्ये जनाः (ये 'अव्ययादाप्सुपः' इति सुब्लुग्विधायकं सूत्रं न जानन्ति) कथम् अविभक्तिकान् शब्दान् प्रयुञ्जते। यदि अव्ययादेव अविभक्तिकानां शब्दानां सिद्धिः स्यात् तर्हि अव्ययसंज्ञां लुक्विधायकं सूत्रं च अजानन्तो जनाः अविभक्तिकान् शब्दान् प्रयोक्तुं समर्थाः न स्युः। किन्तु तेऽपि अविभक्तिकानां शब्दानां प्रयोगं कुर्वन्ति। एवं स्पष्टं यत्- अव्ययसंज्ञया अविभक्तित्वं नोत्पद्यते। तेषाम् एकत्वादीनां ज्ञानमपि अस्ति। यतो हि - अन्येन वस्त्रेन (मूल्येन) एकां गां क्रीणन्ति। अन्येन द्वौ, अन्येन त्रीन् इति। एवं यो हि वदति एकत्वादीनामर्थानां ज्ञानाभावात् तेऽविभक्तिकान् शब्दान् प्रयुञ्जते सः परास्त इति। तथा च विना, नानाशब्दयोः क्रियाप्रधानत्वात् एतयोरर्थयोर्लिङ्गसंख्याभ्यां योगो नास्ति।

एतदनन्तरं पतञ्जलिना उक्तं यत् त्रलादीनामपि अव्ययसंज्ञा वक्तव्या। असर्वविभक्तिरित्युच्यते न चैते असर्वविभक्तिकाः सन्ति। अपि तु सर्वविभक्तिका एव एते सन्ति। अतोऽव्ययसंज्ञा न प्राप्नोति। इत्येतदर्थं त्रलादीनां चोपसंख्यानं कर्तव्यम्। यथा- तत्र, यत्र, ततः, यतः। अत्र एवं शंका न कर्तव्या यत् 'पञ्चम्यास्तसिल्' इति सूत्रेण विहितस्तसिल्प्रत्ययः, 'सप्तम्यास्त्रल्' इत्यनेन विहितस्त्रल्प्रत्ययश्च क्रमेण पञ्चम्यन्तात्, सप्तम्यन्तादेव विधीयते, अतो न सर्वविभक्तिः, किन्तु असर्वविभक्तित्वेनैव अव्ययसंज्ञा भविष्यतीति। यतो हि त्रलादयः सर्वविभक्तिका अपि सन्ति। यथा- 'इतराभ्योऽपि दृश्यन्ते' इति वचनेन विहितास्त्रलादयः सर्वविभक्तिका एव सन्ति। तद्यथा- ततो भवान्, ततो भवन्तम्, ततो भवता, तत्र भवान्। तत्र भवन्तम्, तत्र भवता, इत्यादिप्रयोगदर्शनेन स्पष्टमेव यत् त्रलादयः सर्वविभक्तिकाः अपि सन्ति। एतेषां सर्वविभक्तिकत्वेन अव्ययसंज्ञा न स्यादतस्त्रलादीनामव्यय-संज्ञा वक्तव्या।

**मूलग्रन्थपाठो व्याख्या च**

**(वा.) असर्वविभक्तावविभक्तिनिमित्तस्योपसंख्यानम्**

**असर्वविभक्ता वविभक्ति-निमित्तस्योपसंख्यानं कर्तव्यम्। विना, नाना। किं पुनः कारणं न सिध्यति।**

**(वा.) सर्वविभक्तिर्ह्यविशेषात्**

**सर्वविभक्तिर्ह्येष भवति। किं कारणम्? अविशेषेण विहितत्वात्।**

**व्याख्या**- 'विना, नाना' इत्यनयोरव्ययसंज्ञा न स्यादत आह-असर्वविभक्तावेति। 'असर्वविभक्तौ' इति निर्देशे अविभक्तिनिमित्तस्योपसंख्यानं कर्तव्यम्। अर्थात् यस्य तद्धितस्योत्पत्तौ कस्या अपि विभक्तेराश्रयणं न क्रियते, एतादृशविभक्तिकस्यापि अव्ययसंज्ञा वक्तव्या। यथा- विना नाना इति। अत्र हि 'विनञ्भ्यां नानाञौ.' इति सूत्रेण विनञ्शब्दाभ्यां क्रमेण नानाञौ प्रत्ययौ भवतः। यतो हि अत्र कापि विभक्तिः निमित्तत्वेन आश्रिता नास्ति। अतोऽविभक्तिकौ एतौ प्रत्ययौ। एवमविभक्तिकत्वेन अव्ययसंज्ञा न स्यात्।

ननु यदि कापि विभक्तिः निमित्तत्वेन आश्रिता नास्ति तर्हि असर्वविभक्तिरेवास्तीति जिज्ञासाशान्त्यर्थं प्रश्न आह- किं पुनरिति। 'विना, नाना' इत्यत्र किं कारणं वर्तते यदव्ययसंज्ञा न स्यात्। तत्र कारणमाह- सर्वविभक्तिरिति। विशेषविभक्तेरनाश्रयणात् सर्वविभक्तिर्हि एष भवति। कामपि विभक्तिं निमित्तरूपेण नाङ्गीकरोति। अतः सर्वविभक्तिरिति।

**मूलग्रन्थपाठः**

**( वा. ) त्रलादीनाञ्चोपसंख्यानम्**

**त्रलादीनां चोपसंख्यानं कर्तव्यम्। तत्र-यत्र। ततः-यतः। ननु च विशेषे एते विधीयन्ते। 'पञ्चम्यास्तसिल्' 'सप्तम्यास्त्रल्' इति। वक्ष्यत्येतत् 'इतराभ्योऽपि दृश्यन्ते इति'।**

**व्याख्या**- त्रलादितद्धितानामपि अव्ययसंज्ञा वक्तव्या। यथा- तत्र, यत्र। ततः, यतः। यत्र हि तद्यद्शब्दाभ्यां 'सप्तम्यास्त्रल्' इत्यनेन त्रल्प्रत्यये 'पञ्चम्यास्तसिल्' इत्यनेन तसिल्प्रत्ययेऽनुबन्धलोपे 'त्यदादीनामः' इत्यनेन अकारादेशे पररूपे च कृते प्रकृतसूत्रेण अव्ययत्वात् सुपो लुकि उक्तरूपं सिद्धं भवतीति प्रक्रिया बोध्या। ननु पञ्चम्यन्तात् तसिल्प्रत्ययस्य, सप्तम्यन्तात् त्रल्प्रत्ययस्य विधानात्, विशेषविभक्त्याश्रयणाच्च असर्वविभक्तिरिति पदेनैव त्रलादीनामव्ययसंज्ञा सिद्धा। 'त्रलादीनामुपसंख्यानमिति वचनं कथम् आवश्यकमिति जिज्ञासायामाह-वक्ष्यत्येतदिति। 'इतराभ्योऽपि दृश्यन्ते' इति वचनेन विहितस्त्रल्प्रत्ययः, तसिल्प्रत्ययश्च असर्वविभक्तिको नास्ति। अपितु सर्वविभक्तिक एवास्ति। असर्वविभक्तिकत्वाभावाच्च 'ततो भवान्' ततो भवन्तम् ततो भवता, तत्र भवान् तत्र भवन्तम् तत्र भवता इत्यादौ अव्ययसंज्ञा न स्यात्। अत एव 'इतराभ्योऽपि दृश्यन्ते' इत्यनेन विहितत्रलादीनामव्ययसंज्ञां विधातुम् त्रादीनामुपसंख्यानमिति वार्तिकं कर्तव्यम्।

**मूलग्रन्थपाठः**

**( वा. ) अविभक्तावितरेतराश्रयत्वादप्रसिद्धिः**

**अविभक्तावितरेतरा- श्रयत्वादप्रसिद्धिः संज्ञायाः। का इतरेतराश्रयता। सत्यविभक्तित्वे संज्ञया भवितव्यम्। संज्ञया चाविभक्तित्वं भाव्यते। तदितरेतराश्रयं भवति। इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते।**

**व्याख्या**- 'विना, नाना' इत्यत्रापि अव्ययसंज्ञाविधानाय असर्व विभक्तावविभक्ति-निमित्तस्योपसंख्यानमिति वचनं कर्तव्यमिति प्रागेव प्रतिपादितम्। इदानीं तस्मिन् पक्षेऽन्यो-ऽन्याश्रयदोष उद्भाव्यते। अयं भावः- अविभक्तिरव्ययमिति पक्षेऽन्योऽन्याश्रयदोषो भवति। इतरेतराश्रयरूपान्योऽन्याश्रयदोषाद् अव्ययसंज्ञा सिद्धा न भवति। सा च इतरेतराश्रयता अविभक्तित्वे सति अव्ययसंज्ञा भवति, एवमव्ययसंज्ञायाः कृते अविभक्तित्वस्य आवश्यकता वर्तते। यदा अव्ययसंज्ञा भविष्यति तदा 'अव्ययादाप्सुपः' इत्यनेन सुपो लुकि सति अविभक्तित्वं भविष्यति। एवमव्ययसंज्ञयैव अविभक्तित्वमुत्पाद्यते। इत्थं स्पष्टं यत् अविभक्तित्वस्य कृते अव्ययसंज्ञाया आवश्यकता वर्तते। तथा च अव्ययसंज्ञायाः कृतेऽविभक्तित्वस्य आवश्यकता वर्तते। इत्थं परस्परापेक्षत्वेन अविभक्तिरव्ययमिति पक्षे इतरेतराश्रयरूपान्योऽन्याश्रयदोषो वर्तते। इतरेतराश्रयाणि कार्याणि च न भवन्ति। अत एव महाभाष्यकारेण अस्य दोषत्वेनोद्भावनं कृतम्। एवमविभक्तिरव्ययमिति पक्षस्य अन्योऽन्याश्रयदोषग्रस्तत्वाद् पक्षान्तरमाह अग्रे।

**बोधप्रश्नः**

१. अविभक्तिरव्ययमिति पक्षे कथम् अन्योऽन्याश्रयः।

### ११.४.३ 'अलिङ्गमसंख्यमिति वा इति न्यासः', सिद्धं तु पाठात् इत्यनेन तत्खण्डनम्, सूत्रस्थासर्वविभक्तिरित्यनेनापि सर्वेष्टसिद्धिश्च।

सत्यविभक्तित्वे अव्ययसंज्ञया भवितव्यम्। अव्ययसंज्ञया चाविभक्तित्वं भाव्यते। इति कृत्वा अविभक्तिरव्ययमिति पक्षेऽन्योऽन्याश्रयदोषो वर्तते इति मनसि विधाय उक्तं महाभाष्यकारेण

१. स्वरादिनिपातमव्ययम्, १-१-३७
तद्धितश्चासर्वविभक्तिः ४-१-३८

'अलिङ्गमसंख्यमिति वा'। अर्थात् अथवा अलिङ्गमसंख्यमव्ययसंज्ञं भवतीति वक्तव्यम्। एवम् अलिङ्गासंख्यत्वे सति संज्ञया भवितव्यम्। संज्ञया चालिङ्गासंख्यत्वं भाव्यते इति रीत्या अस्मिन्पक्षेऽपि अन्योऽन्याश्रयदोषो वर्तते इति वक्तुं न शक्यते। यतो हि अलिङ्गासंख्यत्वे सति अव्ययसंज्ञा भवति। परन्तु संज्ञया अलिङ्गासंख्यत्वं न भाव्यते। अर्थात् अलिङ्गता असंख्यता वाचनिकी नास्ति। अपितु स्वाभाविकी अस्ति। तद्यथा समानमीहमानानां चाधीयानानां च केचिदर्थैर्युज्यन्ते अपरे न। स्वाभाविकमेतत् भवति। एवमत्रापि अव्ययस्य अलिङ्गत्वमसंख्यत्वञ्च स्वाभाविकमस्ति। स्वभाविकेऽलिङ्गासंख्यत्वे सत्यव्ययसंज्ञा भवतीति अन्योऽन्याश्रयदोषः, अस्मिन्पक्षेऽपि नास्ति।

एतदनन्तरं महाभाष्यकारेण लिखितं यत् अन्योऽन्याश्रयदोषाभावेऽपि 'अलिङ्गमसंख्यमिति' वचनस्य आवश्यकता नास्ति। यतो हि अव्ययसंज्ञकार्था ये नियताः तद्धितप्रत्ययास्तेषां परिगणनात्मकं पाठं करिष्यामि। तेन तेषाम् अव्ययसंज्ञा भविष्यति। अलिङ्गमसंख्यमिति सूत्रन्यासो न कर्तव्यः।

तथा चान्ते महाभाष्यकार आह- असर्वविभक्तिरव्ययमिति सूत्रे सत्यपि न कश्चन दोषो भवति। तथा हि- 'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनम्' इति बहु (अधिकं) क्रियते। उक्तसूत्रयोः स्थाने 'एकवचनम्' 'द्विबह्वोर्द्विवचनबहुवचने' इति सूत्रद्वयं भविष्यति। एतेन एकग्रहणं न कर्तव्यं भवतीति लाघवम्। तथा च एकवचनमुत्सर्गतो भवति। अर्थात् एकत्वेऽर्थेऽपि एकवचनं भवति। एकत्वार्थरहितेभ्योऽव्ययेभ्योऽपि एकवचनमत एव सिद्धं भवति। एवमव्ययेभ्यः सर्वविभक्तीनामेकवचनं भवतीति सिद्धान्तः सिद्धो भवति। 'अव्ययादाप्सुपः' इति सूत्रे सुब्ग्रहणसामर्थ्यात्। तथा च यस्मात् सर्वाः सप्तविभक्तयो नोत्पद्यन्ते सोऽसर्वविभक्तिरिति नास्ति, अपितु सोऽसर्वविभक्तिः यस्मात् एकवचनं द्विवचनं, बहुवचनं च न भवति। एवं 'विना नाना' इत्यत्र सामान्यमेकवचनमेव भवति। द्वित्वबहुत्वाऽऽकांक्षाया अभावात् द्विवचनबहुवचने न भवतः। अस्मात् कारणात् असर्वविभक्तित्वेन तयोरपि अव्ययसंज्ञा भविष्यतीति मनसि निधाय विलिखितम्- 'न चाप्येवं विग्रहः करिष्यते- न सर्वाः असर्वाः। असर्वाः विभक्तयो यस्मादिति। कथं तर्हि न सर्वा असर्वा। असर्वा विभक्तिरस्मादिति। त्रिकं पुनर्विभक्तिसंज्ञमिति।'

एवम् 'असर्वविभक्तिरव्ययम्' इति सूत्रं क्रियते। सूत्रे तद्धितग्रहणं न क्रियते। (तद्धितश्चासर्वभिक्तिरिति न क्रियते) तर्हि 'कृन्मेजन्तः' क्त्वातोसुन्कसुनः स्वरादिनिपात-मव्ययम्, अव्ययीभावश्चेति सूत्राण्यपि आवश्यकानि न सन्ति। यतो हि- एभिः सूत्रैः येषामव्ययसंज्ञा भवति। तेभ्योऽपि वचनत्रयं न भवतीति कृत्वा असर्वविभक्तित्वेनैव एतेषामपि अव्ययसंज्ञा सिद्धा। उक्तसूत्राणि न कर्तव्यानीति लाघवमिति वक्तुं न शक्यते। यतो हि- एकः, द्वौ बहवः इत्यत्रापि वचनत्रयं नोत्पद्यते। असर्वविभक्तित्वेन एतेषामपि अव्ययसंज्ञा स्यात्, तेन विभिक्तिलोपेनानिष्टप्रसक्तिः स्यात्तन्माभूदित्येतदर्थं तद्धितग्रहणमपि सूत्रे कर्तव्यम्। तद्धितग्रहणे कृते सति कृद्ग्रहणमपि आवश्यकम्। तस्मात् 'कृन्मेजन्तः' 'क्त्वातोसुन...' इत्यादीनि सूत्रण्यपि कर्तव्यानि भवन्ति। अतः तसिलादयः प्राक् पाशपः इत्यादिपाठ एव कर्तव्य इति भाष्यसिद्धान्तः।

### ११.४.४ अत्युच्चैः, अत्युच्चैसौ, अत्युच्चैसः इत्यत्र अव्ययसंज्ञाया अभावः

महाभाष्यकारेण पाठेन अव्ययसंज्ञा व्यवस्थापिता। स्वरादिगणे उच्चैः नीचैरित्यादीनामेव पाठो वर्तते। अतस्तेषामेव अव्ययसंज्ञा भविष्यति। परमोच्चैः परमनीचैरित्यस्य पाठाभावात् कथम् अव्ययसंज्ञेति जिज्ञासायामाह- तदन्तविधिना भविष्यति। अर्थात् 'येन विधिस्तदन्तस्य' इति सूत्रस्य प्रयोजनत्वेन प्रतिपादितं यत् 'प्रयोजनं सर्वनामाव्ययसंज्ञायाम्' इति वचनेन अव्ययसंज्ञा भविष्यति। अयं भावः - तदन्तस्यापि सर्वनामसंज्ञा, अव्ययसंज्ञा भवति।

यदि तदन्तस्यापि अव्ययसंज्ञा स्वीक्रियते तर्हि उच्चैरतिक्रान्तः, उच्चैरतिक्रान्तौ

इत्यादिविग्रहेण अत्युच्चैः, अत्युच्चैसौ, अत्युच्चैसः, इत्यत्रापि अनिष्टाव्ययसंज्ञा प्राप्नोति। तन्मा भूदित्येतदर्थं सर्वनामसंज्ञायाः निषेधार्थं कृतं 'संज्ञोपसर्जनप्रतिषेधः' इति वचनमनुवर्तिष्यते तेन अत्युच्चैसावित्यादौ उच्चैश्शब्दस्योपसर्जनत्वात् अव्ययसंज्ञा न भविष्यतीति न दोषः। 'संज्ञोपसर्जन...' वार्तिकस्य प्रत्याख्यानपक्षेऽपि अव्ययसंज्ञा उक्तप्रयोगे न भविष्यति। यतो हि– लघ्वर्थं हि संज्ञाकरणं भवति। अव्ययेति महती संज्ञा क्रियते। महत्याः संज्ञायाः प्रयोजनमिदं भवति यत् अन्वर्थसंज्ञा यथा विज्ञायेत। अर्थात् अव्ययशब्दस्य योऽर्थः स यत्र प्रतीयेत तत्रैव अव्ययसंज्ञा स्यादित्येतदर्थं महती संज्ञा आचार्येण कृता। न व्येतीत्यव्ययमिति अव्ययशब्दस्यार्थः। स्त्रीपुंनपुंसकानि सत्वगुणा, एकत्वद्वित्वबहुत्वानि च। एतानर्थान् केचिद् वियन्ति = विकृतिं प्राप्नुवन्ति, केचिन्न वियन्ति, ये न वियन्ति तदव्ययं भवति। उक्तं हि –

**सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।**
**वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्॥**

अत्युच्चैः, अत्युच्चैसौ, अत्युच्चैसः इत्यत्र एकत्वद्वित्वबहुत्वरूपार्थस्य विद्यमानात् अव्ययसंज्ञा न भवति। न व्येतीति अव्ययमिति व्युत्पत्तेः सत्वात् एकत्वादिरूपार्थाभावे एवाव्ययसंज्ञा भवति।

**मूलग्रन्थपाठो व्याख्या च**

**( वा. ) अलिङ्गमसंख्यमिति वा**

**अथवा अलिङ्गमसंख्यमव्ययसंज्ञं भवतीति वक्तव्यम्। एवमपीतरेतराश्रयमेव भवति। का इतरेतराश्रयता। सत्यलिङ्गासंख्यत्वे संज्ञया भवितव्यम्। संज्ञया चालिङ्गासंख्यत्वं भाव्यते। तदितरेतराश्रयं भवति। इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते।**

**नेदं वाचनिकमलिङ्गता असंख्यता च। किं तर्हि स्वाभाविकमेतत्। तद्यथा समानमीहमानानां चाधीयानानां च केचिदर्थैर्युज्यन्ते अपरे न। तत्र किमस्माभिः शक्यं कर्तुम्। स्वाभाविकमेतत्। तत्तर्हि वक्तव्यमलिङ्गमसंख्यमिति। न वक्तव्यम्।**

**व्याख्या**– अथवा अविभक्तिरव्ययमित्यस्य स्थाने अलिङ्गमसंख्यमव्ययमिति सूत्रस्य निर्माणं कृत्वा लिङ्गसंख्यारहितस्य शब्दस्य अव्ययसंज्ञा भवतीति वक्तव्यम्।

नन्वेवमपि इतरेतराश्रयरूपान्योऽन्याश्रयदोषो भवति। कथमन्योऽन्याश्रयदोष इति जिज्ञासायामाह–सत्यलिङ्गेति। अर्थात् लिङ्गसंख्यारहितशब्दमुद्दिश्य अव्ययसंज्ञा विधीयते। अव्ययसंज्ञया च 'अव्ययादाप्सुपः' इति सूत्रेण सुपो लुकि सति अलिङ्गासंख्यत्वमुद्भाव्यते। इत्थमन्योऽन्याश्रयदोषो भवति। परस्परापेक्षत्वेन अन्योऽन्याश्रयाणि कार्याणि न सिध्यन्ति। एतदनन्तरमन्योऽन्याश्रयदोषो नास्तीति प्रतिपादयन्नाह– नेदं वाचनिकमिति। अन्योऽन्याश्रयदोषो नास्ति। यतो हि – अलिङ्गता असंख्यता। 'अव्ययादाप्सुपः' इति वचनेन नोद्भाव्यते। अपितु स्वभावतोऽलिङ्गताऽसंख्यता शब्देषु भवति। एवं स्वाभाविकेऽलिङ्गासंख्यत्वे सति अव्ययसंज्ञा भवति। न तु अव्ययसंज्ञयाऽलिङ्गासंख्यत्वमुद्भाव्यत इति कृत्वा अन्योऽन्याश्रयदोषो नास्ति। एवमन्योऽन्याश्रयदोषाभावात् अलिङ्गमसंख्यमिति वचनं कर्तव्यमिति सिद्धेऽपि भाष्यकारेण प्रतिपादितम् यदिदं वचनं न कर्तव्यम्। कथमलिङ्गमसंख्यमिति वचनं न कर्तव्यमिति जिज्ञासाशान्त्यर्थमाह–

**मूलग्रन्थपाठः**

**( वा. ) सिद्धं तु पाठात्**

**पाठाद्वा सिद्धमेतत्। कथं पाठः कर्तव्यः। तसिलादयः प्राक् पाशपः। शस्प्रभृतयः प्राक् समासान्तेभ्यः। मान्तः। तसिवती। कृत्वोऽर्थाः। नानाञाविति।**

१. स्वरादिनिपातमव्ययम्, १-१-३७
तद्धितश्चासर्वविभक्तिः ४-१-३८

**व्याख्या**- अन्योऽन्याश्रयदोषाभावेऽपि अलिङ्गमसंख्यमव्ययमिति वचनं न कर्तव्यम्। यतो हि येषां तद्धितप्रत्ययानामव्ययसंज्ञायामावश्यकता वर्तते तेषां समेषां परिगणनात्मकः पाठो भविष्यन्ति। एवं पाठेनैव अव्ययसंज्ञा सिद्धाभवतीति कृत्वा उक्तन्यासः खण्डितो महाभाष्यकारेण। अव्ययसंज्ञायै अभीष्टास्तद्धितप्रत्ययाः के? इति जिज्ञासायामाह-कथं पाठः कर्तव्य इति।

अयं भावः- 'पञ्चम्यास्तसिल्' इत्यारभ्य 'द्वित्र्योश्च धमुञ्' इत्यन्तास्तद्धितप्रत्ययाः अन्ते येषां भविष्यन्ति तेषामव्ययसंज्ञा भविष्यति। तथा च 'बह्वल्पार्थात्.' इत्यारभ्य 'अव्यक्तानुकरणात्' इति डाजन्ताः प्रत्ययाः अव्ययसंज्ञकाः सन्तीत्यभिप्रेत्याह-शस्प्रभृतय इति। अम् आमिति। 'अमु चच्छन्दसि' इत्यम्। किमेत्तिङव्यय इत्याम् च। 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' 'द्वित्रिचतुर्भ्यस्सुच्' 'विभाषा बहोर्धा'। 'तेनैकदिक्' 'तसिश्च' इति तसिः। 'तेन तुल्यं' इति विहितो वतिः। 'विनञ्भ्यां नाना....' इति विहितौ नानाञौ। उक्ततद्धितप्रत्ययेन विशिष्टाः शब्दा एव प्रकृतसूत्रेण अव्ययसंज्ञका भवन्ति।

**मूलग्रन्थपाठः**

**अथवा पुनरस्त्वविभक्तिः शब्दोऽययसंज्ञोभवतीत्येव। ननु चोक्तमविभक्ता-वितरेतराश्रयत्वादप्रसिद्धिरिति। नैष दोषः। इदं तावदयं प्रष्टव्यः। यद्यपि तावद् वैयाकरणा विभक्तिलोपमारभमाणा अविभक्तिकान् शब्दान् प्रयुञ्जते। ये त्वेते वैयाकरणेभ्योऽन्ये मनुष्याः कथं तेऽविभक्तिकान् शब्दान् प्रयुञ्जते इति।**

**व्याख्या**- अविभक्तिरव्ययमिति प्रथमपक्षस्य समर्थने आह- अथवा पुनरस्त्वविभक्तिरिति। अयं भावः - अविभक्तिरव्ययमिति पक्षे सत्यविभक्तित्वे अव्ययसंज्ञा भवति। अव्ययसंज्ञया चाविभक्तित्वमुत्पाद्यते इति कृत्वा यो हि अन्योऽन्याश्रयदोषः पूर्वं प्रदत्तः स इदानीं नास्ति। यतो हि अव्ययसंज्ञया अविभक्तित्वं नोद्भाव्यते। अत एव 'अव्ययादाप्सुपः' इति विभक्तिलोपं ये न जानन्ति तादृशा अपि मनुष्या अविभक्तिकान् शब्दान् प्रयुञ्जते। यदि अव्ययसंज्ञयैव अविभक्तिकानां शब्दानां निष्पत्तिः स्यात् तर्हि विभक्तिलोपमारभमाणा वैयाकरणा एव अविभक्तिकान् शब्दान् प्रयोक्तुं समर्थाः स्युः। वैयाकरणेभ्योऽन्ये मनुष्या न स्युः। किन्तु तेऽपि अविभक्तिकान् शब्दान् प्रयुञ्जते। तेन सिद्धं यत् अविभक्तिकाः शब्दा अव्ययसंज्ञया नोद्भाव्यन्त इति कृत्वा नान्योऽन्याश्रयदोषः।

**मूलग्रन्थपाठः**

**अभिज्ञाश्च पुनर्लौकिका एकत्वादीनामर्थानाम्। आतश्चाभिज्ञाः। अन्येन वस्नेनैके गां क्रीणन्ति। अन्येन द्वावन्येन त्रीन्। अभिज्ञाश्च न च प्रयुञ्जते। तदेवं संदृश्यताम्। अर्थरूपमेवैतदेवञ्जातीयकं येनात्र विभक्तिर्न भवतीति। तच्चाप्येतदेवमनुगम्यमानं दृश्यताम्। किंचिदव्ययं विभक्त्यर्थप्रधानम्। किंचित् क्रियाप्रधानम्। उच्चैर्नीचैरिति विभक्त्यर्थप्रधानम्। हिरुक् पृथगिति क्रियाप्रधानम्। तद्धितश्चापि कश्चिद् विभक्त्यर्थप्रधानः। कश्चित् क्रियाप्रधानः। तत्र यत्रेति विभक्त्यर्थप्रधानः। विना, नानेति क्रियाप्रधानः। न चैतयोरर्थयोर्लिङ्गसंख्याभ्यां योगोऽस्ति।**

**व्याख्या**- ननु अवैयाकरणैः संख्याया अज्ञानादेव तद्वाचकविभक्तिर्न प्रयुज्यत इत्यत आह- अभिज्ञाश्चेति। अयं भावः- इयं वार्ता नास्ति यत् अवैयाकरणा एकत्वादीनर्थान् न जानन्ति। ते सम्यगेव एकत्वादीनर्थान् जानन्ति। यतो हि अन्येन हि वस्नेन = मूल्येन एकां गां क्रीणन्ति। 'वस्नं वस्त्रे धने मूल्ये भृतौ' इति हेमचन्द्रकोशादनेकार्थत्वेनात्र ग्राह्यमर्थमाह कैयटः- वस्नः = मूल्यमिति।

इत्थं स्पष्टं यदवैयाकरणा एकत्वादीनर्थान् सम्यग् जानन्ति। सम्यगवगच्छन्ति। पुनरपि अविभक्तिकान् शब्दान् प्रयुञ्जते। एकत्वाद्यर्थबोधकविभक्तेः प्रयोगं न कुर्वन्तीति भावः। एतेनेदमेव प्रतीयते यत् अव्ययपदार्थस्य स्वरूपमेवैवञ्जातीयकं यत् तत्र विभक्तिर्न दृश्यते। एतदेव स्पष्टतया इत्थं द्रष्टुं शक्यते यत् शब्दशक्तिस्वभावात् किंचिदव्ययं विभक्त्यर्थप्रधानं भवति। किंचित् क्रियाप्रधानं भवति। यथा– उच्चैर्नीचैरिति विभक्त्यत्यर्थप्रधानमस्ति। हिरुक् पृथगिति क्रियाप्रधानमस्ति। उच्चैः = महति। नीचैः – अल्पे। हिरुक्, पृथगिति क्रियाविशेषणम्। यथा– हिरुक् भव, पृथक् भवेति। अत्र पार्थक्यरूपक्रियाया एव प्राधान्यं भवति।

एवमेव तद्धितश्चापि कश्चिद् विभक्त्यर्थप्रधानो भवति। कश्चिच्च क्रियाप्रधानो भवति। यथा – तत्र, यत्रेति विभक्त्यर्थप्रधानः। विना, नानेति क्रियाप्रधानश्चास्ति। इत्थं कर्मत्वादिविभक्त्यर्थस्य क्रियायाश्च लिङ्गसंख्यायाभ्यां सह योगः = सम्बन्धो नास्ति। अर्थात् एतादृशा विभक्तयः क्रियाश्च लिङ्गसंख्यारहिता एव भवन्ति। अत एवाविभक्तिका भवन्ति। एवम् अविभक्तिरव्ययमिति न्यासेऽपि न दोष इति भावः।

### मूलग्रन्थपाठो व्याख्या च

**अथाप्सर्वविभक्तिरित्युच्यते। एवमपि न दोषः। कथम्? इदं चाप्यद्यत्वेऽति बहु क्रियते। एकस्मिन् एकवचनम्, द्वयोर्द्विवचनम्, बहुषु बहुवचनमिति। कथं तर्हि? एकवचनमुत्सर्गतः करिष्यते। तस्य द्विबह्वोरर्थयोर्द्विवचनबहुवचने बाधके भविष्यतः।**

**व्याख्या**– सूत्रस्थेऽसर्वविभक्तिरित्युच्यमानेऽपि न कोऽपि दोषः। अर्थात् विना, नाना इत्यस्यापि असर्वविभक्तित्वमस्ति। कथमिति जिज्ञासाशान्त्यर्थमाह– इदं चापि। अयं भावः– पाणिनिना 'द्व्येकयोर्द्विवचनैकवचने' बहुषु बहुवचनम् (द्वि, एक, बहु, द्विवचन, एकवचन, बहुवचनेत्येवम्,) अधिकं क्रियते। एकत्वविवक्षायामेव एकवचनं भविष्यतीति नास्ति। अर्थात् सूत्रे एकग्रहणं न कर्तव्यमिति लाघवं प्रदर्शयता महाभाष्यकारेण प्रतिपाद्यते यत् पाणिनेरुक्तसूत्रस्य स्थाने 'एकवचनम्' 'द्विबह्वोर्द्विवचनबहुवचने' इति सूत्रं कर्तव्यम्। एकवचनं स्वभावतो भविष्यति। द्विबह्वोरर्थयोस्तु एकवचनं न भविष्यति। विशेषविहितत्वात् तत्र द्विववचनबहुवचने बाधके भविष्यतः। एवं विना, नाना, इत्यत्रापि एकत्वरूपार्थाभावेऽपि एकवचनं सामान्यं भविष्यति। तेन असर्वविभक्तित्वेन 'विना नाना' इत्यनयोरपि अव्ययसंज्ञा भविष्यति।

असर्वविभक्तिरित्यस्य विग्रहं प्रदर्शयन्नाह–

### मूलग्रन्थपाठः

**न चाप्येवं विग्रहः करिष्यते– न सर्वाः असर्वाः। असर्वाः विभक्तयो यस्मादिति। कथं तर्हि? न सर्वा असर्वा। असर्वा विभक्तिरस्मादिति। त्रिकं पुनर्विभक्तिसंज्ञम्।**

**व्याख्या**– यदि असर्वविभक्तिरित्यस्य न सर्वाः विभक्तय उत्पत्तौ निमित्तमस्येति वृत्तिकारोक्तविग्रहः स्वीकृतः स्यात्तदा पुनरपि विना, नाना इत्यस्य अव्ययसंज्ञा न स्यात्। यतो हि नानाञ्प्रत्यययोरुत्पत्तौ न कापि विभक्तिर्निमित्तत्वेन वर्तते। अतस्तयोरव्ययसंज्ञा यथा स्यात् तादृशो विग्रहो महाभाष्यकारेणेदानीं प्रदर्श्यते। इत्येतत्सर्वं मनसि निधायोच्यते न चाप्येवमिति। अयं भावः – असर्वविभक्तिरित्यत्र न सर्वाः असर्वाः, असर्वाः विभक्तयो यस्मात् इति विग्रहो न भविष्यति। परन्तु न सर्वा असर्वा, असर्वा विभक्तिर्यस्मादिति विग्रहो भविष्यति। तथा च एकवचनं, द्विवचनं, बहुवचनमिति वचनत्रयं मिलित्वा विभक्तिर्भवति। एवं विना, नाना, इत्यत्रैकवचनमेव भवतीति कृत्वा न सर्वविभक्तिरपि तु असर्वविभक्तिरेव। तेन अव्ययसंज्ञेति।

**मूलग्रन्थपाठः**

**एवं गते कृत्यपि तुल्यमेतन्मान्तस्य कार्यं ग्रहणं न तत्र।
ततः परे चाभिमता न कार्यास्त्रयः कृदर्था ग्रहणेन योगाः॥१॥
कृत्तद्धितानां ग्रहणं तु कार्यं संख्याविशेषं ह्यभिनिश्चिता ये।
तेषां प्रतिषेधो भवतीति वक्तव्यम्। इह मा भूत्। एको द्वौ बहवः इति।
तस्मात् स्वरादिग्रहणं च कार्यं, कृत्तद्धितानां ग्रहणं च पाठे।**

**व्याख्या**- यदा असर्वा विभक्तिरस्मादिति विग्रहः क्रियते, तदा एवं सति एतावल्लक्षणमस्तु- असर्वविभक्तिरव्ययमिति मनसि निधायाह भाष्ये - एवं गत इति। अयं भावः - असर्वविभक्तिरव्ययमित्येतावदेव सूत्रमस्तु तद्धितग्रहणं मास्तु। एवमेतादृशमव्ययम् कृत्यपि वर्तते इति कृत्वा 'कृन्मेजन्तः' 'क्त्वातोसुन्कसुनः' स्वरादिनिपातमव्ययम् अव्ययीभावश्चेति सूत्रमपि न कर्तव्यं भविष्यति। सर्वत्रैव असर्वविभक्तित्वेनैव अव्ययसंज्ञा सिद्धा भविष्यति, सर्वत्रैव सामान्यैकवचनोत्पत्तेः।

नन्वेवम् एकः द्वौ, बहवः इत्यस्यापि असर्वविभक्तित्वेन अव्ययसंज्ञा स्यादत आह- कृत्तद्धितानां ग्रहणमिति। अर्थात् एकशब्दात् एकवचनमेव,द्विशब्दात् द्विवचनमेव, बहुशब्दात् बहुवचनमेव भवतीति कृत्वा एते संख्याविशेषे अभिनिश्चिताः सन्ति। अस्मात्कारणादसर्व-विभक्तित्वेन अव्ययसंज्ञायाः प्राप्तिर्वर्तते। तन्मा भू दित्येतदर्थं सूत्रे कृत्तद्धितानां ग्रहणं कर्तव्यमेव। एवं कृत्तद्धितग्रहणे सति एकद्विबहुशब्दानां कृत्तद्धितान्तत्वाभावात् न अव्ययसंज्ञा भवति। किन्तु तद्धितग्रहणरूपं तद्धितश्चासर्वविभक्तिरिति सूत्रं कर्तव्यम्। तद्धितग्रहणे सति कृद्विशिष्टमपि 'कृन्मेजन्तः' 'क्त्वातोसुन्कसुनः' इति सूत्रमपि कर्तव्यम्। तथा च एकः द्वौ बहव इत्यत्र अव्ययसंज्ञा मा भूदित्येतदर्थम् अव्ययसंज्ञायाः प्रतिषेधो वक्तव्य इति महाभाष्यकारेणोक्तः। परन्तु प्रतिषेधे शास्त्रबाधापत्तिः स्यात् तन्माभूदतः कृत्तद्धितविशिष्टं सूत्रं कर्तव्यम्। तथा च स्वरादिग्रहणमपि कर्तव्यमिति मनसि निधायाह-तस्मादिति। यदा कृत्तद्धितग्रहणं कृतं भवति, तदा स्वरादिग्रहणमपि कर्तव्यम्। पाठे इति। एवं ज्ञायते यत् येषामव्ययसंज्ञेष्यते, तेषां परिगणनात्मकः पाठः कर्तव्यः। तसिलादयः प्राक् पाशप इत्यादि पूर्वपरिगणितपाठस्य स्वरादीनां पाठे एव समावेशः कर्तव्यः। सूत्रमिदमस्यैव प्रपञ्चभूतमिति भावः।

**मूलग्रन्थपाठो व्याख्या च**

**पाठेनेयमव्ययसंज्ञा कृता, सेह न प्राप्नोति-परमोच्चैः, परमनीचैरिति। तदन्तविधिना भविष्यति। इहापि तर्हि प्राप्नोति। अत्युच्चैः, अत्युच्चैसौ, अत्युच्चैस इति। उपसर्जनस्य नेति प्रतिषेधो भविष्यति। स तर्हि प्रतिषेधो वक्तव्यः। न वक्तव्यः। सर्वनामसंज्ञायां प्रकृतः प्रतिषेध इहानुवर्तिष्यते। स वै तत्र प्रत्याख्यायते। यथा स तत्र प्रत्याख्यायत इहापि तथा शक्यः प्रत्याख्यातुम्। कथं च स तत्र प्रत्याख्यायते?**

**व्याख्या**- 'स्वरादिनिपातमव्ययमिति' सूत्रेण स्वरादिपठितानामेव अव्ययसंज्ञा क्रियते। स्वरादिगणे उच्चैः, नीचैरित्यादेरेव पाठो वर्तते। न तु परमोच्चैः, परमनीचैरित्यस्य। एवं परमोच्चैः परमनीचैरित्यस्य स्वरादिषु पाठाभावात् अव्ययसंज्ञा न स्यात् किन्तु इष्यते। कथमव्ययसंज्ञेति जिज्ञासाशान्त्यर्थमाह- तदन्तविधिनेति। येन विधिस्तदन्तस्येति सूत्रस्य प्रयोजनत्वेन प्रतिपादितं यत् प्रयोजनं सर्वनामाव्ययसंज्ञायामिति। एवमनेन वचनेन स्वराद्यन्तानामपि अव्ययसंज्ञा भवति। तेन परमोच्चैः परमनीचैरित्यस्य स्वराद्यन्तत्वात् अव्ययसंज्ञा भविष्यतीति न दोषः।

नन्वेवमनिष्टोत्पत्तिः स्यादत आह- इहापि तर्हीति। यदि तदन्तविधिना अव्ययसंज्ञा स्यात्तर्हि

स्वराद्यन्तत्वात् अत्युच्चैः, अत्युच्चैसौ, अत्युच्चैसः इत्यत्रापि अव्ययसंज्ञा प्राप्नोतीति भावः। समाधानं दातुमाह–उपर्सजनस्य नेति। अयं भावः – 'संज्ञोपसर्जनीभूतास्तु न' इत्यनेन उपसर्जनस्य = गौणस्य प्रतिषेधो वर्तते। तेन प्रतिषेधो भविष्यति। अर्थात् सर्वादीनि सर्वनामानीत्यत्र 'संज्ञोपसर्जनप्रतिषेधः' इति वचनं कृतमस्ति। तेन सर्वनामसंज्ञाया इव अव्ययसंज्ञाया अपि उपसर्जने प्रतिषेधात् 'अत्युच्चैसौ' इत्यादावव्ययसंज्ञा न भवति। उच्चैरतिक्रान्तः अत्युच्चैः, उच्चैरतिक्रान्तौ अत्युच्चैसौ, उच्चैरतिक्रान्ता अत्युच्चैस इत्यत्र उच्चैश्शब्दार्थस्य प्राधान्यं नास्ति। अपितु अतिक्रान्तार्थस्य प्राधान्यं वर्तते। तत्रैव उच्चैश्शब्दार्थ उपसर्जनीभूतो = गुणीभूतो वर्तते। अत उच्चैश्शब्दार्थस्य उपसर्जनत्वात् = गुणीभूतत्वात् = विशेषणत्वात् 'अत्युच्चैसौ' इत्यादौ अव्ययसंज्ञा न भवति। परमोच्चैरित्यादौ तु तत्पुरुषभेदरूपकर्मधारयसमासेन उत्तरपदार्थस्य प्राधान्यात् उच्चैश्शब्दार्थस्य प्रधानत्वाच्च अव्ययसंज्ञा भवत्येव। एवमव्ययसंज्ञायामपि संज्ञोपर्सनप्रतिषेधो वक्तव्य इत्यनेन गौरवं सूच्यते। एतद्गौरवनिराकरणायोच्यते न वक्तव्य इति। संज्ञोपसर्जनप्रतिषेधः अत्र न वक्तव्यः। सर्वनामसंज्ञायां यो हि कृतः स अत्रापि अनुवर्तिष्यते। एतदनन्तरं प्रतिपाद्यते यत् सर्वनामसंज्ञायां सः प्रतिषेधः अन्वर्थसंज्ञामाश्रित्य प्रत्याख्यातः। एवं प्रतिषेधोऽत्र कर्तव्य एव इति व्यञ्जितः। एतन्निराकर्त्तुमाह– यथा स तत्रेति। येन प्रकारेण सर्वनामसंज्ञायां संज्ञोपसर्जनप्रतिषेधः प्रत्याख्यातस्तेनैव प्रकारेण अत्रापि तस्य प्रतिषेधस्य प्रत्याख्यानं भविष्यतीति भावः। सिद्धान्तपक्षप्रदर्शनाय जिज्ञास्यते – कथं च स तत्रेति। अर्थात् केन प्रकारेण तस्य तत्र प्रत्याख्यानं भवति?

अधुना सिद्धान्तपक्षो व्यवस्थाप्यते।

**मूलग्रन्थपाठः**

**महतीयं संज्ञा क्रियत इति। इयमपि च महती संज्ञा क्रियते। संज्ञा च नाम यतो न लघीयः। कुत एतत्? लघ्वर्थं हि संज्ञाकरणम्। तत्र महत्याः संज्ञायाः करण एतत्प्रयोजनम्–अन्वर्थसंज्ञा यथा विज्ञायेत – न व्येतीत्यव्ययमिति। क्व पुनर्न व्येति? स्त्रीपुन्नपुंसकानि सत्वगुणाः, एकत्वद्वित्वबहुत्वानि च। एतानर्थान् केचिद्वियन्ति केचिन्न वियन्ति। ये न वियन्ति तदव्ययम्।**

**सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।**
**वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्॥१॥**
**तद्धितश्चासर्वविभक्तिः॥३८॥**

**व्याख्या**– 'संज्ञोपसर्जनप्रतिषेधः' इति वचनं सर्वनामसंज्ञाया अन्वर्थत्वमाश्रित्य प्रत्याख्यातम्। एवमव्ययसंज्ञाया अपि अन्वर्थत्वं प्रतिपादयितुमाह–इयमपीति। यतो हि लाघवार्थं संज्ञा क्रियते। तत्र यदि महती संज्ञा स्यात्तर्हि महत्याः संज्ञायाः प्रयोजनं भवति। अन्वर्थसंज्ञा स्यात्तर्हि महत्याः संज्ञायाः प्रयोजनं भवति। अन्वर्थसंज्ञा यथा प्रतीयेत अर्थात् यदि महती क्रियते तर्हि संज्ञापदस्य योऽर्थो भवति स चार्थो यत्र संघटते तत्रैव महती संज्ञा ज्ञातव्या। एवमव्ययसंज्ञा अपि महती संज्ञा अस्ति, टिघुरित्यादिवल्लघ्वी संज्ञा नास्ति। तेन अव्ययसंज्ञाया अर्थो यत्र संघटते, तत्रैव अव्ययसंज्ञा बोध्या। न व्येतीति व्युत्पत्तेः, यो हि कुत्रापि विकृतं न भवति विकारं न प्राप्नोति तदव्ययं भवति। क्व = कुत्र विकृतं न भवतीति जिज्ञासायामाह – स्त्रीपुंन्नपुंसकानीति। स्त्रीपुंन्नपुंसकरूपसत्वगुणैः, एकद्विबहुवचनैश्च केचन शब्दाः विकृता न भवन्ति, केचन शब्दास्तु भवन्ति। ये शब्दाः विकारं न प्राप्नुवन्ति तेऽव्ययसंज्ञका भवन्ति। अव्ययेत्यस्यान्वर्थत्वं यत् न व्येतीति–व्युत्पत्या योऽर्थः प्रतीयते सः श्लोकेन संगृह्णाति–सदृशमिति। त्रिषु लिङ्गेषु त्रिष्वपि वचनेषु सर्वासु विभक्तिषु सदृशं = समानं यो हि भवति विकारं न प्राप्नोति तदव्ययमिति कारिकार्थः। विभक्तिषु = कारकेषु। तत्र कारकेषु यानि साधनप्रधानान्यव्ययानि तेषां शक्त्यन्तरानावेशात् क्रियाप्रधानानां च

शक्तिसम्बन्धाभावात् 'सर्वासु च विभक्तिषु' इत्युक्तम्। 'यन्न व्येतीति'। नानात्वं न गच्छति, सत्वधर्मान्न गृह्णातीत्यर्थः। एवम् परमौच्चैः, परमनीचैरिति विकारं न प्राप्नोति। अतोऽत्राव्ययसंज्ञा भवति। अत्युच्चैः, अत्युच्चैसौ, अत्युच्चैस इति विकारं (विकृतं भवति) प्राप्नुवन्ति। अतोऽत्र अव्ययसंज्ञा न भवतीति भावः।

१. स्वरादिनिपातमव्ययम्, १-१-३७
तद्धितश्चासर्वविभक्तिः ४-१-३८

**बोधप्रश्नः**

४. अलिङ्गमसंख्यमव्ययमिति न्यासे कथमन्योऽन्याश्रयः ?

५. अलिङ्गमसंख्यमव्ययमिति न्यासे समागतस्य अन्योऽन्याश्रयदोषस्य निराकरणं कथं भवति ?

६. हिरुक्भव, पृथक् भवेत्यत्र कस्याः क्रियायाः प्राधान्यम् ?

७. 'विना, नाना' इत्यनयोरव्ययसंज्ञा कथं भविष्यति।

८. असर्वविभक्तिरित्यस्य विग्रहः कथं भवति ?

९. असर्वविभक्तिरव्ययमिति सूत्रन्यासे कृते केषां प्रतिषेधो वक्तव्यः ?

१०. परमोच्चैः, परमनीचैरित्यत्र कथम् अव्ययसंज्ञा भवति।

११. 'अत्युच्चैसौ' इत्यादौ कथम् अव्ययसंज्ञा न भवति।

१२. 'संज्ञोपसर्जनप्रतिषेधः' इति वचनं कथं प्रत्याख्यायते।

### ११.४.५ निष्कर्षः

'विना, नाना' इत्यनयोरव्ययसंज्ञाविधानाय 'अविभक्तिनिमित्तस्योपसंख्यानं कर्तव्यमिति' वचनं कर्तव्यमिति प्रतिपादितम्। पक्षेऽस्मिन् समागतोऽन्याश्रयदोषः, 'स्वाभाविकेऽविभक्तित्वेऽव्ययसंज्ञा विधीयते। न तु अव्ययसंज्ञयाऽविभक्तित्वमुद्भाव्यते' इति रीत्या निराकृतः।

तत्र यत्र, ततः, यतः, इत्यस्य अव्ययसंज्ञाविधानाय 'त्रलादीनां चोपसंख्यानमिति' वार्तिकं लिखितम्।

अनन्तर'मलिङ्गमसंख्यमिति न्यासोऽपि प्रदर्शितः। पक्षेऽस्मिन् अन्योऽन्याश्रयदोषमुद्भाव्य स्वाभाविकमलिङ्गत्वमसंख्यत्वं प्रतिपाद्य निराकृतोऽन्योऽन्याश्रयदोषः। तथा च 'सिद्धं तु पाठात्' इत्युक्त्वा अलिङ्गमसंख्यमिति न्यासः प्रत्याख्यातः। अर्थात् अव्ययसंज्ञायां ये अभीप्सितास्तद्धितास्तेषां परिगणनात्मकः पाठः स्वीकृतः।

एतदनन्तरमेकवचनमुत्सर्गतो भवतीति व्यवस्थाप्य असर्वविभक्तिरित्यपि स्वीकृतः। तथा च न सर्वा असर्वा। असर्वा विभक्तिरस्मादिति असर्वविभक्तिरित्यस्य विग्रहः स्वीकृतः। एकः, द्वौ बहव इत्यत्र अव्ययसंज्ञा मा भूदित्येतदर्थम् असर्वविभक्तिरव्ययमिति न्यासो न कर्तव्य इति प्रतिपादितः।

अन्ते तदन्तविधिना परमोच्चैः, परमनीचैरित्यत्र अव्ययसंज्ञा भवतीति व्यवस्थापितः। तथा च न व्येतीति अव्ययमिति व्युत्पत्तिमाश्रित्य (अन्वर्थसंज्ञात्वमाश्रित्य) अत्युच्चैः, अत्युच्चैसौ, अत्युच्चैस इत्यत्र अव्ययसंज्ञा न भवतीति सिद्धान्तितम्।

## ११.५ सारांशः

एकादशेऽस्मिन् पाठे भवद्भिः 'स्वरादिनिपातमव्ययम्' इति सूत्रं, 'तद्धितश्चासर्वविभक्तिः' इति

सूत्रं च पठितम्। तत्र स्वरादिनिपातमव्ययमिति सूत्रे चादितः पृथक् स्वरादीनां ग्रहणं कर्तव्यमिति व्यवस्थापितम्। यतो हि चादीनामसत्ववचनानामेव निपातसंज्ञया अव्ययसंज्ञेष्यते। किन्तु स्वरादीनां सत्ववचनानामसत्ववचनानामव्ययसंज्ञा भवति। स्वरादीनामपि चादिगणे एव पाठे सति न स्यादिति।

एतदनन्तरं प्रतिपादितं यत् निपातसंज्ञयैव कार्यं न भविष्यति। अर्थात् निपातसंज्ञातिरिक्त-मव्ययसंज्ञा अपि कर्तव्या। अन्यथा 'निपात एकाजनाङ्' इत्यनेन उक्ता प्रगृह्यसंज्ञा स्वरादीना-मप्येकाचां स्यात्। तथा सति क्वेव इति रूपं न स्यात्। अतः अव्ययसंज्ञा अपि वक्तव्या। एतदनन्तरमव्ययसंज्ञैवास्तु इति प्रश्नमुपस्थाप्य निपातसंज्ञा अपि पृथग् वक्तव्येति व्यवस्थापिता। तथा चोक्तम्- वक्ष्याम्येतत्-अव्यये नञ्कुनिपातानामिति। तद् गरीयसा न्यासेन परिगणनं कर्तव्यं स्यात्। तस्मात् पृथग्ग्रहणं कर्तव्यम्। उभे च संज्ञे वक्तव्ये।

तथा च तद्धितश्चासर्वविभक्तिरिति सूत्रे 'विना, नाना' इत्यनयोरव्ययसंज्ञा स्यादित्येतदर्थमविभक्तिनिमित्तस्योपसंख्यानं कर्तव्यमिति प्रतिपादितम्। पक्षेऽस्मिन् सत्यविभक्तित्वे अव्ययसंज्ञा भवति। अव्ययसंज्ञया चाविभक्तित्वमुत्पाद्यते इति रीत्याऽन्योऽन्याश्रयदोषं प्रदर्श्य स्वाभाविकेऽविभक्तित्वेऽव्ययसंज्ञा भवतीत्युक्त्वा निराकृतोऽन्योऽन्याश्रयदोषः।

तथा च तत्र, यत्र, ततः, यत इत्यत्र अव्ययसंज्ञाविधानाय त्रलादीनां चोपसंख्यानमिति वार्तिकं लिखितम्।

एतदनन्तरम् 'अलिङ्गमसंख्यमव्ययम्' इति न्यासः प्रदर्शितः। अस्मिन्पक्षेऽपि सत्यलिङ्गासंख्यत्वे अव्ययसंज्ञा भवति। अव्ययसंज्ञया चालिङ्गासंख्यत्वं सुपो लुका जायत इति कृत्वाऽन्योऽन्याश्रयदोषः प्रदत्तः। स च दोषः निराकृतः सत्यलिङ्गासंख्यत्वेऽव्ययसंज्ञा भवति, परन्तु अव्ययसंज्ञयाऽलिङ्गासंख्यत्वं नोत्पाद्यते इत्युक्त्वा। एवमन्योऽन्याश्रयदोषाभावेऽपि 'अलिङ्गमसंख्यमव्ययम्' इति न्यासात्मकं सूत्रं न कर्तव्यम्। 'सिद्धं तु पाठात्' इत्युक्त्वा महाभाष्यकारेण प्रत्याख्यातः स न्यासः। तत्र तेनोक्तं यत् पाठात् सिद्धमेतत्। अर्थात् येषां तद्धितप्रत्ययानामव्यसंज्ञायामपेक्षाऽस्ति। तेषां पाठं करिष्यामि। ते च तद्धितप्रत्ययाः - 'तसिलादयः प्राक्पाशपः। शस्प्रभृतयः प्राक् समासान्तेभ्यः। मान्तः। तसवती। कृत्वोऽर्थाः। नानाञौ' इति वर्तन्ते।

अन्तेऽसर्वविभक्तिरिति पक्षेऽपि दोषो नास्तीति तेन प्रतिपादितम् उक्तं हि तत्र यत् एकवचनमुत्सर्गतो भवति। तेन 'विना नाना' इत्यत्र संख्याया अभावेऽपि एकवचनं भविष्यति। एवमसर्वविभक्तित्वेनैव उक्तोभयोरव्ययसंज्ञा भविष्यति। एकः, द्वौ बहव इत्यत्र अव्ययसंज्ञा मा भूदित्येतदर्थं स्वरादिग्रहणमपि कार्यम्। पाठे कृत्तद्धितानामपि ग्रहणं कर्तव्यमिति सिद्धान्तितम्।

तथा चान्ते तदन्तविधिना परमोच्चैः परमनीचैरित्यत्र अव्ययसंज्ञा भवतीति लिखितम्। परन्तु अत्युच्चैः, अत्युच्चैसौ, अत्युच्चैस इत्यत्र अव्ययसंज्ञा न भवति। यतो हि अत्र उच्चैश्शब्दार्थस्य प्राधान्यं नास्ति। तथा च अव्ययसंज्ञाया अन्वर्थत्वमाश्रित्य 'संज्ञोपसर्जनप्रतिषेधः' इति वचनं महाभाष्यकारेण प्रत्याख्यातम्। एवं स्त्रीपुंनपुंसकानि एकत्वद्वित्वबहुत्वानि च ये न वियन्ति तदव्ययमित्यर्थो व्यवस्थापित इति च श्लोके सङ्कलितः। तथा हि -

**सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।**
**वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्॥**

## ११.६ शब्दावली

१. सत्ववचनानाम् - द्रव्यवाचकानाम् = लिङ्गसंख्याऽन्वि-तानामित्यर्थः।

| | | | |
|---|---|---|---|
| २. | गरीयसा | – | गरिष्ठेन = दीर्घेण |
| ३. | असर्वविभक्तिः | – | न सर्वा असर्वा। असर्वा विभक्तिरस्मादिति। यस्मात् वचनत्रयात्मिका विभक्तिर्नोत्पद्यत इति भावः। |
| ४. | अविभक्तिनिमित्तस्य | – | न विभक्तिरविभक्तिः। अविभक्तिर्निमित्तं यस्य तस्य अविभक्तिनिमित्तस्येति। येषामुत्पत्तौ कापि विभक्तिर्निमित्तत्वेन नाश्रीयते। तस्य। नानाञ् प्रत्ययस्येत्यर्थः प्रकृतस्थले। |
| ५. | इतरेतराश्रयः | – | अन्योऽन्याश्रयः। अयं च दोषः परस्परापेक्षत्वेन भवति। |
| ६. | वैयाकरणेभ्योऽन्ये मनुष्याः | – | अवैयाकरणा इत्यर्थः। |
| ७. | अभिज्ञाः | – | विज्ञाः = लोकचतुराः = निपुणा इत्यर्थः। |
| ८. | आतश्च : | – | अस्मात् कारणादपि |
| ९. | वस्नम् | – | मूल्यम्। |
| १०. | विभक्त्यर्थप्रधानः | – | विभक्त्यर्थः प्रधानो यस्य स विभक्त्यर्थप्रधानः। उच्चैः नीचैश्शब्द इत्यर्थः। |
| ११. | क्रियाप्रधानः | – | क्रिया प्रधाना यस्य। |
| १२. | अभिनिश्चिताः | – | प्रतिनियताः। एकः द्वौ, बहव इति एकत्वद्वित्वबहुत्वेऽर्थे प्रतिनियताः सन्ति। |
| १३. | उपसर्जनस्य नेति प्रतिषेधः | – | 'संज्ञोपसर्जनप्रतिषेधः' इति वचनेन प्रतिषेध इत्यर्थः। |
| १४. | न व्येतीति | – | नानात्वं न गच्छति, सत्वधर्मान्न गृह्णातीत्यर्थः। विकारं न प्राप्नोति, किन्तु सदृशम्, एकप्रकारमेव भवतीति भावः। |

१. स्वरादिनिपातमव्ययम्, १-१-३७
तद्धितश्चासर्वविभक्तिः ४-१-३८

## ११.७ सन्दर्भग्रन्थः

पातञ्जलमहाभाष्यम्।

## ११.८ सहायकग्रन्थः

१. सिद्धान्तकौमुदी
२. प्रौढमनोरमा
३. काशिका
४. लघुशब्देन्दुशेखरः

५. प्रदीपोद्योतटीका ६. छायाटीका

## ११.९ बोधप्रश्नोत्तराणि

१. चादीनाम् असत्ववचनानामेव निपातसंज्ञा, तेषामेवाव्ययसंज्ञा च भवति। स्वरादीनां च सत्ववचनानामसत्ववचनानां च अव्ययसंज्ञा इष्यते। यदि स्वरादीनां चादिगणे एव पाठः स्यात्तदा असत्ववचनानामेव स्वरादीनाम् अव्ययसंज्ञा स्यात् सत्ववचनानाञ्च न स्यात्। उभयोरव्ययसंज्ञा स्यादित्येतदर्थं स्वरादीनां चादितः पृथग्ग्रहणं कृतम्।

२. यदि स्वरादीनामपि निपातसंज्ञा स्यात्तर्हि 'निपात एकाजनाङ्' इति सूत्रेण उक्ता प्रगृह्यसंज्ञा स्वरादीनामप्येकाचां स्यात्। तथा सति क्व + इव- क्वेव इतीष्यते, तन्न स्यादित्येतदर्थम् अव्ययसंज्ञापि पृथक् कर्तव्या।

३. 'अव्यये नञ्कुनिपातानामिति स्वरविधायकं वार्तिकं वक्ष्यते। यदि निपातसंज्ञा न स्यात् तर्हि चादीनां प्रादीनां च पृथक् पाठः कर्तव्यो भवतीति गौरवम्। मन्मा भूदित्येतदर्थं निपातसंज्ञाऽपि पृथक् कर्तव्या।'

४. अलिङ्गमसंख्यमव्ययमिति न्यासेन लिङ्गसंख्यारहितशब्दमुद्दिश्य अव्ययसंज्ञा विधीयते। अव्ययसंज्ञया च 'अव्ययादाप्सुपः' इति सत्रेण सुपो लुकि सति अलिङ्गासंख्यत्वमुद्भाव्यते। इत्थमन्योऽन्याश्रयदोषो भवति।

५. 'अलिङ्गम्...' इति न्यासेऽपि अन्योऽन्याश्रयदोषो नास्ति। यतो हि- अलिङ्गता असंख्यता 'अव्ययदाप्सुपः' इति वचनेन नोद्भाव्यते। अपितु स्वभावतोऽलिङ्गताऽसंख्यता शब्देषु भवति। एवं स्वाभाविकेऽलिङ्गासंख्यत्वे सति अव्ययसंज्ञा भवति। न तु अव्ययसंज्ञयाऽलिङ्गासंख्यत्वमुद्भाव्यत इति कृत्वा अन्योऽन्याश्रयदोषो नास्ति।

६. हिरुक् भव, पृथक् भवेत्यत्र पार्थक्यरूपक्रियायाः प्राधान्यं भवति।

७. एकवचनमुत्सर्गतो भविष्यतीति सिद्धान्तः। तेन विना, नाना इत्यत्र एकत्वरूपार्थाभावेऽपि सामान्यमेकवचनं भविष्यति। एवमसर्वविभक्तित्वेन 'विना नाना' इत्यनयोरपि अव्ययसंज्ञा भविष्यति।

८. न सर्वा असर्वा। असर्वा विभक्तिरस्मादिति असर्वविभक्तिरित्यस्य विग्रहो भवति।

९. असर्वविभक्तिरव्ययमिति सूत्रन्यासे अपि एकः द्वौ बहवः इत्यत्र अव्ययसंज्ञा प्राप्नोति। तन्मा भूदित्येतदर्थमव्ययसंज्ञायाः प्रतिषेधो वक्तव्यः।

१०. येन विधिस्तदन्तस्येति सूत्रस्य प्रयोजनत्वेन प्रतिपादितं यत् 'प्रयोजनं सर्वनामाव्ययसंज्ञायामिति'। एवमनेन वचनेन स्वराद्यन्तानामपि अव्ययसंज्ञा भवति। तेन परमोच्चैः, परमनीचैरित्यस्य स्वराद्यन्तत्वात् अव्ययसंज्ञा भविष्यति।

११. 'अत्युच्चैसौ' इत्यादौ उच्चैश्शब्दार्थस्य उपसर्जनत्वात्, विकृतत्वात्, न व्येतीति व्युत्पत्या अविकृतस्यैव अव्ययसंज्ञाविधानाच्च अव्ययसंज्ञा न भवति।

१२. सर्वनामाव्ययसंज्ञयोरन्वर्थसंज्ञामाश्रित्य 'संज्ञोपसर्जनप्रतिषेधः' इति वचनं प्रत्याख्यातम्।

## ११.१० अभ्यासप्रश्नाः

१.	किमर्थं पृथग्ग्रहणं स्वरादीनां क्रियते न चादिष्वेव पठ्येरन् ?

२.	अथ किमर्थमुभे संज्ञे क्रियेते ? न निपातसंज्ञैव स्यात्।

३.	अविभक्तिनिमित्तस्योपसंख्यानं कथं कर्तव्यम् ?

४.	त्रलादीनां चोपसंख्यानमित्यस्योदाहरणं लिखत।

५.	असर्वविभक्तिरित्यस्य कथं विग्रहः कर्तव्यः ?

६.	पाठेन अव्ययसंज्ञा कृता सा कुत्र न प्राप्नोति ?

७.	परमोच्चैः, परमनीचैरित्यत्र कथम् अव्ययसंज्ञा भवति।

१. स्वरादिनिपातमव्ययम्, १-१-३७
तद्धितश्चासर्वविभक्तिः ४-१-३८

**व्याख्यायताम्**

१.	'स्वरादिनिपातमव्ययमिति सूत्रम्'।

२.	'अविभक्तावितरेतराश्रयत्वादप्रसिद्धिः'।

३.	'अलिङ्गमसंख्यमिति वा'।

४.	'सिद्धं तु पाठात्'।

५.	असर्वविभक्तिरिति पक्षः समर्थनीयः।

६.	अत्युच्चैः, अत्युच्चैसौ, अत्युच्चैस इत्यत्र अव्ययसंज्ञाया अभावः प्रतिपादनीयः।

**निबन्धात्मकमुत्तरं लिखत**

१.	'तद्धितश्चासर्वविभक्तिः' इति सूत्रं यथाभाष्यं व्याख्येयम्।



## द्वादशः पाठः [कृन्मेजन्तः (१-१-३८) अव्ययीभावश्च (१-१-३९)]

**न्नद्रल्न्संरचना**

१२.१ प्रस्तावना
१२.२ उद्देश्यम्
१२.३ कृन्मेजन्तः (१-१-३८)
 १२.३.१ सूत्रविमर्शः
 १२.३.२ सूत्रार्थसम्पादनविचारः
 मूलग्रन्थपाठो व्याख्या च
 (कथमिदं विज्ञायते कृद्यो ... यदयं प्रशाशब्दं स्वरादिषु पठति)
 बोधप्रश्नाः
 १२.३.३ सन्निपातपरिभाषानिरूपणाधिकरणम्
 १२.३.४ सन्निपातपरिभाषायाः प्रयोजनविचारः
 १२.३.५ सन्निपातपरिभाषासत्त्वे दोषाः सिद्धान्तपक्षश्च
 मूलग्रन्थपाठः व्याख्या च
 (कृन्मेजन्तश्चानिकारोकार ... प्रतिविधेयं च दोषेषु)
 बोधप्रश्नः
 १२.३.६ निष्कर्षः
१२.४ अव्ययीभावश्च (१-१-४१)
 १२.४.१ सोदाहरणं सूत्रार्थसम्पादनक्रमः
 १२.४.२ अव्ययीभावस्य अव्ययत्वे प्रयोजनम्
 ➢ परिगणनम्, उदाहरणमात्रं वा
 ➢ परिगणनाभावे दोषाः
 ➢ समाधानानि
 ➢ सूत्रप्रत्याख्यानं च
 मूलग्रन्थपाठः व्याख्या च
 (अव्ययी भावस्य ... नाव्ययादव्ययी भावाञ्च ति)
 बोधप्रश्नः
 १२.४.३ निष्कर्षः
१२.५ सारांशः
१२.६ शब्दावली
१२.७ सन्दर्भग्रन्थः
१२.८ सहायकग्रन्थः
१२.९ बोधप्रश्नोत्तराणि
१२.१० अभ्यासप्रश्नाः

### १२.१ प्रस्तावना

संस्कृतभाषायां विद्यमानेषु पदेषु कानिचन अव्ययसंज्ञकानि सन्ति। तानि पाणिनीय–व्याकरणे सुबन्तत्वेन परिगणितानि। परन्तु तेभ्यः उत्पन्नः 'सुप्' प्रत्ययः न श्रूयते। 'अव्ययादाप्सुपः' इति सूत्रेण लुप्यते। ततः 'सुपो लोपेऽपि' 'प्रत्यलोपे प्रत्ययलक्षणम्' इति सूत्रेण सुप्प्रत्ययमाश्रित्य पदसंज्ञा भवति। तत्र तत्र केषां केषां शब्दानाम् अव्ययसंज्ञा भवति ? इत्यंशः 'स्वरादिनिपातमव्ययम्' १.१.३९ 'अव्ययीभावश्च' १.१४० इति पञ्चभिः सूत्रैः विवृतः पाणिनिना। एवं स्थिते, एतावत्पर्यन्तं पूर्वपाठेषु 'स्वरादि...' इत्यादिसूत्रत्रयेण केषामव्ययसंज्ञा भवति ? अव्ययेभ्यः कथं सुप् उत्पद्यते ?

कीदृशः = केवलम् एकवचनात्मको वा वचनत्रयात्मकोपि वा सुप् उत्पद्यते? इत्याद्यंशान् पूर्वपाठेषु भवान् ज्ञातवान्। इतः परं भवान् अस्मिन् पाठे 'कृन्मेजन्तः' अव्ययीभावश्चेति अव्ययसंज्ञाविधायकसूत्रद्वयस्य विषये पठिष्यन्ति। कृन्मेजन्तः इत्यस्य अर्थः कृद्यो मान्त एजन्तश्चेति वर्तते अथवा कृदन्तं यन्मान्तमेजन्तश्चेति विविच्य सिद्धान्तावगमनं करणीयं भवेत्। अनिकारोकारप्रकृतेरव्ययसंज्ञाया प्रयोजनम्, अनन्यप्रकृतिः कृत् अव्ययम् इत्यादिविषयाणां पूर्वपक्षत्वेनोपस्थापनं सन्निपातपरिभाषया च निराकरणं तेषां तेषां कथं भवतीति विचारितो भविष्यति। सन्निपातपरिभाषाङ्गीकारे के दोषाः, परिभाषायाः प्रयोजनानि कानि इत्यादिविषयाणां विवेचनमत्र पाठे भविष्यति।

इतः प्राक् भवान् एकपदरूपेषु 'स्वर्' प्रभृतीनां, तद्धितान्तेषु 'यथा' प्रभृतीनां, कृदन्तेषु 'स्मारम्' प्रभृतीनां चअव्ययसंज्ञां ज्ञातवान्। इदानीं ''अव्ययीभावश्च'' इति सूत्रार्थज्ञानेन समासात्मकपदेषु केषां अव्ययसंज्ञा भवति इति ज्ञातुं प्रभवति भवान्।

किञ्च एतत्सूत्रार्थज्ञानेन ''अव्ययादाप्सुपः'' 'अतः कृ-कमि-कंस-कुंभ-पात्र-कुशाकर्णीष्वनव्ययस्य''नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः' इति सूत्रस्थाव्ययपदस्य अर्थं तद्द्वारा तत्तत्सूत्रार्थं ज्ञातुं च भवान् प्रभवति।

## १२.२ उद्देश्यम्

**एतेन पाठेन भवान्–**

- 'अव्ययादाप्सुपः' अतः कृ-कृमि-कंस-कुंभ-पात्र-कुशाकर्णीष्वनव्ययस्य' इति सूत्रस्थाव्ययपदस्य अर्थं ज्ञातुं तद्द्वारा तत्तत्सूत्रार्थं ज्ञातुं च प्रभविष्यति।
- द्वेधा कृन्मेजन्तः इति सूत्रस्य अर्थः संभवतीति, अर्थद्वयेपि लक्ष्यासिद्धिदोषो नास्तीति च ज्ञास्यति।
- आधये, चिकीर्षवे, कुम्भकारेभ्यः इत्यादौ अस्य सूत्रस्य प्राप्ता अतिव्याप्तिः त्रेधा वारयितुं शक्यते इति तत्र ''सन्निपात परिभाषाश्रयेण अतिव्याप्तिवारणमेव समुचितम् इति च ज्ञास्यति।
- प्रसङ्गात् सन्निपातपरिभाषायाः अर्थं, तत्प्रयोजनानि तत्र तत्राश्रयणे प्रसक्तान् दोषान् तद्वारणरीतिं च ज्ञास्यति।
- अन्ततः सन्निपातपरिभाषायाः अवश्यकर्तव्यताविषये ज्ञास्यति।
- अव्ययीभावसमासस्य अव्ययसंज्ञाप्रयोजनविषये ज्ञास्यति।

## १२.३ कृन्मेजन्तः (१.१.३८)

### १२.३.१ सूत्रविमर्शः

अव्ययसंज्ञाविधायकमिदं सूत्रम्। कृत् मेजन्तः इति पदच्छेदः। अन्तपदस्य म्-एच्पदाभ्यां द्वाभ्यामपि सम्बन्धो भवति। तथा च मान्तः एजन्तः इति च तस्य अर्थः। मेजन्तः इति 'कृत्' इत्यस्य विशेषणम्। 'कृत्' इत्यस्य प्रत्ययतया 'प्रत्ययग्रहणे यस्मात् सः विहितः तदादेस्तदन्तस्य ग्रहणम्' इति परिभाषया कृदन्तम् इति अर्थः लभ्यते। 'शब्दस्वरूपम्' इत्यध्याह्रियते। धातोः विहितानां तिङ्भिन्नप्रत्ययानां 'कृत्' इति संज्ञा। म् च एच्च = मेचौ, मेचौ अन्तौ यस्य सः मेजन्तः, अयं द्वन्द्वगर्भबहुव्रीहिः। अत्र एच् इति प्रत्याहारः ए, ओ, ऐ, औ वर्णानां बोधकः। 'स्वरादिनिपातमव्ययम्' इति सूत्रात् 'अव्ययम्' इति पदम् अनुवर्तते।

सूत्रार्थः = मान्तः एजन्तश्च यः कृत्, तदन्तं शब्दस्वरूपम् अव्ययसंज्ञं स्यात् इति सूत्रार्थः।

उदाहरणम् = स्मारं स्मारम् (लिखति), जीवसे इत्यादीनि उदाहरणानि। स्मृ धातोः णमुल् = (अम्) प्रत्यये स्मारं स्मारम् इति भवति। अत्र णमुल् कृत् प्रत्ययः मान्तश्च। अतः तदन्तस्य स्मारं स्मारम् इत्यस्य अव्ययसंज्ञा।

जीवधातोः च्छन्दसि 'से' प्रत्यये जीवसे इति भवति। अत्र 'से', कृत् एजन्तश्च अतः 'जीवसे', इत्यादेः प्रकृतसूत्रेण अव्ययसंज्ञा भवति। ततः परस्य 'सु' प्रत्ययस्य 'अव्ययादाप्सुपः' इति सूत्रेण लुक् भवति।

### १२.३.२ सूत्रार्थसम्पादनविचारः

कृन्मेजन्तः इत्यत्र कृद् यो मान्तः अथवा कृदन्तं यन्मान्तमिति कीदृशः अर्थः क्रियते इति प्रश्नो भवति। प्रथमपक्षे कारयाञ्चकारेत्यादौ 'कारयाम्' इत्यस्य अव्ययसंज्ञा न प्राप्नोति। यदि कृता तदन्तविधिं कृत्वा- कृदन्तं यन्मान्तमिति अर्थः क्रियते तदा प्रतामौ प्रतामः इत्यादौ क्विपः प्रत्ययलक्षणेन प्रताम् इत्यस्य कृदन्तमान्तत्वाद् अव्ययसंज्ञा प्राप्नोति। कृतायामव्ययसंज्ञायाम् 'अव्ययादाप्सुपः' इति सुपो लुक् स्यादित्याक्षेपो जायते।

अत्र समाधीयते- प्रथमपक्षस्वीकारे 'कारयाम्' इत्यस्याव्ययसंज्ञायाम-सत्यामपि 'आमः' इति सूत्रे लिग्रहणनिवर्तनात् प्रत्ययमात्रस्य लुग्विधानात् 'कृञ्चानुप्रयुज्यते लिटि' इत्यनुप्रयोगो निष्पद्यते एव। अतो न दोषः।

यदि कृदन्तं यन्मान्तमिति द्वितीयपक्षः स्वीक्रियते तदा प्रतामौ प्रतामः इत्यादिषु यः दोष उक्तः सः दोषः न स्यात्। यतो हि स्वरादिषु प्रशान् शब्दस्य पाठस्य सामर्थ्यात् आचार्यः ज्ञापयति- प्रत्ययलक्षणेन अव्ययसंज्ञा न भवतीति। तेन प्रताम् इत्यस्य कृदन्तत्वाभावज्ञाने न भवेत् सुपो लुक्।

### मूलग्रन्थपाठो व्याख्या च

**कथमिदं विज्ञायते कृद् यो मान्त इति। आहोस्वित् कृदन्तं यन्मान्तमिति। किं चातः। यदि विज्ञायते कृद् यो मान्त इति। कारयांचकार हारयांचकार इत्यत्र न प्राप्नोति। अथ विज्ञायते कृदन्तं यन्मान्तमिति प्रतामौ प्रतामः अत्रापि प्राप्नोति। यथेच्छसि तथास्तु॥**

**व्याख्या**- कृत् यो मान्तः एजन्तश्च इत्यर्थस्वीकारे कारयाञ्चकार हारयाञ्चकार (कारि-आम्, लिट्-कृ-लिट् तिपो णल्=अ) (हारि-आम्, लिट् कृ=लिट्-णल् = अ) इत्यादौ कारयाम् इत्यादेः अव्ययसंज्ञा न स्यात्, 'आमः' मान्तत्वेऽपि कृत्संज्ञाभावात्। ततश्च इष्टः सुब्लुक् न स्यात् इति दोषः। एवं कृदन्तं यत् मान्तम् इत्याद्यर्थस्वीकारे प्रताम् शब्दात् औ-प्रत्यये प्रताम्- औ- इत्यत्र, जस् = अस् प्रत्यये प्रताम् - अस् - इत्यत्र च प्रताम् शब्दस्य श्रुत्या मान्तत्वात् प्रत्ययलक्षणेन च कृदन्तवात् अव्ययसंज्ञा प्राप्नोति। ततश्च, ततः परस्य सुपः अनिष्टः लुक् प्राप्नोति। एवं उभयथापि दोषसम्भवात् कीदृशः अर्थः स्वीकार्यः? इत्यभिप्रायेण जिज्ञासुः एकदेशी पृच्छति- कथमिदं विज्ञायते... कृद् यो मान्त इति। आहोस्वित् कृदन्तं यन्मान्तमिति। सिद्धान्ती अर्थद्वयगतं फलभेदं प्रश्नद्वारा जिज्ञासामुखादेव दर्शयति 'किं चातः? यदि विज्ञायते कृद् यो मान्त इति। कारयांचकार हारयांचकार इत्यत्र न प्राप्नोति। अथ विज्ञायते... कृदन्तं यन्मान्तमिति प्रतामौ प्रतामः अत्रापि प्राप्नोति' इति ग्रन्थेन अधुना सिद्धान्ती समाधत्ते यथेच्छसि तथास्तु इति। अर्थद्वयेऽपि प्राप्तः स स दोषः वारयितुं शक्यते। अतः यः कोऽप्यर्थः स्वीकर्तुं शक्यते इति तस्याशयः।

### मूलग्रन्थपाठः



**अस्तु तावत् कृद् यो मान्त इति।**

[कृन्मेजन्तः (१-१-३८)
अव्ययीभावश्च (१-१-३९)]

**कथं कारयाञ्चकार हारयाञ्चकार इति। किं पुनरत्राव्ययसंज्ञया प्रार्थ्यते? अव्ययादिति लुग् यथा स्यादिति। मा भूदेवम्। आमः इत्येवं भविष्यति। न सिध्यति। लिग्रहणं तत्रानुवर्तते। लिग्रहणं तत्र निवर्तिष्यते। यदि निवर्तते प्रत्ययमात्रस्य लुक् प्राप्नोति। इष्यते च प्रत्ययमात्रस्य। आतश्चेष्यते। एवं ह्याह-कृञ्चानुप्रयुज्यते लिटीति। यदि च प्रत्ययमात्रस्य लुग् भवति तत एतदुपपन्नं भवति।**

**व्याख्या**- प्रथमपक्षे दोषोद्धारं करोति- 'अस्तु तावत्... एतदुपपन्नं भवति' इति ग्रन्थेन।

अस्यायमाशयः कृत् यो मान्तः एजन्तश्च इत्यर्थस्वीकारे कारयाञ्चकार इत्यादौ अव्ययसंज्ञाभावेऽपि अव्ययादाप्सुपः इति सुपः लुगप्रवृत्तावपि ''अव्ययादाप्सुपः'' इति सुपः लुगभावेऽपि ''आमः'' इति सुपः लुग् भवत्येव। न च शङ्कनीयम् ''आमः'' इत्यत्र ''मन्त्रे घसह्वरणशवृदहाद्वृकृगमिजनिभ्यो लेः '' इति पूर्वसूत्रात् लेः इत्यनुवर्तते। ततश्च कारयाञ्चकार इत्यादौ लिट एव लुग् स्यात् न तु सुपः इति, यतः पूर्वसूत्रात् लेः इति नानुवर्तते। अतः आमन्तात् परस्य सर्वस्यापि प्रत्ययस्य ''आमः'' इति सूत्रेण लुग् भवत्येव इति न दोषः।

अत एव कारयाम् इत्यादेः यदि प्रकर्षविवक्षायां तरबादिः प्रत्ययः प्रवर्तते तस्यापि अनेन लुग् भवत्येव। अन्यथा कारयांतरचकार इत्याद्यनिष्टरूपं स्यात्।''आमः'' इत्यत्र लेः इति नानुवर्तते इत्यत्र कृञ्चानुप्रयुज्यते लिटि इति सूत्रे अनुप्रयुज्यते इत्यत्र अनुपदं प्रमाणम्। तच्च आमन्तधातोः अनुप्रयोगस्य च व्यवधानवारणार्थं कृतम्। यदि तरबादिः मध्ये स्यात् तदा अनुपदं व्यर्थमेव स्यात्। अतः एतत् व्यर्थीभूय ज्ञापयति ''आम'' इति सूत्रम् आमन्तात् परस्य सुपोऽपि लुग् भवतीति। अतः 'कृत् यो मान्तः एजन्तश्च' इत्यर्थः निर्दुष्ट एव।

**मूलग्रन्थपाठः**

**अथवा पुनरस्तु कृदन्तं यन्मान्तमिति। कथं प्रतामौ प्रतामः इति। आचार्य-प्रवृत्तिर्ज्ञापयति न प्रत्ययलक्षणेनाव्ययसंज्ञा भवतीति। यदयं प्रशान् शब्दं स्वरादिषु पठति।**

**व्याख्या**- स्वरादिगणे अव्ययसंज्ञार्थं प्रशान्शब्दस्य पाठेन ज्ञापयति 'प्रत्ययलक्षणेन कृदन्तत्वमाश्रित्य अव्ययसंज्ञा न भवतीति। प्रताम् - औ- इत्यत्र, प्रताम्-अस् इत्यत्र च प्रताम् शब्दस्य श्रुत्या मान्तत्वात् प्रत्ययलक्षणेन च कृदन्तत्वात् अव्ययसंज्ञा प्राप्नोतीति दोषो न भवति।

यदि प्रत्ययलक्षणेन कृदन्तत्वात् अव्ययसंज्ञा स्यात् तदा-प्रपूर्वकशमु-धातोः क्विप्प्रत्यये, तस्य सर्वस्यापि लोपे धातोः उपधादीर्घे धातुमकारस्य ''मो नो धातोः'' इति सूत्रेण नकारादेशे सुपि निष्पन्नस्य प्रशान् शब्दस्य श्रुत्या मान्तत्वात् प्रत्ययलक्षणेन च कृदन्तत्वात् अव्ययसंज्ञा ''कृन्मेजन्त'' इति सूत्रेण सिध्यत्येवेति तदर्थं स्वरादिगणे प्रशान्शब्दपाठः व्यर्थ एव स्यात्। एवं च 'कृदन्तं यत् मान्तम्' इत्याद्यर्थस्वीकारेऽपि प्रतामौ प्रतामः इत्यत्र अव्ययसंज्ञाप्राप्तिरूपः दोषो न भवति। अतः अत्र अर्थद्वयमपि निर्दुष्टमेव इति।

**बोधप्रश्नः**

१. कृद् यो मान्तः इत्यर्थस्वीकारे कुत्र दोषः उक्तः?

२. प्रतामौ प्रतामः इत्यादौ कस्मिन् पक्षे दोषः उक्तः?

३. द्वितीयपक्षे दोषवारणं कथं भवति?

### १२.३.३ सन्निपातपरिभाषानिरूपणाधिकरणम्

कृन्मेजन्तः इति मान्तस्य एजन्तस्य च कृतः अव्ययसंज्ञायां चिकीर्षवे चिकीर्षोः

आधये इत्यादौ गुणे कृते अन्तरङ्गत्वात् अव्ययसंज्ञायां कृतायां सुपो लुक् प्रसज्येत अतः अनिकारोकारप्रकृतिः एजन्तः कृत् अव्ययसंज्ञको भवतीति वक्तव्यम्। अथवा अनन्यप्रकृतिः एजन्तः कृत् अव्ययसंज्ञो भवतीति वक्तव्यम्। अथवा उभयोः वचनयोरेकस्यैव 'अनन्यप्रकृतिः एजन्तः कृत् अव्ययसंज्ञो भवतीति वचनेन कार्यं सिद्ध्येत्। तेन कुम्भकारेभ्यः इत्यादौ अपि दोषो न स्यात्। अतः 'अनन्यप्रकृतिः' इति वचनं सूत्रे कर्तव्यमित्याक्षेपो जायते।

समाधानमत्रोक्तम् यत् उपर्युक्तदोषाः न स्युः। यतो हि 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति परिभाषा स्वीकर्तव्या। सन्निपातः संश्लेषः तन्निमित्तो यो विधिः कार्यं, सः तद्कार्यविघातस्य अनिमित्तं भवति। तेन गुणनिमित्तस्य विभक्त्यादेः लोपाय अव्ययसंज्ञायाम् एजन्तः निमित्तं न स्याद्।

अनन्यप्रकृतिः कृत् अव्ययसंज्ञोभवतीति वचनं कर्तव्यं सन्निपातलक्षणो विधिरिति परिभाषा वा कर्तव्या इत्याक्षेपे समाहितं भाष्यकारेण यत् अवश्यमेषा परिभाषा एव करणीया। यतो हि अस्याः परिभाषायाः बहूनि प्रयोजनानि सन्ति। कानि तानि प्रयोजनानि ? इति अग्रिमे अनुच्छेदे प्रदर्श्यन्ते।

### १२.३.४ सन्निपातपरिभाषायाः प्रयोजनविचारः

सन्निपातपरिभाषायाः बहूनि प्रयोजनानि सन्ति अतः सा स्वीकरणीया इति पूर्वमुक्तम्। अस्याः कानि प्रयोजनानि सन्ति इति प्रश्ने निगदितम् –

ग्रामणि कुलमित्यादौ ग्रामणी इति क्विबन्तस्य ह्रस्वे कृते ह्रस्वस्य पिति कृति तुक् इति प्राप्तः तुगागमः परिभाषया वार्यते। यदि बहिरङ्गो ह्रस्वः तुकि कर्तव्येऽसिद्धः स्यादि त्युच्येत तदा– वृत्रहभिः इत्यादौ नलोपे कृते प्राप्तः तुग्वार्यते परिभाषया इति वक्तव्यम्। यदि तुकि कर्तव्ये नलोपो बहिरङ्गः असिद्धः इति उत्तरं स्यात् तदा निकुचितम् इत्युदाहरणं ज्ञेयम् इति प्रयोजनवादी आह। अत्र नलोपे कृते 'उदुपधाद्भावादिकर्मणोरिति' अकित्त्वे प्राप्ते उपधागुणः प्राप्नोति तस्य निषेधः सन्निपातपरिभाषया भवतीति।

निराकरणवादी वक्ति– अत्र अकित्त्वे कृतेऽपि न धातुपलोप इति गुणनिषेधः स्यात्, नेदं परिभाषायाः प्रयोजनमस्ति।

अमुना इत्यत्र नाभावे कृते पूर्वं सुपि चेति दीर्घे पुनः ऊत्वे मत्वे च अमूना इत्यनिष्टस्य वारणाय सन्निपातपरिभाषा अस्ति इत्यपि न वक्तव्यम्, यतो हि 'न मुटादेशे' इति वचनात् मुत्वं सिद्धमेव स्यात्। अदन्तत्वाभावाच्च दीर्घस्याप्राप्तिरस्ति। इत्थं परिभाषाप्रयोजनेषु निराकृतेषु–

'उपादास्त' इति प्रयोजनं सन्निपातपरिभाषाया उक्तम्। अत्र दीङ्धातोरेचः आत्वे कृते घुसंज्ञायां स्थाघ्वोरिच्चेति इत्वं प्राप्नोति, सन्निपातपरिभाषया अकित्त्वसन्निपातनिमित्तमात्वं स्थाघ्वोरिच्चेति कित्त्वस्य अनिमित्तं भवेत्। किन्तु अत्रापि 'दीङः प्रतिषेधः स्थाघ्वोरित्वे' इत्यनेनादोषात् नेदं परिभाषाप्रयोजनम्।

प्रयोजनवादी पुनः तिस्रः चतस्रः इत्यादौ तिसृ–चतसृ इत्यादेशे कृते 'ऋन्नेभ्यो ङीप्' इति प्राप्तङीपो वारणं परिभाषाप्रयोजनमाह, किन्तु पाणिनेः 'न तिसृचतसृ' इति नामि दीर्घप्रतिषेधविधायकं सूत्रं ज्ञापयति तिसृचतस्रादेशे कृते ङीप् न भवतीति। यदि ङीब् भवेत् तदा पाणिनिः एवं सूत्रं न लिखेत्।

इत्थं पूर्वोक्तप्रयोजनानां खण्डनात् परं प्रयोजनवादी परिभाषायाः प्रयोजनत्वेन शतानि सहस्राणि, शकटौ पद्धतौ, इयेष उवोष इत्यादौ क्रमशः षट्संज्ञावारणं, टाब्वारणम् आमो वारणञ्च उक्तवान्।

### १२.३.५ सन्निपातपरिभाषासत्वे दोषाः, सिद्धान्तपक्षश्च



तस्य दोषो वर्णाश्रयः प्रत्ययो वर्णविचालस्येति। अर्थात् दाक्षिः प्लाक्षिः इत्यादौ अदन्तसन्निपातेन जातः इञ्प्रत्ययः वर्णनाशस्य अलोपस्य अनिमित्तं भवेत् तेनेष्टरूपं न सिद्ध्येत्। यद्युच्येत न प्रत्ययः सन्निपातलक्षणोऽस्ति तदा वक्तव्यं यत् अङ्गसंज्ञायामनिमित्तं स्यात्, तेन आनन्तर्यविघातः स्यादेव।

क्री धातोः णिचि वृद्धौ 'क्रीङ्जीनां णौ' इत्यात्वे पुकि च क्रापयति इति भवति। अत्र परिभाषया आत्वं पुग्विधेः निमित्तं न स्यात्। अदीदपत् इत्यत्र आदन्तधातुणिचोः सन्निपातमाश्रित्य प्रवृत्तः पुगागमः स्वनिमित्तस्य आदन्तधातुसम्बन्धस्य विघातकं ह्रस्वं प्रति निमित्तं न भवेत्। तेन अदीदपत् इति न सिद्ध्येत्।

या सा इत्यादौ त्यदादीनामः इति विभक्तिनिमित्तमाश्रित्य अत्वं करोति ततष्टाप् भवति। परिभाषाप्रवृत्तौ सत्यां स्वनिमित्तविघातकटापं प्रति अत्वं निमित्तं न भवेत्। तेनेष्टरूपं न सिद्ध्येत्।

ययिवान् पपिवान् इत्यादौ 'यया इवस् सु' इति दशायाम् आकारलोपे सति यद्रूपं सिद्ध्यति तत् अस्याः परिभाषायाः प्रवृत्त्या न स्यादित्यनिष्टरूपं प्रसज्येत।

अग्निमान् वायुमान् इत्यादौ पूर्वमुदात्तमादाय मतुपः उदात्तता क्रियमाणा पूर्वस्य निघातं न कुर्यात् सन्निपातपरिभाषाप्रवृत्त्या। एवमेव परमवाचे इत्यत्र अन्तोदात्तादुत्तरपदात् इति विभक्तेरुदात्तता क्रियमाणा पूर्वनिघातस्य अनिमत्ता स्यात्।

नदि कुमारि इत्यादौ नदीसंज्ञकस्य अम्बार्थनद्योरिति ह्रस्वे कृते एङ्ह्रस्वादिति सुलोपो न स्यात् परिभाषाप्रवृत्त्या इत्यपरो दोषः। यद्युच्येत हलङ्याब्भ्यो दीर्घादिति सुलोपो भवेत् तन्न, तत्र दीर्घादित्युक्तत्वात्। यद्युच्येत्– अत्र ह्रस्वत्वसम्बुद्धिलोपः सन्निपातपरिभाषाप्रवृत्त्या अनित्यः भवति। नहि ह्रस्वत्वे कृते प्राप्नोति। अतः अत्र सुलोपाभावस्य दोषस्तदवस्थ एवास्ति।

इत्थं परिभाषास्वीकारेण कानिचित् प्रयोजनानि सिद्ध्यन्ति, केषुचिच्च दोषाः भवन्ति। किन्तु दोषाः सन्ति इति परिभाषा न कर्तव्या इति पक्षः न समीचीनः। दोषाणां प्रतिविधानं कर्तव्यम्। मृगाः सन्ति इति बुद्ध्वा कृषकैः यवाः न उप्यन्ते इति न भवति। मृगकर्तृकबाधानिवारणाय प्रयासः क्रियते। अतः यानि एतस्याः परिभाषायाः प्रयोजनानि सन्ति तदर्थं सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति परिभाषा करणीया। दोषाणां निराकरणाय वक्तव्यं यत् विधानसामर्थ्यात् आङ्गः वर्णविचालः दाक्षिरित्यादौ स्यादेव। न यासयोरिति निर्देशात् या सा इति सिद्ध्येत्। एवमन्यत्रापि ज्ञेयम्।

**मूलग्रन्थपाठो व्याख्या च**

**(वा.) कृन्मेजन्तश्चानिकारोकारप्रकृतिः**

**कृन्मेजन्तश्चानिकारोकारप्रकृतिरिति वक्तव्यम्। इह मा भूत्। आधये, आधेः। चिकीर्षवे चिकीर्षोः इति।**

**(वा.) अनन्यप्रकृतिरिति वा**

**अथवा अनन्यप्रकृतिः कृदव्ययसंज्ञो भवतीति वक्तव्यम्।**

**किं पुनरत्र ज्यायः ?**

**अनन्यप्रकृतिरिति वचनमेव ज्यायः। इदमपि सिद्धं भवति। कुम्भकारेभ्यो नगरकारेभ्य इति। तर्त्तर्हि वक्तव्यम्**

**'न वा'।**

**( वा. )'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्ये'ति**

**न वा वक्तव्यम्। किं कारणम्। संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येत्येषा परिभाषा कर्तव्या।**

**कः पुनरत्र विशेषः। एषा वा परिभाषा क्रियेत। अनन्यप्रकृतिरिति वोच्येत। अवश्यमेषा परिभाषा कर्तव्या। बहून्येतस्याः परिभाषायाः प्रयोजनानि। कानि पुनस्तानि ?**

**व्याख्या-** पूर्वोक्तार्थकं कृन्मेजन्त इति सूत्रं आधये-आधेः चिकीर्षवे-चिकीर्षोः इत्यादौ अतिव्याप्तम्। तथाहि-आङ्पूर्वात् धा धातोः कि (इ) इति कृत्प्रत्ययेन निष्पन्नः आधिशब्दः।

चिकीर्ष इति सन्नन्तात् सनाशंस-भिक्ष उः इति सूत्रेण उ इति कृत्प्रत्यये कृते निष्पन्नः चिकीर्षुशब्दः। आधि 'शब्दात् ङे (=ए) प्रत्यये इकारस्य गुणे आधे-ए इति जाते, एकारस्य अय्आदेशे आधये इति इष्टरूपं भवति।

'आधि' शब्दात् ङ्स (=अस्) प्रत्यये इकारस्य गुणे आधे-अस् इति जाते, एकार-अकारयोः स्थाने पूर्वरूपे, सकारस्य रुत्वे विसर्गे च आधेः इति इष्टरूपं भवति।

चिकीर्षुशब्दात् ङे (=ए) प्रत्यये प्रकृतेः उकारस्य गुणे ओकारे चिकीर्षो अस् इति जाते, ओकार-अकारयोः स्थाने पूर्वरूपे, सकारस्य रुत्वे विसर्गे च-चिकीर्षोः इति इष्टरूपं भवति। एवं स्थिते आधे-ए, आधे-अस्, चिकीर्षो ए, चिकीर्षो अस् इति दशायाम् एकारः ओकारश्च स्थानिवद्भावेन कृत् भवति, स्वतः एज्रूपः, व्यपदेशिवद्भावेन एजन्तश्च। अतः कृन्मेजन्त इति सूत्रेण अव्ययसंज्ञा तद्वारा सुपः लुक् च अनिष्टः प्राप्नोति।

एतद्दोषवारणाय वार्तिककारेण प्रथमतः कृन्मेजन्तश्चानिकारोकारप्रकृतिः इति वक्तव्यं इत्युक्तम्। अर्थात् कृन्मेजन्तः इत्यस्य स्थाने कृन्मेजन्तश्चानिकारोकारप्रकृतिः इति न्यासः कर्तव्यः इति सूचितम्। तत्र इकारोकारौ प्रकृती यस्य सः = इकारोकारप्रकृतिः, तद्भिन्नः अनिकारोकारप्रकृतिः। अयं शब्दः मेजन्तशब्दैकदेशस्य एच एव विशेषणं सम्भवति। न मकारस्य, असम्भवात्। तथा च इकारप्रकृतिकः, उकारप्रकृतिको वा यः एच् तदन्तः मकारान्तश्च यः कृत् तदन्तम् अव्ययसंज्ञं भवति इति वार्तिकार्थः। से प्रभृतयः अनिकारोकारप्रकृतिक-एजन्तः कृत्। अतः तदन्तस्य जीवसे इत्यादेः अव्ययसंज्ञा भवति।

आधये- (आधि-ए-आधे-ए), आधेः (आधि-अस्-आधे-अस्) इत्यादौ एकारः इकारप्रकृतिकः। चिकीर्षवे (चिकीर्षु-ए-चिकीर्षो-ए), चिकीर्षोः (चिकीर्षु-अस्-चिकीर्षो-अस्) इत्यत्र एच् उकारप्रकृतिकः। अतः तदन्तस्य अव्ययसंज्ञा न भवति इति भावः।

ततः एतद्दोषवारणायैव अनन्यप्रकृतिरिति वा इति न्यासान्तरं सूचितम्। अन्यप्रकृतिः न भवतीति अनन्यप्रकृतिः। अयमपि मेजन्तशब्दैकदेशस्य एच एव विशेषणं सम्भवति। तथा च अनन्यप्रकृतिः यः एच्, तदन्तः मकारान्तश्च यः कृत् तदन्तम् अव्ययसंज्ञं भवति इति वार्तिकार्थः।

(आधये-आधेः इत्यत्र एच् अन्यप्रकृतिकः = इकारोकारप्रकृतिकः) चिकीर्षवे-चिकीर्षोः इत्यत्र एच् अन्यप्रकृतिकः (=उकारप्रकृतिकः) अतः एतादृशस्थले अव्ययसंज्ञा न भवति। तथा च अनिकारोकारप्रकृतिः अनन्यप्रकृतिः इति वा न्यासेन, यः स्वतः एजन्तः न तु गुण-वृध्यादिना एजन्तत्वेन जातः शब्दः, अर्थात् यः प्रतिपदोक्तैजन्तः न तु लाक्षणिकैजन्त शब्दः तस्यैव अव्ययसंज्ञा नतु अतादृशस्य इति विवक्षितः अर्थः। एवं येन केनापि न्यासेन आधये इत्यादौ दोषवारणे जातेऽपि अनन्यप्रकृतिरिति न्यासः एव ज्यायान्। यतः अयं न्यासः कुम्भकारेभ्यः (=कुम्भकार भ्यस्-कुम्भकारे भ्यस्) इत्यादौ अपि एजन्तस्य अनिष्टामव्ययसंज्ञां वारयति। कुम्भकार इत्यादौ अन्त्यः

अकारः अण्रूपकृत्प्रत्ययः। कुम्भकार भ्यस्–इति दशायां रेफोत्तराकारस्य 'बहुवचने झल्येत्' इति एकारादेशः जातः। स्थानिवद्भावेन अयम् एकारः कृत् भवति। व्यपदेशिवद्भावेन एजन्तश्च भवति। परन्तु अयम् एच् इकारप्रकृतिकः, उकारप्रकृतिको वा न भवति। अतः प्रथमन्यासेन अत्र अव्ययसंज्ञा न वार्यते, द्वितीयन्यासेन तु वार्यते, एकारस्य इकारोकारप्रकृतिकत्वाभावेऽपि अन्यप्रकृतिकत्वात्। अतः बहुलक्ष्यसाधकत्वात् द्वितीयन्यास एव युक्तः।

एवं प्रथमवार्तिकापेक्षया द्वितीयवार्तिकस्य ज्यायस्त्वेऽपि इदं न कर्तव्यम्। एतदपेक्षया अधिकप्रयोजनसम्पादिकायाः सन्निपातपरिभाषायाः अवश्याश्रयणीयतया, तया एव गतार्थत्वात् इत्यभिप्रायेण तत्तर्हि वक्तव्यम्? इति प्रश्नपूर्वकं न वा सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य इति तृतीयवाक्यमवतारितं भाष्ये। अनन्यप्रकृतिरिति वार्तिकं नैव कर्तव्यम्। यतः सन्निपातपरिभाषा अवश्यम् आश्रयणीया इति वार्तिकस्य अर्थः।

अनन्यप्रकृतिरिति वचनापेक्षया सन्निपातपरिभाषाश्रयणे बहूनि प्रयोजनानि सिध्यन्ति। अनन्यप्रकृतिरिति वार्तिकम् केवलम् आधये–चिकीर्षवे–कुम्भकारेभ्यः इत्यादिप्रयोजनानि त्रीण्येव साधयति। सन्निपातपरिभाषा तु ग्रामणिकुलम् इत्यादौ तुग्वारणादीनि बहूनि प्रयोजनानि साधयति, आधये इत्यादीन्यपि साधयति। अपि चेयं लोकन्यायसिद्धा। अनन्यप्रकृतिरिति अपूर्ववचनकल्पनापेक्षया लोकन्यायसिद्धवचनस्य अङ्गीकरणं वरम्। कः पुनरत्र विशेषः। एषा वा परिभाषा क्रियेत। अनन्यप्रकृतिरिति वोच्येत। अवश्यमेषा परिभाषा कर्तव्या। बहून्येतस्याः परिभाषायाः प्रयोजनानि इति भाष्यार्थः।

सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य इति परिभाषायाः अर्थः एकमुदाहरणं च सन्निपातः = द्वयोः संबन्धः, स च पौर्वापर्यरूपः विशेष्य–विशेषणभावरूपो वा सम्बन्धः, तल्लक्षणो विधिः = तन्निमितं कार्यम्, तद्विघातस्य– तम् = तद्विधिनिमित्तभूतं सन्निपातं, यो विहन्ति तस्य विधेः, निमित्तं न भवतीति परिभाषार्थः॥ यथा शतानि इत्यत्र नुमः प्रवृत्तेः, प्राक् नुम्शास्त्रस्य निमित्तभूतः सन्निपातः = शत – (शि) इ इत्यत्र, अजन्ताङ्ग–इरूपसर्वनामस्थानयोः पौर्वापर्यसन्निपातः, तमाश्रित्य प्रवृत्तः विधिः– ''नपुंसकस्य झलचः'' इति नुमागमः, स्वनिमित्तभूतसन्निपातविघातकः स्वातिरिक्तविधिः = ''ष्णान्ता षट् इति षट्संज्ञा तद्द्वारा'' षड्भ्यो लुक् इति जसः लुग्विधिः, तस्य नुमागमः निमित्तं न भवति। अतः षट्संज्ञा लुग्विधिश्च न प्रवर्तते। तेन इष्टसिद्धिः भवति। एवं रीत्या सर्वत्र परिभाषायाः प्रयोजनेषु दोषेषु च विविच्य सर्वं ज्ञातव्यम्।

**मूलग्रन्थपाठो व्याख्या च**

**(वा.) प्रयोजनं ह्रस्वत्वं तुग्विधेर्ग्रामणिकुलम्**

**ग्रामणिकुलम् सेनानिकुलम् इत्यत्र ह्रस्वत्वे कृते ह्रस्वस्य पिति कृति तुगिति तुक् प्राप्नोति। संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति।**

**नैतदस्ति प्रयोजनम्। बहिरङ्गं ह्रस्वत्वम्। अन्तरङ्गस्तुक्। असिद्धं बहिरङ्गमन्तरङ्गे।**

**व्याख्या**– परिभाषाप्रयोजनबोधकवार्तिकानामेवमर्थो भवति–कानि पुनस्तानि? इति प्रश्नपुरस्सरं 'प्रयोजनं ह्रस्वत्वं तुग्विधेर्ग्रामणिकुलम्' इत्यादिना 'तिसृचतसृत्वं ङीब्विधेः' इत्यन्तेन भागेन परिभाषायाः वार्तिकोक्तानि षट् प्रयोजनानि ततः स्वप्रोक्तानि च त्रीणि प्रयोजनानि प्रदर्शितानि भाष्ये। तत्र वार्तिकेषु सन्निपातनिमित्तकाः ते ते विधयः तत्सन्निपातविघातकाः ते ते विधयश्च निर्दिष्टाः। 'अनिमित्तम्' इति पदं प्रधानपरिभाषातः अनुवर्तते। ततश्च परिभाषाप्रयोजनबोधकवार्तिकानामेवमर्थो भवति–'ग्रामणिकुलम्' इत्यादौ समस्तपदे, इगन्तशब्द–उत्तरपदयोः पौर्वापर्यसन्निपातनिमित्तकः ह्रस्वत्वरूपः सन्निपातलक्षणविधिः स्वनिमित्त–इगन्तशब्दसन्निपातविघातकस्य स्वातिरिक्तस्य तुग्विधेः निमित्तं न भवति, तेन तुगप्रवृत्त्या इष्टसिद्धिः भवति।

अत्र वार्तिकोक्तफलमन्यथा साधयति भाष्यकारः– नैतदस्ति प्रयोजनम् इत्यादिना। अस्यायं भावः– ग्रामणि (क्विप्) कुलम् इत्यत्र तुक् पूर्वोपस्थितनिमित्तकत्वेन अन्तरङ्गः, उत्तरपदनिमित्तकह्रस्वस्तु परोपस्थितोत्तरपदनिमित्तकत्वेन बहिरङ्गः। अतः अन्तरङ्गे तुकि कर्तव्ये बहिरङ्गः ह्रस्वः 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया असिद्धो भवति। ततश्च तुग्विधिदृष्ट्या ह्रस्वस्याभावात् तुक् न भवति। अतः अन्तरङ्गपरिभाषयैव सिद्धत्वात् ग्रामणिकुलम् इत्यत्र तुगभावः न सन्निपातपरिभाषायाः फलम् इति।

**मूलग्रन्थपाठः**

**( वा. ) 'नलोपो वृत्रहभिः'**

**वृत्रहभिर्भ्रूणहभिरित्यत्र नलोपे कृते ह्रस्वस्य पिति कृति तुगिति तक् प्राप्नोति। संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति। एतदपि नास्ति प्रयोजनम्। असिद्धो नलोपः। तस्यासिद्धत्वान्न भविष्यति।**

**व्याख्या**– वृत्रहभिः इत्यत्र वृत्रहन्शब्द–भिस्प्रत्ययोः पौर्वापर्यसन्निपात–निमित्तकः नलोपरूपः सन्निपातलक्षणविधिः स्वनिमित्तवृत्रहन्शब्दसन्निपातविघातकस्य स्वातिरिक्तस्य तुग्विधेः निमित्तं न भवति, तेन तुगप्रवृत्त्या इष्टसिद्धिः भवति इत्येतत् सन्निपातपरिभाषायाः प्रयोजनम् इति एतद्वार्तिक–तद्विवरणपरभाष्ययोरर्थः। अत्र वार्तिकोक्तफलमन्यथा साधयति भाष्यकारः 'एतदपि नास्ति प्रयोजनम्' इत्यादिना। अस्यायं भावः– वृत्रह– भिस् इत्यत्र नलोपोत्तरं पित्कृतमाश्रित्य नलोपः 'नलोपः सुप्–स्वर–संज्ञा–तुग्विधिषु कृति' इतिसूत्रेण असिद्धो भवति। ततश्च ह्रस्वाभावात् तुक् न प्रवर्तते। एवं 'नलोपः सुप्–स्स्वर–संज्ञा–तुग्विधिषु कृति, सूत्रेणैव वृत्रहभिः इत्यत्र तुग्वारणात् नेदं परिभाषाफलम्।

**मूलग्रन्थपाठः**

**( वा. ) उदुपधत्वमकित्त्वस्य निकुचिते**

**उदुपधत्वमकित्त्वस्यानिमित्तम्। क्व। निकुचिते। निकुचितमित्यत्र नलोपे कृते 'उदुपधाद् भावादिकर्मणोरन्यतरस्यामि'त्यकित्त्वं प्राप्नोति। संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति। एतदपि नास्ति प्रयोजनम्। अस्त्वत्राकित्वम्। 'न धातुलोप आर्धधातुके' इति प्रतिषेधो भविष्यति।**

**व्याख्या**– निकुचिशब्दे कुन्च्धातुः। कित् (क्त) प्रत्ययसन्निपातनिमित्तकः उदुपधत्वसम्पादकविधिः स्वनिमित्तकित्प्रत्ययसन्निपातविघातकस्य अकित्त्वविधेः निमित्तं न भवति,। तेन अकित्त्वस्य तद्द्वारा उपधागुणस्य च अप्रवृत्त्या इष्टसिद्धिः भवति इत्येतत् सन्निपातपरिभाषायाः प्रयोजनम् इति।

अत्र वार्तिकोक्तफलमन्यथा साधयति भाष्यकारः 'एतदपि नास्ति प्रयोजनम् इत्यादिना'। अस्यायं भावः – अत्र सन्निपातपरिभाषाभावेऽपि लघूपधगुणः वारयितुं शक्यते एव। अत्र निकुच् इत इति स्थिते नलोपोत्तरम् उदुपधाद्भावादिकर्मणोरन्यतरस्याम् इत्यनेन क्त (=इत) प्रत्ययस्य अकित्वेऽपि गुणो नभवति। कुन् च् इत्यत्र धात्ववयवनकारस्य लुप्तत्वेन 'न धातुलोप आर्धधातुके' इति सूत्रेण गुणनिषेधात् इदमपि न सन्निपातपरिभाषाफलम्।

**मूलग्रन्थपाठः**

**( वा. ) नाभावो यञि दीर्घत्वस्यामुना**

**नाभावो यञि दीर्घत्वस्यानिमित्तम्। क्व। अमुना। नाभावे कृते 'अतो दीर्घो यञि सुपि च' इति दीर्घत्वं प्राप्नोति। संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति। एतदपि नास्ति प्रयोजनम्। वक्ष्यत्येतत् 'न मु टादेशे' इति।**

**व्याख्या**- अमुना इत्यत्र घिसंज्ञक-अमु शब्द- 'टा' प्रत्ययसन्निपातमिनित्तक: नाभाव: (=नादेश:) स्वनिमित्त-अमुशब्दसन्निपातविघातकस्य यञ्निमित्तकस्य 'सुपि च' दीर्घस्य निमित्तं न भवति। तेन दीर्घाप्रवृत्त्या इष्टसिद्धि: भवति इत्येतत् सन्निपातपरिभाषाया: प्रयोजनम् इति एतद्वार्तिक-तद्विवरणपरभाष्ययोरर्थ:। अत्र वार्तिकोक्तफलमन्यथा साधयति भाष्यकार: 'एतदपि नास्ति प्रयोजनम् इत्यादिना'। अस्यायं भाव: -

सन्निपातपरिभाषाभावेऽपि अमुना इत्यत्र सुपि च इति दीर्घ: वारयितुं शक्यते एव। न मु ने इति सूत्रे वार्तिककार: न मु ने इत्यस्य स्थाने ' न मु टादेशे' इति न्यासान्तरं करोति। तत्र टादेशे इत्यस्य टाया: आदेश: टायाम् आदेश: इति द्वेधा विग्रह:। टास्थाने आदेशे कर्तव्ये, टास्थानिकनादेशनिमित्तककार्ये कर्तव्ये च मुभाव: न असिद्ध: इति तस्य अर्थ:। प्रकृते, अमुना इत्यत्र टास्थानिकनादेशनिमित्तके सुपि च इति दीर्घे कर्तव्ये मुत्वस्य असिद्धत्वाभावेन अदन्ताङ्गाभावात् दीर्घो न भवति।

**मूलग्रन्थपाठ:**

**(वा.) आत्वं कित्त्वस्योपादास्त**

**आत्वं कित्त्वस्यानिमित्तं स्यात्। क्व। उपादास्तास्य स्वर: शिक्षकस्येति। आत्वे कृते 'स्थाघ्वोरिच्चे' तीत्त्वं प्राप्नोति। संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति। एतदपि नास्ति प्रयोजनम्। उक्तमेतत् 'दीङ: प्रतिषेध: स्थाघ्वोरित्त्वे' इति।**

**व्याख्या**- उपादास्त इत्यत्र दीङ् धातो: अकित् (=सिच्) प्रत्ययसन्निपातनिमित्तकम् आत्वम् स्वनिमित्तस्य अकित्त्वसन्निपातविघातकस्य कित्त्वस्य निमित्तं न भवति। तेन तत्सन्नियोग-शिष्टम् इत्त्वं च न भवति इत्येतत् सन्निपातपरिभाषाया: प्रयोजनम् इति एतद्वार्तिक-तद्विवरणपरभाष्ययोरर्थ:। अत्र वार्तिकोक्तफलमन्यथा साधयति भाष्यकार: 'एतदपि नास्ति प्रयोजनम्' इत्यादिना। अस्यायं भाव:- उप आदास्त इत्यत्र सन्निपातपरिभाषाभावेऽपि सिच: कित्त्वं दा इत्यत्र आकारस्य इत्त्वं च वारयितुं शक्यते एव। यतोहि दाधाघ्वदाप् इति सूत्रे 'दीङ= प्रतिषेध: स्थाघ्वोरित्त्वे' इति वार्तिककृता उक्तम्। अत: तेनैव वार्तिकेन उपादास्त इत्यत्र सिच: कित्त्वस्य दा इत्यत्र इत्त्वस्य च वारणात् नेदं सन्निपातपरिभाषाफलम्।

**मूलग्रन्थपाठ:**

**(वा.) तिसृचतसृत्वं ङीब्विधे:**

**तिसृचतसृत्वं ङीब्विधेरनिमित्तम्। क्व। तिस्रस्तिष्ठन्ति। चतस्रस्तिष्ठन्तीति। तिसृचतसृभावे कृते 'ऋन्नेभ्यो ङीप्' इति ङीप् प्राप्नोति। संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति।**

**एतदपि नास्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति न तिसृचतसृभावे कृते ङीप् भवतीति। यदयं 'न तिसृचतसृ' इति नामि दीर्घत्वस्य प्रतिषेधं शास्ति।**

**व्याख्या**- त्रि/चतुर्शब्दे 'टा' प्रत्ययसन्निपातमिनित्तक: त्रि-चतुरो: तिसृ-चतसृआदेश:, स्वनिमित्त 'त्रि-चतुर्' शब्दसन्निपातविघातकस्य ङीब्विधे: निमित्तं न भवति। तेन तिसृ-चतसृशब्दयो: ङीब्रूपस्त्रीप्रत्ययाप्रवृत्त्या इष्टसिद्धि: भवति सन्निपातपरिभाषाया: प्रयोजनम् इति। अत्र

वार्तिकोक्तफलमन्यथा साधयति भाष्यकारः-एतदपि नास्ति प्रयोजनम् इत्यादिना। अस्यायं भावः - तिसृ-अस् इति दशायां ''ऋन्नेभ्यो ङीप् ४-१-५'' इति ङीप् न भवति इति पाणिनिः ज्ञापयति। तथाहि, स्त्रीलिङ्ग-त्रिशब्दस्य षष्ठीबहुवचने 'आम्' प्रत्यये त्रिशब्दस्य 'तिसृ' आदेशे आमः नुडागमे च 'तिसृ नाम्' इति स्थिते ''नामि'' इति सूत्रेण 'तिसृ' शब्दस्य दीर्घे प्राप्ते तन्निषेधाय ''न तिसृ-चतुसृ'' इति सूत्रं कृतवान् पाणिनिः। यदि 'तिसृ' शब्दस्य ङीप् पाणिनेरभिमतः स्यात् तदा 'तिसृ' शब्दस्य षष्ठीबहुवचने ङीपा व्यवधानात् 'नाम्' परत्वाभावेन दीर्घस्यैव अप्राप्त्या तन्निषेधाय ''न तिसृ-चतसृ'' इति सूत्रकरणं व्यर्थं स्यात्। एवं व्यर्थं सत् तिसृशब्दस्य ङीप् न भवति इति ज्ञापयति। अतः तिस्रः चतस्रः इत्यत्र वा ङीब्वारणं न सन्निपातपरिभाषाफलम्। एवं वार्तिककारोक्तानि षट् प्रयोजनानि अन्यथा साधितवान् भाष्यकारः।

**मूलग्रन्थपाठः**

**इमानि तर्हि प्रयोजनानि। शतानि। सहस्राणि। नुमि कृते ष्णान्ता षडिति षट्संज्ञा प्राप्नोति। संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति। शकटौ पद्धतौ। अत्वे कृते अत इति टाप् प्राप्नोति। सनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति।**

**इयेष उवोष। गुणे कृते 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम् प्राप्नोति। संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति न दोषो भवति।**

**व्याख्या**- एवं वार्तिककारोक्तानि षट् प्रयोजनानि अन्यथा संसाध्य भाष्यकारः स्वयं त्रीणि प्रयोजनानि प्रदर्शयति- इमानि तर्हि प्रयोजनानि इत्यादिना। तर्हि = पूर्वोक्तप्रयोजनाना-मन्यथासिद्धत्वे, इमानि = वक्ष्यमाणानि, शतानि शकटौ इयेष इत्यादीनि असाधारणप्रयोजनानि स्वीकार्याणि।

शतानि इत्यादौ शतशब्दात् जसि तस्य शि = इ, आदेशे शतशब्दस्य नुमागमे शतन् इ, इति जाते 'सर्वनामस्थाने चासम्बुद्धौ' इति सूत्रेण शतन् इत्यस्य उपधादीर्घे शतान् इ = शतानि इति सिध्यति, एवं सहस्राणि इत्यपि। किन्तु नुमागमोत्तरम् शतन् इ, इति जाते शतन् इत्यस्य नान्तसंख्यावाचकत्वेन ''षड्भ्यो लुक्'' इति लुकि तद्द्वारा अनिष्टं प्राप्नोति, परन्तु सन्निपातपरिभाषाश्रयणे अयं दोषो न भवति, 'शतन् (शि) इ' इत्यत्र, अजन्ताङ्ग-इरूपसर्वनामस्थानयोः पौर्वापर्यसन्निपातमाश्रित्य 'नपुंसकस्य झलचः' इति सूत्रेण प्रवृत्तः नुमागमः षट्संज्ञाद्वारा सन्निपातविघातकस्य शेः ''षड्भ्यो लुक्'' इति लुकि निमित्तं न भवति।

**शकटौ-पद्धतौ**- स्त्रीलिङ्गात् शकटिशब्दात् घिसंज्ञकात् सप्तम्येकवचने ङि प्रत्यये अच्च घेः इति ङिप्रत्ययस्य औ इत्यादेशे तत्सन्नियोगेन शकटिशब्दे इकारस्य अकारादेशे च शकट-औ इति जाते एकादेशे वृद्धौ शकटौ इति इष्टं सिध्यति। एवं पद्धतिशब्दात् पद्धतौ इति। किन्तु शकट-औ इत्यवस्थायाम् अदन्तत्वेन अजाद्यतष्टाप् इति टापि तद्द्वारा शकटायाम् इति अनिष्टं प्राप्नोति। एवं पद्धतौ इत्यत्रापि।

यदा सन्निपातपरिभाषा आश्रीयते तदा अयं दोषो न भवति। घिसंज्ञकशकटिशब्द-ङिप्रत्यययोः पौर्वापर्यसन्निपातं निमित्तीकृत्य अच्च घेः इति सूत्रेण जातः अकारादेशः स्वनिमित्तशकटिशब्दसन्निपातविघातकस्य टाप्प्रत्ययस्य स्वयं निमित्तं न भवति इति सन्निपातपरिभाषया बोधनात्। अत्र अच्च घेः इति अकारादेशः स्वातिरिक्तस्य स्वनिमित्तसन्निपातविघातकस्य निमित्तं न भवति इत्येव बोधयति परिभाषा। तेन अनिष्टं वार्यते।

**इयेष-उवोष**- इष् धातोः लिटि प्रथमपुरुषैकवचने तिपो णलादेशे धातोः द्वित्वादि कार्येषु कृतेषु इ-इष् अ इति जाते उपधागुणे इ एष् अ इति जाते अभ्यासेकारस्य इयङादेशे इयेष इति

इष्टरूपं सिध्यति। एवं उष् धातोः लिटि उवोष इत्यपि। परन्तु इ-एष् अ इति दशायां धातोः इजादित्वात् गुरुमत्त्वाच्च 'इजादेश्च गुरुमतोऽनृच्छः' इति आम् प्रत्यये तद्वारा आमः परस्य लिटः लुकि अनिष्टरूपं च प्राप्नोति। एवं उवोष इत्यत्रापि।

यदि सन्निपातपरिभाषा आश्रीयते तदा अयं दोषो न भवति। इष् इति लघूपधाङ्गस्य-लिटश्च पौर्वापर्यसन्निपातमाश्रित्य प्रवृत्तः गुणः लुक्प्रयोजकस्य आमः प्रवर्तनेन स्वनिमित्तलिट्-सन्निपातविघातकस्य इजादेश्च गुरुमतोऽनृच्छः इति आमः निमित्तं न भवति।

**मूलग्रन्थपाठो व्याख्या च**

**( वा. ) तस्य दोषो वर्णाश्रयः प्रत्ययो वर्णविचालस्य**

**तस्य दोषो वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यात्। क्व। अत इञ्। दाक्षिः। प्लाक्षिः। न प्रत्ययः सन्निपातलक्षणः। अङ्गसंज्ञा तर्ह्यनिमित्तं स्यात्॥**

**व्याख्या**- दाक्षिः इत्यादौ, दक्ष-इ इति स्थिते, वर्णाश्रयः (=वर्णनिमित्तकः), प्रत्ययः, वर्णविचालस्य (=वर्णविनाशस्य) अनिमित्तं स्यादिति, तस्य दोषः = संनिपातपरिभाषारूपवचनस्य अलक्ष्येषु प्रवृत्तिरूपो दोषः आपतति। यथा- दक्षस्य अपत्यं पुमान् = दाक्षिः इत्यादौ दक्ष-इ स्थिते अतः = ह्रस्वाकारस्य, अङ्गस्य च विशेषणविशेष्यभावसम्बन्धं निमित्तीकृत्य 'जातः इञ् प्रत्ययः 'स्वनिमित्तसन्निपातविघातकस्य' यस्येति च इति लोपस्य अनिमित्तं स्यात्, ततश्च दाक्षिः इत्यादेः इष्टरूपस्य सिद्धिः न स्यात्, प्लक्षस्य अपत्यं पुमान् = प्लाक्षिः इत्यादि च न स्यात् इति दोषः संनिपातपरिभाषारूपवचनस्य अस्ति। सन्निपातपरिभाषायां सन्निपातशब्देन पूर्वपरसन्निपात एव गृह्यते इति, ततश्च दक्षशब्दात् उत्पन्नः इञ् प्रत्ययः न पूर्वपरसन्निपातनिमित्तकः, अदन्तप्रातिपदिकात् कस्मादपि शब्दात् परे तस्य विहितत्वाभावात्। अतः सन्निपातपरिभाषायाः प्रसक्तेरेव अभावेन कथमत्र तस्याः दोषः दत्तः भवता? इत्यभिप्रायेण एकदेशिना उक्तम्- 'न प्रत्ययः सन्निपातनिमित्तक इति'। स्वानभीष्टमपि एकदेशयुक्तं अभ्युपगम्यैव तदाशयानुगुणतयैव भाष्यकृता उक्तम् - अङ्गसंज्ञा तर्ह्यनिमित्तं स्यादिति। तस्यायमाशयः- 'यस्मात् प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्' इति सूत्रस्य 'अत इञ्' इत्यादिप्रत्ययविधीनां च एकवाक्यतया अदन्तात् प्रातिपदिकात् अपत्येर्थे इञ् भवति तस्मिन् प्रत्यये परे, यस्मात् सः विहितः, तदादिशब्दस्वरूपम् अङ्गसंज्ञं भवति इत्यर्थः सिध्यति। तथा च 'दक्ष-इ' इत्यत्र अदन्तप्रातिपदिक-इञ् प्रत्ययसन्निपातेन जाता अङ्गसंज्ञा अदन्तप्रातिपदिक-सन्निपातकविघातकं 'यस्येति च' इति लोपं प्रति अनिमित्तं स्यात्। ततश्च 'दाक्षिः' इत्यादीष्टसिद्धिः न स्यात् इति।

वार्तिके 'वर्णाश्रयः' इति ग्रहणात् अङ्गसंज्ञायाः वर्णाश्रयत्वाभावात् सिद्धान्तिना 'अङ्गसंज्ञा अनिमित्तं स्यात्' इत्येवंपरतया वार्तिकं व्याख्यातुं न शक्यते। सिद्धान्त्यभिप्रायस्तु अयम्... परिभाषायां सन्निपातशब्देन द्विविधः सन्निपातः - पौर्वापर्यरूपः विशेषण-विशेष्यभावरूपश्च ग्राह्यः। दाक्षिरित्यादौ अकारस्य- प्रातिपदिकस्य च विशेषणविशेष्यसन्निपातेन जातः इञ् प्रत्ययः स्वनिमित्त-अकाररूपविशेषणसन्निपातविघातकस्य 'यस्येति च' इति लोपस्य निमित्तं न स्यात्। तथा च इष्टसिद्धिः न स्यात् इत्येव सिद्धान्त्याशयः।

**मूलग्रन्थपाठः**

**( वा. ) आत्वं पुग्विधेः, क्रापयति**

**आत्वं पुग्विधेरनिमित्तं स्यात्। क्व। क्रापयतीति।**

**( वा. ) पुग् ह्रस्वत्वस्यादीदपत्।**

**पुग् ह्रस्वत्वस्यानिमित्तं स्यात्। क्व। अदीदपदिति**

**व्याख्या**– क्रापयति (क्री–णिच्=इ–अ–ति) इत्यादौ क्रीधातु–णिचोः पौर्वापर्यसंनिपात–लक्षणः आकारविधिः, स्वनिमित्तक्रीधातुसन्निपातविघातकस्य पुग्विधेः निमित्तं न स्यात्। तेन क्रापयतीति इष्टं न स्यात् इति अस्याः परिभाषायाः अतिव्याप्तिरूपः दोषः आपतति एतत्परिभाषाश्रयणे इति एतद्वार्तिकतद्विवरणपरभाष्ययोरर्थः।

अदीदपत् (अद दाप् इ–अ–त्) इत्यत्र आदन्तधातु–णिचोः पौर्वापर्यसम्बन्ध–माश्रित्य प्रवृत्तः पुगागमः स्वनिमित्तस्य आदन्तधातुसम्बन्धस्य विघातकं ह्रस्वं प्रति अनिमित्तं स्यात्। ततश्च अदीदपत् इति इष्टं न स्यात् इति अस्याः परिभाषायाः अतिव्याप्तिरूपः दोषः आपतति।

**मूलग्रन्थपाठः**

**(वा.) त्यदाद्यकारष्टाब्विधेः**

**त्यदाद्यकारष्टाब्विधेरनिमित्तं स्यात्। क्व। या सेति।**

**(वा.) इड्विधिराकारलोपस्य पपिवान्**

**इड्विधिराकारलोपस्यानिमित्तं स्यात्। क्व। ययिवान्। तस्थिवानिति।**

**व्याख्या**– या (= यद् = सु–टाप्) सा (=तद्–सु–टाप्) इत्यत्र त्यदादि–विभक्त्योः पौर्वापर्यसम्बन्धमाश्रित्य प्रवृत्तः अकारादेशः स्वनिमित्तत्यदादिसन्निपातविघातकटापं प्रति अनिमित्तं स्यात्। ततश्च या सा इति इष्टसिद्धिर्न स्यात् इति अस्याः परिभाषायाः अतिव्याप्तिरूपःदोषः आपतति। ययिवान् (या–या–इ वस्) इत्यादौ आदन्तधातु–क्वसुप्रत्यययोः पौर्वापर्यसम्बन्धमाश्रित्य प्रवृत्तः इडागमः स्वनिमित्त–आदन्तधातुसन्निपातविघातकम् आल्लोपं प्रति निमित्तं न स्यात्। ततश्च ययिवान् तस्थिवान् इत्यादीष्टलक्ष्यसिद्धिः न स्यात् इति अस्याः परिभाषायाः अतिव्याप्तिरूपः दोषः आपतति।

**मूलग्रन्थपाठः**

**(वा.) मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्य**

**मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्यानिमित्तं स्यात्। क्व। अग्निमान्। परमवाचा। परमवाचे इति।**

**व्याख्या**– अग्निमान्–वायुमान् इत्यादौ अन्तोदात्तशब्द–मतुप्प्रत्यययोः संबन्धमाश्रित्य प्रवृत्तः उदात्तस्वरः स्वनिमित्तअन्तोदात्तशब्दसन्निपातविघातकपूर्वनिघातकस्य निमित्तं न स्यात्। एवमेव, परमवाच् शब्दात् समासस्वरेण अनुदात्तात् टा–प्रत्यये कृते परमवाच् आ इति जाते अन्तेदात्त 'परमवाच्' शब्द–विभक्तिप्रत्यययोः संबन्धमाश्रित्य प्रवृत्तः उदात्तस्वरः स्वनिमित्तस्य अन्तोदात्त 'परमवाच्' शब्दसन्निपातविघातस्य पूर्वनिघातस्य निमित्तं न स्यात्। ततश्च परमवाचा इत्यादौ 'परमवाच्' शब्दः अनुदात्तान्तः इष्टो न सिध्येत् इति अस्याः परिभाषायाः अतिव्याप्तिरूपः दोषः आपतति।

**मूलग्रन्थपाठः**

**(वा.) नदीह्रस्वत्वं सम्बुद्धिलोपस्य**

**नदीह्रस्वत्वं सम्बुद्धिलोपस्यानिमित्तं स्यात्। क्व। नदि कुमारी किशोरि ब्राह्मणि ब्रह्मबन्धु इति। नदीह्रस्वत्वे कृते 'एङ्ह्रस्वात्संबुद्धेरि'ति सम्बुद्धिलोपो न प्राप्नोति।**

**व्याख्या**– हे कुमारि (कुमारी–सु) इत्यादौ नद्यन्तशब्द–संबुद्ध्योः पौर्वापर्यसम्बन्धं

निमित्तीकृत्य प्रवृत्तः ह्रस्वः, स्वनिमित्तसंबुद्धिसंनिपातविघातकस्य संबुद्धिलोपस्य निमित्तं न स्यात्। ततश्च हे कुमारि इत्यादिकं संबुद्धिलोपसहितम् इष्टं रूपं न सिध्येत् इति अस्याः परिभाषायाः अतिव्याप्तिरूपः दोषः आपतति।

**मूलग्रन्थपाठः**

**मा भूदेवम्। ङ्यन्तादित्येवं भविष्यति। न सिध्यति। दीर्घादित्युच्यते। ह्रस्वान्ताच्च न प्राप्नोति। इदमिह सम्प्रधार्यं ह्रस्वत्वं क्रियतां सम्बुद्धिलोप इति। किमत्र कर्तव्यम्। परत्वाद्ध्रस्त्वम्।**

**नित्यः सम्बुद्धिलोपः। कृते ह्रस्वत्वे प्राप्नोति अकृतेऽपि। अनित्यः सम्बुद्धिलोपः। न हि कृते ह्रस्वत्वे प्राप्नोति। किं कारणम्। संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति। एते दोषाः समा भूयांसो वा। तस्मान्नार्थोऽनया परिभाषया।**

**व्याख्या**- अयं परिभाषादोष एव इति दृढीकरणाय एकदेशिशङ्कां प्रदर्श्य समाधत्ते भाष्यकारः- मा भूदेवं... कृते ह्रस्वत्वे प्राप्नोति अकृतेऽपि इति ग्रन्थेन। पूर्वपक्ष्येकदेशिशङ्कायाः अयं भावः- नदि, कुमारि, इत्यादौ सन्निपातपरिभाषाविरोधेन एङ्ह्रस्वात्सम्बुद्धेः इति सम्बुद्धिलोपाप्रवृत्तावपि इष्टरूपाप्राप्तिः नास्ति, यतो हि हे नदि-स् इत्यादौ ङ्यन्तात्परत्वेन 'हलङ्याभ्यो दीर्घात् सुतिस्यपृक्तं हल्' इति सुलोपद्वारा इष्टसिद्धिः भवत्येव इति। 'न सिध्यति' इत्यादिसमाधानस्य अयमाशयः-हल्यङ्यादिसूत्रे 'दीर्घात्' इति पदस्य सत्त्वात् दीर्घङ्यन्तात्परस्य सोरेव लोपः भवति। प्रकृते दीर्घङ्यन्तत्वाभावात् सुलोपः न भवति इति।

**तटस्थः वदति- इदमिह... किमत्र कर्तव्यम् इति**

अस्यायं भावः हेनदि- सु इति दशायाम् अम्बार्थनद्योर्ह्रस्वः इति ह्रस्वः, हल्ङ्याभ्यो दीर्घात् सुतिस्यपृक्तं हल् इति सुलोपश्च इत्येतत् कार्यद्वयं प्राप्नोति। तयोः मध्ये पूर्वं किं कार्यमिति विचारणीयम्। यदि पूर्वं सुलोपः क्रियेत इष्टसिद्धिः भवत्येव खलु इति। तत्र सिद्धान्ती वदति- सुलोपापेक्षया परत्वात् ह्रस्व एव पूर्वं भवति। ततश्च दीर्घाभावात् हल्ङ्याब्भ्य इति सूत्रं न प्रवर्तते। सन्निपातपरिभाषाविरोधात् सम्बुद्धिलोपश्च न भवति एवमनिष्टप्रसङ्गः अस्त्येव इति। एकदेशी वदति- नित्यः सम्बुद्धिलोपः इति। तस्यायं भावः-कृते अकृते च अन्यस्मिन् कार्ये, यस्य प्राप्तिरस्ति तत् नित्यकार्यम्। अकृते एव अन्यस्मिन् कार्ये, यस्य प्राप्तिरस्ति तत् कार्यम् अनित्यकार्यम्। प्रकृते, ह्रस्वे अकृते हल्ङ्यादिसूत्रेण सुलोपः प्रवर्तते, कृते तु 'एङ्-ह्रस्वात्' इत्यनेन सम्बुद्धिलोपः प्रवर्तते। एवं च सम्बुद्धिलोपः नित्यः 'परान्नित्यं बलवत्' इति नियमात् पूर्वं सम्बुद्धिलोप एव भवति इति।

अत्र सिद्धान्ती नैतत् युक्तम् इति वदति 'अनित्यस्सम्बुद्धिलोपः... तद्विघातस्येति' ग्रन्थेन। अस्यायं भावः सम्बुद्धिलोपः कृताकृतप्रसङ्गी न, ह्रस्वे कृते सुलोपो न भवति, दीर्घात्परत्वाभावात्। सम्बुद्धिलोपस्तु सन्निपातपरिभाषाविरोधात् न भवति। अतः सम्बुद्धिलोपः अनित्यः। अतः ह्रस्वापेक्षया सम्बुद्धिलोपस्य बलवत्त्वाभावात् पूर्वं ह्रस्व एव भवति, ततः परिभाषाविरोधात् सम्बुद्धिलोपः न भवति। अतः अयं परिभाषादोष एव इति।

एवं प्रयोजन-दोष परिगणनान्तरं परिभाषा स्वीकार्या न वा? इति विचारयति भाष्यकारः। तत्र एकदेशिमतम् वदति-एते दोषाः समा भूयांसो वा। तस्मान्नार्थोऽनया परिभाषया' ग्रन्थेन। अत्र समत्वं भूयस्त्वं वा कथमिति चेत्, अत्र केचित् वदन्ति वार्तिककारेण षट् भाष्यकारेण त्रीणि इत्याहत्य नव प्रयोजनानि उक्तानि। वार्तिककारेण दोषाः उक्ताः 'कष्टायेति यादेशो दीर्घत्वस्य' इत्यपि दोषनिरूपणपरं वार्तिकमासीत्। तदिदानीं भाष्ये नष्टम्। तथा च नव प्रयोजनानि... नव दोषाः इत्यभिप्रायेण 'समा' इत्युक्तम् इति। वार्तिककारोक्तप्रयोजनमात्रगणनेन 'दोषाः भूयांसः' इत्युक्तम् इति वदन्ति। अन्ये तु- भूयांस इति बहवः, अधिका इत्यर्थः। अत्र आधिक्यकथने न तात्पर्यम्

नापि समत्वकथने, किन्तु परिभाषाश्रयणे दोषा बहवः भवन्ति इत्यत्रैव भाष्यतात्पर्यं वदति।

**मूलग्रन्थपाठः**

**नहि दोषाः सन्तीति परिभाषा न कर्तव्या लक्षणं वा न प्रणेयम्। नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते। न च मृगाः सन्तीति यवा नोप्यन्ते। दोषाः खल्वपि साकल्येन परिगणिताः प्रयोजनानामुदाहरणमात्रम्। कुत एतत्। नहि दोषाणां लक्षणमस्ति। तस्माद् यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्तव्या। प्रतिविधेयं च दोषेषु।**

**व्याख्या**– एवं दोषबहुत्वात् सन्निपातपरिभाषानाश्रयणीया इति एकदेशिनः अभिप्रायः। तत्र सिद्धान्ती समाधानं वदति... नहि दोषाः सन्तीति... प्रतिविधेयं च दोषेषु इति ग्रन्थेन। लोके भिक्षुकभयेन न कोऽपि पाकात् विरमति। मृगभयेन न कोऽपि क्षेत्रे यवादिधान्यवापात् विरमति। एवमेव अतिव्याप्त्यादिदोषभयेन परिभाषाश्रयणस्य वा विधिसूत्रकरणस्य वा त्यागः नोचितः अपि च परिभाषाश्रयणे ये दोषाः ते सर्वेऽपि अत्र परिगणिताः, एतद्विजातीयदोषः कोऽपि परिभाषाया नास्ति। प्रयोजनानि तु सर्वाणि परिगणितानि। परिगणितसजातीयानि तद्विजातीयानि च प्रयोजनानि बहूनि सन्ति। एवं प्रयोजनानां बहुत्वात् दोषाणां च अल्पत्वात् सन्निपातपरिभाषाश्रयणीयैव। तर्हि दोषाणां च का गतिः ? इत्युक्ते अत्र उपायान्वेषणेन दोषाः प्रतिविधेयाः = समाधेयाः, इति सिद्धान्तिनः आशयः।

एतत्परिभाषादोषेषु प्रतिविधानप्रकारः–एतत्परिभाषायाः अनित्यत्वाश्रयणमेव। 'कष्टाय क्रमणे' इति सूत्रे कष्टाय इति निर्देश एव तत्र प्रमाणम्। कष्टशब्दात्–चतुर्थ्येकवचने ङे प्रत्यये, तस्य 'य' इत्यादेशे, 'सुपि च' इति दीर्घे 'कष्टाय' इति भवति। यदि सन्निपातपरिभाषा नित्या स्यात् तथा कष्टङे इत्यत्र अदन्ताङ्ग–ङेप्रत्यययोः सन्निपातमाश्रित्य प्रवृत्तः दीर्घः स्वनिमित्तादन्ताङ्गसन्निपातविघातकदीर्घस्य निमित्तं भवेत्। 'कष्टाय' इति रूपमेव न स्यात्। एवंभूतः पाणिनिप्रयोगः ज्ञापयति– सन्निपातपरिभाषा अनित्या इति। एवं 'न यासयोः' इति सूत्रे या सा इति निर्देशः अपि परिभाषायाः अनित्यत्वे प्रमाणम्। अन्यथा, यद्, तद् शब्दयोः विभक्तिसम्बन्धमाश्रित्य जातं त्यदाद्यत्वं तत्सन्निपातविघातकटापः निमित्तं न भवतीति टापः एव अभावे या सा इति निर्देशः असङ्गत एव।

**बोधप्रश्नः**

४. 'अनन्यप्रकृतिरिति वा' इत्यस्य कोऽर्थः ?

५. 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इत्यस्याः कोऽर्थः ?

६. ग्रामणि कुलमित्यत्र सन्निपातपरिभाषाऽभावे कथं तुको वारणं भवति ?

७. 'न मुटादेशे' इत्यस्य कोऽर्थः ?

८. सन्निपातपरिभाषायाः चत्वारि भाष्योक्तानि उदाहरणानि कानि ?

९. 'तस्य दोषः वर्णाश्रयः प्रत्ययो वर्णविचालस्य' इत्यस्य कः अर्थः ?

१०. या सा इत्यादौ कथं दोषो भवति ?

११. 'नहि मृगाः सन्तीति यवाः नोप्यन्ते' इत्यस्य क आशयः ?

**१२.३.६ निष्कर्षः**

कृन्मेजन्त इति मान्तस्य एजन्तस्य च कृतः अव्ययसंज्ञां करोति। अत्र कृद्यो मान्त इत्यर्थे कारयाञ्चकारेत्यादौ कृदन्तं यन्मान्तमिति पक्षे प्रतामौ प्रतामः इत्यादौ अव्ययसंज्ञायाः

अप्राप्तिः प्राप्तिश्च क्रमशः प्रदर्शिता। किन्तु उभयोः पक्षयोर्न दोषो भवति। प्रथमपक्षे 'आमः' इत्यनेन प्रत्ययमात्रस्य लुक् भवतीति स्वीक्रियते तेन कारयाञ्चकारेत्यादौ न दोषः। कृदन्तं यन्मान्तमिति पक्षे स्वरादिषु प्रशान्शब्दपाठसामर्थ्यात् न प्रत्ययलक्षणेन अव्ययसंज्ञा भवतीति ज्ञापनात् प्रतामौ इत्यादौ न दोषः।

आधये कुम्भकारेभ्यः इत्यादौ अव्ययसंज्ञाव्यावृत्तिः सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति परिभाषया स्यात्। परिभाषायाः प्रयोजनानि-शतानि शकटौ पद्धतौ इयेष उवोष इत्यादौ विभक्तेर्लुगभावः, टापः अप्राप्तिः आमोऽप्राप्तिश्च सन्त्येव। परिभाषायां सत्यां दाक्षिः क्रापयति अदीदपत् या सा ययिवान् अग्निमान् परमवाचे नदि कुमारि इत्यादौ अलोपाप्राप्तिः पुकोऽप्राप्तिः ह्रस्वत्वाभावः टापः अप्राप्तिः आकारलोपाभावः पूर्वनिघाताभावः नदीह्रस्वत्वं च न प्राप्नुवन्ति इति दोषाः भवन्ति। किन्तु दोषेषु प्रतिवधिानं कर्तव्यं परिभाषा च स्वीकर्तव्या इति सिद्धान्तः।

## १२.४ अव्ययीभावश्च (१-१-४१)

### १२.४.१ सोदाहरणं सूत्रार्थसंपादनक्रमः

अव्ययसंज्ञाविधायकमिदं सूत्रम्। स्वरादीति सूत्रात् अव्ययम् इति पदमनुवर्तते। अव्ययीभावः च इति पदच्छेदः।

अनव्ययम् अव्ययं भवति यः समासः, सः = अव्ययीभावः। अत्र 'अव्ययी' इति 'च्वि' प्रत्ययान्तः शब्दः। 'उपाग्नि' इत्यादिपूर्वपदार्थप्रधानसमासस्य अव्ययीभाव इति संज्ञा। तथा च अव्ययीभावसमासः अव्ययसंज्ञः स्यात् इति सूत्रार्थः। उपाग्नि इत्यादीनि उदाहरणानि। अग्नेः समीपम् इत्यर्थे 'अव्ययं विभक्तिसमीप-समृद्धि-व्यृद्ध्यर्थाभावात्ययासम्प्रति-शब्दप्रादुर्भावपश्चात्-यथानुपूर्व्य-यौगपद्य-सादृश्य-सम्पत्ति-साकल्यान्तवचनेषु' इति सूत्रेण उप अग्निशब्दयोः अव्ययीभावसमासे, तस्य प्रकृतसूत्रेण अव्ययसंज्ञा भवति।

### १२.४.२ अव्ययीभावस्य अव्ययत्वे प्रयोजनम्

अव्ययीभावस्य अव्ययत्वे लुक्-मुखस्वरनिषेध-उपचार (=सत्व) निषेधाः प्रयोजनम्। तथाहि-उपाग्नि इत्यादेः अव्ययीभावस्य अव्ययत्वे, तस्मात् उत्पन्नस्य सुपः 'अव्ययादाप् सुपः' इत्यनेन लुक् सिद्ध्यति। एतत् एकं प्रयोजनम्।

अग्नेः समीपम् = उपाग्नि मुखं यस्य इति विग्रहे निष्पन्ने = उपाग्निमुखे 'मुखं स्वाङ्गम् ६-२-१६७' इति सूत्रेण उत्तरपदस्य अन्तोदात्तस्वरः प्राप्नोति। यदि 'उपाग्नि' इति पूर्वपदस्य अव्ययीभावस्य अव्ययसंज्ञा भवति तदा अव्ययात् परत्वेन मुखशब्दस्य 'नाव्यय-दिक्शब्द-गो-महत्-स्थूल-मुष्टि-पृथु-वत्सेभ्यः' इति सूत्रेण अन्तोदात्तस्वरनिषेधः सिध्यति। एतत् द्वितीयं प्रयोजनम्। एवं, पयसः समीपम् = उपपयः, उपपयः (=पयस्समीपस्थं यत्किंचित्) करोति इति विग्रहे कृञ्धातोः अणि, 'उपपयःकार' इति जाते, अत्र विसर्गस्य 'अतः कृकमिकंसकुम्भपात्रकुशा-कर्णीष्वनव्ययस्य' इति सूत्रेण सकारादेशः प्राप्तः, परन्तु 'उपपयः' इति अव्ययीभावस्य अव्ययत्वात् तत्र विसर्गस्य 'अतः कृकमी'ति सूत्रे 'अनव्ययस्य' इति वाक्येन सत्वनिषेधो भवति। एतत् तृतीयं प्रयोजनम्। अव्ययीभावस्य अव्ययसंज्ञा नास्ति चेत् पूर्वोक्ताः सुब्लुक्-मुखस्वरनिषेध-सत्वनिषेधाः नैव सिध्यन्ति।

**परिगणनम्, उदाहरणमात्रं वा-** वार्तिककारेण अव्ययीभावस्य अव्ययत्वे प्रयोजनानि परिगणितानि वा प्रयोजनान्तरोपलक्षणतया कानिचित् प्रदर्शितानि वा इति आशङ्कां भाष्यकारः वदति-'अत्र प्रयोजनानि परिगणितानि' इति। यदि प्रयोजनानां परिगणनं न स्यात् तदा पराङ्गवद्भाव-अकच् मुम् ईत्वान्यपि प्रयोजनानि स्युः। अर्थात् एतत्कार्येष्वपि अव्ययीभावस्य

अव्ययसंज्ञा स्यात्, सा च नेष्टा। अत एव अत्र कात्यायनात् अन्यैः आचार्यैः पराङ्गवद्भावादिषु अव्ययीभावस्य अव्ययत्वप्रतिषेधः उक्तः। तत्संवादेन ज्ञायते वार्तिकोक्तानां प्रयोजनानां परिगणनमेव न तु उदाहरणमात्रम् इति। वार्तिककारप्रदर्शितप्रयोजनेभ्यः अन्यत् प्रयोजनं नास्ति इत्यर्थः।

**परिगणनाभावे दोषाः**– वार्तिककारेण अव्ययीभावस्य अव्ययत्वे प्रयोजनानि परिगणितानि इत्यनङ्गीकारे, पराङ्गवद्भाव-अकच्-मुम्-ईत्वविषयेऽपि अव्ययीभावस्य अव्ययसंज्ञा स्यात्। तथाहि- यथा 'उच्चैरधीयान' इत्यादौ 'सुबामन्त्रिते पराङ्गवत्स्वरे २.१.१' इति सूत्रेण उच्चैश्शब्दस्य विषये प्राप्तस्य पराङ्गवद्भावस्य 'अव्ययानां प्रतिषेधो वक्तव्यः' इति निषेधः प्रवर्तते। ततश्च ''आमन्त्रितस्य च'' इति आद्युदात्तस्वरः न भवति। तथा उपाग्न्यधीयान इत्यादावपि अव्ययीभावस्य पराङ्गवद्भावप्रतिषेधः आमन्त्रितस्वराभावश्च प्राप्नोति। अयमेको दोषः।

एवं यथा, उच्चकैः इत्यादौ अव्ययत्वेन ''अव्यसर्वनाम्नाम् अकच् प्राकटेः'' इति अकच् भवति, तथैव उपाग्नि इत्याद्यव्ययीभावसमासेऽपि अव्ययत्वात् अकच् प्रवर्तेत। ततश्च उपाग्निकम् इत्यस्य स्थाने उपाग्नकि इत्याद्यनिष्टं प्राप्नोति। अयं द्वितीयो दोषः।

यथा आत्मानं दिवा मन्यते (रात्रिः) इत्यर्थे मन्धातोः खश् प्रत्यये दिवामन्य इति जाते दिवाशब्दस्य अव्ययत्वात् ''खित्यनव्ययस्य'' इति सूत्रेण मुमागमः न प्रवर्तते, तथैव उपकुम्भंमन्यः इत्यादौ उपकुम्भादेः अव्यीभावस्यापि अव्ययत्वेन मुम् न प्रवर्तेत। अयं तृतीयो दोषः।

एवम् अदिवा दिवाभूतं = दिवाभूतम् अहः, इत्यादौ दिवाशब्दस्य अव्ययत्वात् च्विप्रत्यये परे ''अस्य च्वौ'' इति सूत्रेण प्राप्तम् ईत्वम् न भवति ''अव्ययस्य च्वावीत्वं नेति वाच्यम्'' इति वार्तिकेन ईत्वनिषेधात् तथा उपकुम्भीभूतम् इत्यत्रापि उपकुम्भ इत्यव्ययीभावस्य अव्ययत्वे ईत्वनिषेधः प्राप्नोति। अयं चतुर्थो दोषः।

अतः अव्ययीभावस्य लुक्-मुखस्वरनिषेध-सत्वनिषेधातिरिक्तकार्यविषये अव्ययत्वं न इति वक्तव्यम्। अर्थात् अव्ययीभावस्य अव्ययत्वे पूर्वोक्तानि त्रीण्येव प्रयोजनानि, प्रयोजनान्तरं नास्ति इति भावः।

**समाधानानि, सूत्रप्रत्याख्यानं च**– परिगणनं चेत् अव्ययीभावस्य अव्ययसंज्ञा न वक्तव्या। यदि अव्ययीभावस्य अव्ययत्वेन लुक्-मुखस्वर-उपचाराः एव प्रयोजनम्। ततः अन्यत् प्रयोजनं च यदि नास्ति तर्हि ''अव्ययीभावश्च'' इति सूत्रमेव व्यर्थम्। यदि एतत् सूत्रं न स्यात् तर्हि लुक् मुखस्वरनिवृत्ति-सत्वनिषेधाः न सिध्येयुः इति न शङ्कनीयम्।

अपदिशम् इत्यादौ अदन्तात् अव्ययीभावात्परस्य सुपः लुग्निषेधाय पाणिनिः ''नाव्ययीभावादतोऽम्त्वपञ्चम्याः'' इति सूत्रं कृतवान्। यदि अव्ययीभावस्य अनव्ययत्वेन ततः परस्य सुपः लुक् न स्यात् तदा तन्निषेधाय सूत्रकरणं व्यर्थमेव स्यात्। एवं व्यर्थं सत्, अव्ययीभावात्परस्य सुपः लुक् भवति इति ज्ञापयति। अतः एतदर्थम् अव्ययसंज्ञा नापेक्षिता।

उपपयःकारः इत्यत्र उपपयः इत्यस्य अव्ययत्वाभावेऽपि सत्वाभावः सिध्यति। ''अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य'' इति सूत्रे ''नित्यं समासेऽनुत्तरपदस्थस्य '' इति सूत्रात् अनुत्तरपदस्थस्य इत्यनुवर्तते। तथा च अतः परस्य उत्तरपदस्थस्य विसर्गस्य सत्वं न इति तस्य अर्थः। उपपयः कारः इत्यत्र विसर्गस्य उत्तरपदस्थत्वात् सत्वं न भवति। एवम् एतत्सूत्राभावेऽपि अव्ययीभावे लुक् सत्वाप्रवृत्तिरूपप्रयोजनद्वयम् अन्यथा सिध्यति।

**न चैकं प्रयोजनं सूत्रारम्भं प्रयोजयति**– उपाग्निमुखः इत्यादौ मुखस्वरनिवृत्तिस्तु यद्यपि फलमस्ति तथापि तस्य एकस्य फलस्य साधनाय ''अव्ययीभावश्च' इति सूत्रेण अव्ययीभावसमाससामान्यस्य अव्ययसंज्ञाकरणं न युक्तम्, किन्तु मुखस्वरनिषेधकसूत्रे एव अव्ययीभावपदं निवेश्य ''नाव्ययीभावाव्यय...दिग्शब्द -गो-महत्-स्थूल-मुष्टि-पृथु-वत्सेभ्यः ६-

२-१६८'' इति सूत्रकरणे अव्ययीभावात्परस्य मुखशब्दस्य स्वरनिषेधः सिध्यति। एकस्य प्रयोजनविशेषस्य साधनाय सामान्यसूत्रकरणं नोचितम्। अत एव भाष्ये न चैकं प्रयोजनं, सूत्रारम्भं (=सामान्यसूत्रारम्भं) प्रयोजयति (=प्रयोजनवन्तं करोति) इत्युक्तम्। एवंप्रयोजनद्वयस्य अन्यथा सिद्धत्वात् स्वरनिषेधसूत्रे अव्ययीभावपदनिवेशेन तृतीयप्रयोजनस्य च सिद्धत्वात् इदं सूत्रं न कर्तव्यमेव इति भाष्याशयः।

**मूलग्रन्थपाठो व्याख्या च**

**( वा. ) अव्ययीभावस्याव्ययत्वे प्रयोजनं लुङ्मुखस्वरोपचाराः**

**व्याख्या**- अव्ययीभावस्य अव्ययत्वे प्रयोजनम् अस्ति इति भाष्ये सिद्धान्तिप्रतिज्ञा। किम् तत् प्रयोजनम्? इति जिज्ञासुप्रश्नः। लुङ्मुखस्वरोपचाराः॥ इति त्रीणि प्रयोजनानि सन्ति इति सिद्धान्तिसमाधानम्।

एकैकप्रयोजनं सोदाहरणं निरूपयति भाष्यकारः लुक् (इत्येतत् उदाह्रियते) उपाग्नि। प्रत्यग्नि इति ग्रन्थेन। अनयोः अव्ययत्वे 'अव्ययादि'ति लुक् सिद्धो भवति। मुखस्वरः इत्येतत् उदाह्रियते- उपाग्निमुखः प्रत्यग्निमुखः इति ग्रन्थेन। अत्र उपाग्नि-प्रत्यग्नि इत्यनयोः अव्ययत्वे 'नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्यः' इत्येष प्रतिषेधः सिद्धो भवति। उपचारः इत्येतत् उदाह्रियते उपपयःकारः। उपपयःकामः इति ग्रन्थेन। अत्र उपपयः-उपपय इत्यनयोः अव्ययत्वे 'अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्ये'ति प्रतिषेधः सिद्धो भवति।

**मूलग्रन्थपाठः**

**किं पुनरिदं परिगणनमाहोस्विदुदाहरणमात्रम्? परिगणनमित्याह। अपि खल्वप्याहुः- यदन्यदव्ययीभावस्याव्ययकृतं प्राप्नोति तस्य प्रतिषेधो वक्तव्यः इति। नाव्ययादव्ययीभावाच्च।**

**व्याख्या**- वार्तिककारेण अव्ययीभावस्य अव्ययत्वे प्रयोजनानि एतावन्त्येव इति परिगणितानि वा प्रयोजनान्तरोपलक्षकतया कानिचित् प्रदर्शितानि वा इति जिज्ञासुः पृच्छति-

किं पुनरिदं परिगणनमाहोस्विदुदाहरणमात्रम्। अत्र प्रयोजनानि परिगणितानि इत्यभिप्रायेण परिगणनमित्याह। अत्र वार्तिककारेण प्रयोजनानि एतावन्त्येव इति परिगणितानि इत्यंशं पाणिनिव्याख्यातृऋष्यन्तरसंवादप्रदर्शनेन द्रढयति- अपि खल्वप्याहु...'यदन्यदव्ययीभावस्याव्ययकृतं प्राप्नोति तस्य प्रतिषेधो वक्तव्यः' इति ग्रन्थेन अत्र भाष्ये अपि खल्वप्याहुः इत्यस्य एवं खल्वाहुः इत्यर्थः।

अव्ययकृतं इत्यस्य अव्ययसंज्ञाप्रयुक्तं कार्यं इत्यर्थः॥ अव्ययीभावस्य अव्ययत्वे लुङ्मुखस्वरोपचारेभ्यः यदन्यत् कार्यं प्राप्नोति तत् जिज्ञासुप्रश्नमुखेन प्रबोध्य तद्द्वारा वार्तिककारोक्तानि प्रयोजनानि परिगणितानि इत्यनङ्गीकारे, दोषं दर्शयति भाष्यकारः-

''किं पुनस्तत्। पराङ्गवद्भावः। पराङ्गवद्भावे अव्ययप्रतिषेधश्चोदितः। उच्चैरधीयान नीचैरधीयानेत्येवमर्थम्। स इहापि प्राप्नोति ...उपाग्न्यधीयान प्रत्यग्न्यधीयान। अकच्व्यव्ययग्रहणं क्रियते। उच्चकैर्नीचकैरित्येवमर्थम्। तदिहापि प्राप्नोति उपाग्निकं प्रत्यग्निकमिति। मुमि अव्ययप्रतिषेधश्चोद्यते दोषामन्यमहर्दिवामन्या रात्रिरित्येवमर्थम्। स इहापि प्राप्नोति - उपकुम्भंमन्यः उपमणिकंमन्य इति। 'अस्य च्वौ' अव्ययप्रितषेधश्चोद्यते दोषाभूतमहर्दिवाभूता रात्रिरित्येवमर्थम्। स इहापि प्राप्नोति उपकुम्भीभूतम् उपमणिकीभूतम्'' इति ग्रन्थेन। एवं, अत्र वार्तिककारोक्तान्येव प्रयोजनानि। परिगणितादन्यत् प्रयोजनं नास्ति इति निरूप्य, एतत्प्रयोजनानि अन्यथा सिद्धानि इति निरूपणेन सूत्रं प्रत्याचष्टे भाष्यकारः-

''यदि परिगणनं क्रियते नार्थोऽव्ययीभावस्याव्ययसंज्ञया। कथं यान्यव्ययीभावस्याव्ययत्वे प्रयोजनानि ? नैतानि सन्ति। यत्तावदुच्यते लुगिति। आचार्यप्रवृत्तिर्ज्ञापयति भवत्यव्ययीभावाल्लुगिति। यदयं 'नाव्ययीभावादत' इति प्रतिषेधं शास्ति। उपचार इति 'अनुत्तरपदस्थस्येति' वर्तते। तत्र मुखस्वर एकः प्रयोजयति। नचैकं योगारम्भं प्रयोजयति। यद्येतावत् प्रयोजनं स्यात् तत्रैवायं ब्रूयात्' नाव्ययादव्ययीभावाच्चे'ति।' इति ग्रन्थेन।

**बोधप्रश्नाः**

११. अव्ययीभावस्य अव्ययत्वे कति प्रयोजनानि उक्तानि ? कानि तानि ?

१२. 'प्रयोजनं लुक्-मुखस्वर-उपचाराः' इत्यस्य विवक्षितः अर्थः कः ?

१३. अव्ययीभावस्य अव्ययत्वे प्रयोजनं लुक्-मुखस्वरोपचाराः इति प्रयोजनानाम् उदाहरणं चेत् को दोषः ?

### १२.४.३ निष्कर्षः

अव्ययीभावश्चेति सूत्रम् अव्ययीभावसमासस्याव्ययसंज्ञां करोति। तस्य अव्ययसंज्ञा-प्रयोजनं खलु उपाग्नि इत्यत्र सुपो लुक्, उपाग्निमुखः इत्यत्र 'नाव्ययदिक्शब्देति' अन्तोदात्तस्वरनिषेधः उपपयःकारः इत्यत्र अतः कृकमीति सूत्रस्थानव्ययस्येति पदेन सत्त्वनिषेधः, इति अस्ति।

वार्तिककारः अव्ययीभावस्य अव्ययत्वे लुङ्मुखस्वरोपचाराः प्रयोजनं यदुक्तवान् तत् परिगणनम् उदाहरणमात्रं वास्ति इति प्रश्ने परिगणनमित्याह। परिगणनाभावे च पराङ्गवद्भावाकच्मुमीत्वविषयेऽपि अव्ययीभावस्य अव्ययसंज्ञा भवेत्। अत्र सिद्धान्तिना उक्तम् - परिगणने अव्ययीभावस्य अव्ययसंज्ञार्थं सूत्रं न कर्तव्यम् इति। परिगणनाभावे अपदिशम् इत्यादौ अदन्तादव्ययीभावात् परस्य सुपः लुङ्निषेधाय 'नाव्ययीभावादतोऽम्' इति सूत्रं पाणिनिः कृतवानेव। उपपयःकार इत्यादौ सत्वाभावाय अतः कृकमीति सूत्रे 'नित्यं समासेऽनुत्तरपदस्थस्य' इति सूत्रात् अनुत्तरपदस्थस्य इत्यनुवर्तनीयम्। तेनात्र अतः परस्य उत्तरपदस्थस्य विसर्गस्य सत्त्वं न भवेत्। उपाग्निमुखः इत्यत्र मुखस्वरनिवृत्तिः फलमस्ति तथापि नैकं प्रयोजनं योगारम्भं प्रयेजयतीति न्यायात् अव्ययीभावश्चेति सूत्रं न करणीयम्। मुखस्वरनिषेधसूत्रे अव्ययीभावपदं निवेश्य मुखस्वरनिवृत्तिः करणीया।

## १२.५ सारांशः

कृन्मेजन्तः इति अव्ययसंज्ञाविधायके सूत्रे प्रश्नो भवति यत् सूत्रस्य कोऽर्थः। कृद्यो मान्तः एजन्तश्च स अव्ययसंज्ञको भवतीति, अथवा कृदन्तं यन्मान्तम् एजन्तश्च तद् अव्ययसंज्ञकं भवतीति। प्रथमे कारयाञ्चकारेत्यादौ अव्ययसंज्ञाऽप्राप्तिर्भवति। द्वितीयपक्षे च प्रतामौ प्रतामः इत्यादौ अपि अव्ययसंज्ञाप्राप्तिर्भवति। किन्तु उभयोःपक्षयोरेकतरस्याप्यभ्युपगमे न दोषः। प्रथमपक्षे' आमः' इति सूत्रेण लिग्रहणं निवर्त्य प्रत्ययमात्रग्रहणकरणेन लिटः लुक् स्यात्। द्वितीयपक्षे च स्वरादि प्रशान् शब्दपाठसामर्थ्यात् प्रत्ययलक्षणेन अव्ययसंज्ञाभावः पाणिनिना ज्ञापितः इति बोध्यम्। तेन प्रतामौ इत्यादौ न दोषः।

आधये कुम्भकारेभ्यः इत्यादौ अव्ययसंज्ञाव्यावृत्तिः सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति परिभाषया स्यात्। परिभाषायाः प्रयोजनानि-शतानि शकटौ पद्धतौ इयेष उवोष इत्यादौ विभक्तेर्लुगभावः, टापः अप्राप्तिः आमोऽप्राप्तिश्च सन्त्येव। परिभाषायां सत्यां दाक्षिः क्रापयति अदीदपत् या सा ययिवान् अग्निमान् परमवाचे नदि कुमारि इत्यादौ अलोपाप्राप्तिः पुकोऽप्राप्तिः ह्रस्वत्वाभावः टापः अप्राप्तिः आकारलोपाभावः पूर्वनिघाताभावः नदीह्रस्वत्वं च न प्राप्नुवन्ति इति

दोषाः भवन्ति। किन्तु दोषेषु प्रतिविधानं कर्तव्यं परिभाषा च स्वीकर्तव्या इति सिद्धान्तः।

अव्ययीभावश्चेति सूत्रम् अव्ययीभावसमास्याव्ययसंज्ञां करोति। तस्य अव्ययसंज्ञा- प्रयोजनं खलु उपाग्नि इत्यत्र सुपो लुक्, उपाग्निमुखः इत्यत्र 'नाव्ययदिक्शब्देति' अन्तोदात्तस्वरनिषेधः उपपयःकारः इत्यत्र अतः कृकमीति सूत्रस्थानव्ययस्येति पदेन सत्त्वनिषेधः, इति अस्ति।

वार्तिककारः अव्ययीभावस्य अव्ययत्वे लुङ्मुखस्वरोपचाराः प्रयोजनं यदुक्तवान् तत् परिगणनम् उदाहरणमात्रं वास्ति इति प्रश्ने परिगणनमित्याह। परिगणनाभावे च पराङ्गवद्भावाकच्मुमीत्वविषयेऽपि अव्ययीभावस्य अव्ययसंज्ञा भवेत्। अत्र सिद्धान्तिना उक्तम् - परिगणने अव्ययीभावस्य अव्ययसंज्ञार्थं सूत्रं न कर्तव्यम् इति। परिगणनाभावे अपदिशम् इत्यादौ अदन्तादव्ययीभावात् परस्य सुपः लुङ्निषेधाय 'नाव्ययीभावादतोऽम्' इति सूत्रं पाणिनिः कृतवानेव। उपपयःकार इत्यादौ सत्वाभावाय अतः कृकमीति सूत्रे 'नित्यं समासेऽनुत्तरपदस्थस्य' इति सूत्रात् अनुत्तरपदस्थस्य इत्यनुवर्तनीयम्। तेनात्र अतः परस्य उत्तरपदस्थस्य विसर्गस्य सत्त्वं न भवेत्। उपाग्निमुखः इत्यत्र मुखस्वरनिवृत्तिः फलमस्ति तथापि नैकं प्रयोजनं योगारम्भं प्रयेजयतीति न्यायात् अव्ययीभावश्चेति सूत्रं न करणीयम्। मुखस्वरनिषेधसूत्रे अव्ययीभावपदं निवेश्य मुखस्वरनिवृत्तिः करणीया।

## १२.६ शब्दावली

| | | | |
|---|---|---|---|
| १. | अनिकारोकारप्रकृतिः | - | इकारश्च उकारश्च इतीकारेकारौ। इकारौकारौ प्रकृतीः यस्य सः इकारोकारप्रकृतिः, न इकारोकार-प्रकृतिः (नञ्समासः) अनि-कारोकारप्रकृतिः। यस्य एचः इकारः उकारः च प्रकृतिः नास्ति सःएजन्तः कृत् अव्ययसंज्ञः भवति। |
| २. | सन्निपातलक्षणः | - | सन्निपातः द्वयोः संश्लेषः, सन्निपातः लक्षणं = निमित्तं यस्य सः। |
| ३. | नाभावः | - | 'ना' इत्यादेशः। |
| ४. | न अधिश्रीयन्ते | - | पाकाय चूह्लिकायां नारोप्यन्ते। |
| ५. | उप्यन्ते | - | वप् + लट्, कर्मणि, प्रथमपुरुषैक-वचने। उप्ताः भवन्ति। |
| ६. | प्रतिविधेयम् | - | निराकरणोपायः। निराकरणीयम्। |

## १२.७ सन्दर्भग्रन्थः

महाभाष्यम्।

## १२.८ सहायकग्रन्थः

१. महाभाष्यप्रदीपव्याख्यानानि
२. महाभाष्यटीका प्रदीपः
३. उद्योतटीका
४. सिद्धान्तकौमुदी
५. परिभाषेन्दुशेखरः

## १२.९ बोधप्रश्नोत्तराणि

१. कृद्योमान्तः इत्यर्थस्वीकारे कारयाञ्चकार इत्यत्र लिट् कृदस्ति किन्तु सः मान्तो नास्ति अतः अव्ययसंज्ञाऽप्राप्तिरूपः दोषोऽत्र उक्तः।

२. प्रतामौ प्रतामः इत्यत्र 'कृदन्तं यन्मान्तम्' इत्यर्थपक्षे दोष उक्तः।

३. न प्रत्ययलक्षणेन अव्ययसंज्ञा भवति इति स्वरादिषु प्रशान्शब्दपाठेन ज्ञाप्यते। तेन द्वितीयपक्षे प्रतामौ इत्यादौ कृदन्तमान्तत्वाभावान्न अव्ययसंज्ञाप्राप्तिरूपः दोषो भवति।

४. अन्या प्रकृतिः यस्य सः अन्यप्रकृतिः, न अन्यप्रकृतिः अनन्यप्रकृतिः इत्यर्थः। अर्थात् यस्य एचः भिन्ना प्रकृतिः न भवेत् तस्यैव अव्ययसंज्ञा भवतीत्यर्थः।

५. सन्निपातः संश्लेषः तन्निमितः यः विधिः सः तद्विघातस्य अर्थात् तं सन्निपातं यो विहन्ति तस्य अनिमित्तं = निमित्तं न भवतीत्यर्थः।

६. सन्निपातपरिभाषाभावे ग्रामणि कुलमित्यत्र 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया बहिरङ्गस्य ह्रस्वत्वस्य असिद्धत्वात् तुकोऽप्रात्या एव वारणं भवति।

७. टाया आदेशः टादेशः अथवा टायाम् आदेशः टादेशः तस्मिन् मुत्वं न असिद्धमिति 'न मुटादेशे' इत्यस्यार्थः। इत्थं टाया आदेशे ना परे मुत्वस्यासिद्धत्वात् 'सुपि चेति' दीर्घो न स्यात्। एतदर्थं सन्निपातपरिभाषा न आवश्यिकी।

८. शतानि शकटौ पद्धतौ इयेव–उवोषेति भाष्योक्तानि सन्निपातपरिभाषाप्रयोजनानि सन्ति।

९. तस्य सन्निपातलक्षणवचनस्य दोषः वर्णाश्रयः प्रत्ययः वर्णविचालस्य = वर्णलोपस्य अनिमित्तं भवति इत्यर्थः अस्ति। तेन दाक्षिः प्लाक्षिः इत्यादिर्न सिद्ध्येदिति दोषः।

१०. यद् सु तद् सु इत्यत्र त्यदादिविभक्तिसन्निपातेन दस्य त्यदादीनामः इति अत्वं विहिम्, ततष्टाप्, सुलोपो जायते। अत्र त्यदादिविभक्तिसन्निपातनिमित्तम् अत्वं टापि निमित्तं न स्यात् यतो हि टापि सति सुलोपे जाते सन्निपातविघातो भवति। अतः परिभाषास्वीकारेऽत्र दोषो जायते।

११. मृगकर्तृकभक्षणभयात् यथा यवानां वपनं न वार्यते तथैव सन्निपातपरिभाषास्वी–कारेण दोषभयात् परिभाषा न कर्तव्या इति न समीचीनम्, परिभाषा तु कर्तव्या एव।

१२. अव्ययीभावस्य अव्ययत्वे 'लुङ्मुखस्वरोपचाराः' इति त्रीणि प्रयोजनानि उक्तानि।

१३. अव्ययीभावसमासस्य अव्ययसंज्ञायाः प्रयोजनम् उपाग्नि इत्यत्र अव्ययादाप्सुपः इति सुपो लुक्, उपाग्निमुखः इत्यादौ 'नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टि–पृथुवत्सेभ्यः' इत्येषः मुखरूपोत्तरपदान्तोदात्तत्वस्य प्रतिषेधः, उपपयःकारः इत्यादौ विसर्गस्य सत्वप्राप्तेः अनव्ययस्येति वचनान्निषेधः च भवति इति अर्थः विवक्षितः।

१४. यदि अव्ययीभावस्य लुङ्मुखस्वरोपचाराः प्रयोजनानामुदाहरणमात्रं भवेत् तदा उच्चैरधीयान इत्यत्र यथा पराङ्गवद्भावप्रतिषेधः उक्तः स उपाग्न्यधीयान इत्यत्रापि स्यात्। उच्चकैरितिवत् उपाग्निकम् इत्यादौ अपि अकच् स्यात्, दोषामन्यमितिवत् अव्ययस्य मुमो निषेधः उपकुम्भंमन्य इत्यत्रापि स्यात्, अस्य च्वौ इति अव्ययस्य

ईत्वं न भवति, स निषेधः उपकुम्भीभूतम् इत्यादौ अपि स्यात् इति दोषो भवेत्। परिगणनमात्रेण एतेषु अव्ययत्वाभावान्न दोषो जायते। [कृन्मेजन्तः (१-१-३८) अव्ययीभावश्च (१-१-३९)]

## १२.१० अभ्यासप्रश्नाः

**(क) लघूनि उत्तराणि प्रदेयानि-**

१. कृदन्तं यन्मान्तमित्यर्थः कथं भवति?

२. कुम्भकारेभ्यः इत्यत्र अव्ययसंज्ञा कथं न भवति?

३. वृत्रहभिः इत्यत्र तुको वारणं कथं भवति?

४. अमुना इत्यत्र तुको वारणं कथं भवति?

५. इयेष इत्यत्र परिभाषाऽभावे को दोषः?

६. ययिवान् इत्यत्र परिभाषासत्त्वे कः दोषो भवेत्?

७. उपचारः इत्यस्य किमुदाहरणम्?

८. उपाग्न्यधीयान इत्यत्र कस्य निषेधः प्राप्तो भवति?

९. अव्ययीभावश्च इत्यस्य एकमात्रं प्रयोजनं किमवशिष्यते?

**(ख) व्याख्या कार्या-**

१. किं पुनरिदं परिगणनम् आहोस्विदुदाहरणमात्रम्।

२. नदीह्रस्वत्वं सम्बुद्धिलोपस्य।

३. पुग् ह्रस्वत्वस्यादीदपत्।

**(ग) निबन्धात्मकमुत्तरं लिखतु-**

१. सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येत्यस्याः, भाष्योक्तानि आवश्यकप्रयोजनानि कानि

२. सन्निपातपरिभाषासत्वे कुत्र कुत्र दोषाः भवन्ति?

३. अव्ययीभावश्चेति सूत्रं कथं खण्डितम्?

---◆---

## त्रयोदशः पाठः (शि सर्वनामस्थानमित्यतः अशिष्यो वा विदितत्वात् इति यावत्)

**पाठसंरचना**

१३.१ प्रस्तावना
१३.२ उद्देश्यम्
१३.३ शिसर्वनामस्थानम्, सुडनपुंसकस्य (१-१-४२-४३)
१३.३.१ सूत्रविमर्शः
१३.३.२ शि सर्वनामस्थानं सुडनपुंसकस्येति न्यासे दोषोद्भावनम्, अनपुंसकस्येत्यत्र नञर्थविचारश्च
मूलग्रन्थपाठः व्याख्या च
(शि सर्वनामस्थानं ... अश्राद्धभोजी ब्राह्मणः इति)
बोधप्रश्नः
१३.३.३ निष्कर्षः
१३.४ नवेति विभाषा-अशिष्यो वा विदितत्वात्' इत्यन्तो भागः (१-१-४४)
१३.४.१ सूत्रविमर्शः
१३.४.२ विभाषासंज्ञायामर्थसंज्ञाकरणविचारः
मूलग्रन्थपाठः व्याख्या च
(नवेति विभाषायाम् ... नवेति यद्गम्यते नवेति यत्प्रतीयते)
बोधप्रश्नः
१३.४.३ समानशब्दानां विभाषासंज्ञायाः प्रतिषेधविचारः
मूलग्रन्थपाठः व्याख्या च
(समानशब्दप्रतिषेधः ... सर्वादीनि भवन्ति विभाषेति)
बोधप्रश्नः
१३.४.४ विधेः अनित्यत्वानुपपत्तिप्रदर्शनम्, समाधानञ्च
मूलग्रन्थपाठः व्याख्या च
(विध्यनित्यत्वमनुपपलं ... इति करणोऽर्थनिर्देशार्थ इत्युक्तम्)
बोधप्रश्नः
१३.४.५ विभाषाप्राप्तेरेव साधुत्वमुतान्यस्यापि इति विचारः, सूत्रखण्डनञ्च
१३.४.६ नवेति सूत्रप्रत्याख्यानम्
मूलग्रन्थपाठः व्याख्या च
(साध्वनुशासने ... उभयथा, वा, एकेषाम् इति)
बोधप्रश्नः
१३.४.७ निष्कर्षः
१३.५ सारांशः
१३.६ शब्दावली
१३.७ सन्दर्भग्रन्थः
१३.८ सहायकग्रन्थः
१३.९ बोधप्रश्नोत्तराणि
१३.१० अभ्यासप्रश्नाः

### १३.१ प्रस्तावना

पाणिनीयव्याकरणे सूत्राणि षड्विधानि वर्तन्ते-संज्ञा-परिभाषा-विधि-नियमातिदेशाधिकार-

भेदात्। तेषु सूत्रेष्वत्र पाठे संज्ञासूत्राणां विवेचनं वयं कुर्मः। किन्तावत् संज्ञात्वमिति जिज्ञासायामाचार्यैः उक्तम्—

(शि सर्वनामस्थानमित्यतः अशिष्यो वा विदितत्वात् इति यावत्)

वृत्तिपरिच्छेदकत्वं शक्तिनियामकत्वं वा संज्ञासूत्रत्वम्। अष्टाध्यायिसूत्रक्रमानुसारं सूत्राणां व्याख्यानात्मके महाभाष्ये सर्वनामस्थानसंज्ञाविधायकं सूत्रद्वयं वर्तते– 'शि सर्वनामस्थानम्', 'सुडनपुंसकस्य' च इति। एतयोः सूत्रयोर्व्याख्यां कुर्वन् महाभाष्यकारः कृतायाः सर्वनामस्थानसंज्ञायाः फलमप्यत्र प्रादर्शयत्।

अस्मिन् पाठे विभाषासंज्ञाविषये वयं ज्ञास्यामः। विभाषा इत्यस्य सामान्योऽर्थो विकल्पो भवति। परं पाणिनीयव्याकरणे इयमेका संज्ञा अस्ति। अस्याः संज्ञाया निषेधो विकल्पश्चेति अर्थद्वयं भवति– 'न वेति विभाषा'। अनेन सूत्रेण 'न' 'वा' इत्येतयोः शब्दयोर्न विभाषासंज्ञा क्रियतेऽपि तु एतयोरर्थयोः। शब्दयोर्विभाषासंज्ञा कथं न भवति? अर्थयोः कथं भवति?

अर्थनिर्देशार्थमत्र किं पदं प्रयुक्तम्। किं लोकेऽप्येवं भवति अथवा न। अत्रैव समानशब्दानां 'नवा कुडिका' इत्यादौ प्रयुक्तानां विभाषासंज्ञावारणाय किं विचारितम्, किं शब्दानामभिसम्बन्धेन अर्थभेदं कृत्वा भेदः प्रदर्शयितव्यः अथवाऽन्योपायः आश्रयणीयः, अनेन विभाषासंज्ञाकरणेन विधेरनित्यत्वं नोपपद्यते प्रतिषेधकरणादित्यस्य समाधानं 'सिद्धं तु प्रसज्यप्रतिषेधात्' इत्यादिना क्रियते। विभाषेति महती संज्ञाअस्ति, तया विधेरनित्यत्वं साध्यते। विभाषा प्राप्ताऽप्राप्तोभयत्रभेदेन त्रिविधा भवति। तत्र अप्राप्ते निषेध्यस्याभावात् वेत्यंशेन विकल्पविधानं भवति, प्राप्तस्थले 'न वा' इत्युभयमुपस्थितं भवति। 'न' इत्यनेन निषेधे कृते 'वा' इत्यनेन विकल्पो विधीयते।

अत्र विधिप्रतिषेधवचनयोः यौगपद्यं कथं सम्भवति? किञ्च सूत्रमिदं कर्तव्यं न वा? किं लोकतः विभाषासंज्ञा शास्त्रेऽपि सिद्धा भविष्यतीत्यादिविषयाः अत्र विवेच्यन्ते।

## १३.२ उद्देश्यम्

**अनेन पाठेन भवन्तः–**

- छात्राः संज्ञासूत्रस्य भेदान् जानीयुः।
- सर्वनामस्थानसंज्ञा कुत्र भवति इत्यस्य ज्ञानं प्राप्स्यन्ति।
- सर्वनामस्थानसंज्ञायाः किं प्रयोजनम् इति जिज्ञासायाः निवृत्तिः भवेत्।
- सर्वनामस्थानसंज्ञाया अभावे को दोषः इति चिन्तनविकासः।
- सर्वनामस्थानसंज्ञायाः सूत्रद्वयकरणे को हेतुरिति परिज्ञानम्।
- नञर्थः कः कतिविधश्च इत्यस्य परिज्ञानं करिष्यन्ति।
- 'विभाषा' संज्ञा कस्य क्रियते? तत्करणे किं फलम् एतत्सर्वं जानीयुः।
- विभाषासंज्ञायाः परिचयं प्राप्स्यन्ति।
- विभाषासंज्ञायाः फलस्य ज्ञानं प्राप्स्यन्ति।
- महत्याः संज्ञायाः प्रयोजनस्य ज्ञानं भविष्यति।
- विभाषायाः प्रकारस्य ज्ञानम् अवाप्स्यन्ति।

## १३.३ शिसर्वनामस्थानम् (१/४/४२-४३)

### १३.३.१ सूत्रविमर्शः

शि इति प्रथमैकवचनं संज्ञिपदं, सर्वनामस्थानमिति संज्ञापदम्। सुडनपुंसकस्येत्यत्र सुट् इति प्रत्याहारः। सु औ जस् अम् औट् इति स्वादिपञ्चवचनानि सन्ति। सुट् इति संज्ञिपदम्। शि सर्वनामस्थानम् इत्यतः अनुवृत्तं सर्वनामस्थानमिति संज्ञापदमस्ति। न नपुंसकस्य अनपुंसकस्येति नञ्समासः। नपुंसकभिन्नं सुट् सर्वनामस्थानसंज्ञं भवतीत्यर्थः। अनपुंसकस्येति निषेधात् नपुंसके जश्शसोः स्थाने विहितस्य 'शि' इत्यस्य सर्वनामस्थानसंज्ञा अप्राप्ता शि सर्वनामस्थानमिति सूत्रेण विधीयते।

सर्वनामस्थानसंज्ञायाः फलम्— सर्वनामस्थाने चाऽसम्बुद्धौ इत्यादिना क्रियमाणं कार्यं, नपुंसकस्य झलचः इत्यादिना विधीयमानश्च नुमादिः। उदाहरणम्— राजानौ, महान्तौ, ज्ञानानि इत्यादीनि सन्ति।

### १३.३.२ 'शि सर्वनामस्थानं सुडनपुंसकस्येति न्यासे दोषोद्भावनम्, अनपुंसकस्येत्यत्र नञर्थविचारश्च

शि सर्वनामस्थानं सुडनपुंसकस्येति न्यासे अनपुंसकस्येत्यत्र यदि नञोऽर्थः प्रसज्यप्रतिषेधो भवेत्तदा सूत्रस्यायम् अर्थो लभ्यते—सुट् = स्वादिपञ्चवचनं सर्वनामस्थानसंज्ञां लभते, परं सा संज्ञा नपुंसकस्य न भवति इति।

इत्थं नपुंसके सुटः सर्वनामस्थानसंज्ञानिषेधे जसः स्थाने आदिश्यमानस्य 'शि' इत्यस्य सर्वनामस्थानसंज्ञाया निषेधः प्राप्नोति। यतोहि 'जस्' तु सुटोऽन्तर्भूतम्। तस्य स्थाने आदिष्टं 'शि' नपुंसके वर्तते। तेन कुण्डानि तिष्ठन्ति। वनानि तिष्ठन्ति इत्यादौ कुण्डवनशब्दाभ्यां नपुंसके जसः स्थाने 'शि' आदेशो भवति। तत्स्थानिवद्भावेन सुड्भावं लभते। 'अनपुंसकस्य' इत्यनेन सर्वनामस्थानसंज्ञाया निषेधे सति ''नपुंसकस्य झलचः' इत्यनेन नुमि 'सर्वनामस्थाने चासंबुद्धौ' इत्यनेनोपधादीर्घो न भवितुं शक्नोति इत्याक्षेपो जायते।

प्रसज्यप्रतिषेधे असमर्थसमासरूपः अन्योऽपि दोषः— प्रसज्यप्रतिषेधे नञः क्रियया सहान्वयो भवति तेन नपुंसकस्य न भवतीत्यर्थो भवति। नपुंसकपदेन सह नञोऽन्वयाभावात् सामर्थ्याभावाच्च 'अनपुंसकस्य' इति नञ्समासो न निष्पद्यते। 'समर्थः पदविधिः' इति सूत्रानुसारं पदद्वये मिथः सम्बन्धरूपसामर्थ्य एव समासो विधीयते। तस्माद्दते समासे जाते तदसमर्थसमासः कथ्यते इत्यपर आक्षेपो जायते।

उपर्युक्तस्याक्षेपस्य समाधानम्— प्रसज्यप्रतिषेधे हि ये दोषाः प्रदर्शितास्तेषां समाधानं 'नाप्रतिषेधात्' इति कथनेन क्रियते।

आशयोऽस्ति यत् 'अनपुंसकस्य' इति पदे प्रसज्यप्रतिषेधः न स्वीकर्तव्योऽपि तु पर्युदास एव। न नपुंसकम् अनपुंसकम्। तस्य अनपुंसकस्य नपुंसकभिन्नस्येत्यर्थः। नपुंसकस्य सुटः सर्वनामस्थानसंज्ञा न भवति इत्यर्थमनादृत्य नपुंसकभिन्नस्य सुटः सर्वनामस्थानसंज्ञा भवतीत्यर्थः कर्त्तव्यः। एतदर्थस्वीकारे एतत्सूत्रं नपुंसके सर्वनामस्थानसंज्ञां न निषेत्स्यति अपितु नपुंसकभिन्ने सर्वनामस्थानसंज्ञां विधास्यति। तस्यां स्थितौ तन्नपुंसकभिन्नं द्रक्ष्यति न नपुंसकम्। नपुंसके नास्य प्रवृत्तिः। यदि केनाप्यन्येन नपुंसके सर्वनामस्थानसंज्ञा प्राप्नोति चेद् भवतु नाम। अत्र नपुंसके शिसर्वनामस्थानमिति जश्शसोः स्थाने जातस्य शि इत्यस्य सर्वनामस्थानसंज्ञा भविष्यति।

समाधानान्तरमपि सम्भवति 'अप्राप्तेर्वा' इति। अनन्तरस्य विधिर्वाभवति प्रतिषेधो वेति न्यायात् अव्यवहिता सुटः प्राप्ता पूर्वा प्राप्तिरप्रतिषिद्धा भविष्यति।

संज्ञा अनपुंसकस्येति पदेन निषिध्यते। अर्थात् 'अनपुंसकस्य' इत्यत्र प्रसज्यप्रतिषेधस्वीकारेऽपि दोषो न भविष्यति। 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' अनया

(शि सर्वनामस्थानमित्यतः अशिष्यो वा विदितत्वात् इति यावत्)

परिभाषया 'नपुंसकस्य न भवति' इत्यर्थेन 'सुट्' इत्यंशेन प्राप्तां सर्वनामस्थानसंज्ञाम् एव प्रतिषेधति। नतु पूर्वां व्यवहितां 'शि सर्वनामस्थानम्' इत्यनेन प्राप्तां सर्वनामस्थानसंज्ञां प्रतिषेधति। तेन 'सुट्' इत्यंशेन प्राप्तायाः सर्वनामस्थानसंज्ञायाः प्रतिषेधेऽपि कुण्डानि वनानि इत्यत्र 'शि सर्वनामस्थानम्' इत्यनेन प्राप्ता सर्वनामस्थानसंज्ञा स्याद् एव।

पुनर्भवत्याशङ्का– सुडनपुंसकस्य १।१।४२, शि सर्वनामस्थानम् १।१।४१। इत्यनयोः सुडनपुंसकस्य इत्यस्य परत्वात् 'शि सर्वनामस्थानम् इत्यस्य बाधः स्यात्। एवम् 'अनपुंसकस्य' इत्यनेन प्रतिषेधात् कुण्डानि वनानि इत्यत्र पुनरपि सर्वनामस्थानसंज्ञा भवितुं नार्हति।

अस्या आशङ्कायाः समाधानाय उच्यते– ''नोत्सहते प्रतिषिद्धा सती बाधितुम्'' इति। 'सुट्' निमित्तिका सर्वनामस्थानसंज्ञा तु 'अनपुंसकस्य' इत्यनेन प्रतिषिध्यते। स्वयं प्रतिषिद्धा सा पूर्ववर्तिनीं 'शि सर्वनामस्थानम्' इत्यनेन प्राप्तां संज्ञां कथं बाधेत? स्वयं रक्षितुकामा सा कथमन्यं बाधेत? अजां भक्षयितुकामः कोऽपि शृगालः पुरस्तात् सिंहमवलोक्य सिंहाद् भीतः अजां भक्षयितुं न प्रवर्तते। अजाया भक्षणापेक्षया स्वीया रक्षा बलवती। अतः कुण्डानि, वनानि, इत्यत्र 'शि सर्वनामस्थानम्' इत्यनेन सर्वनामस्थानसंज्ञा अव्याहतैव स्थास्यति। वक्तुं शक्यम् अपवादविषयपरिहारेणास्याः प्रवृत्तिः भवेत्।

प्रसज्यप्रतिषेधे असमर्थसमासस्य यो दोष आपादितः स यद्यपि उचित एव तथापि 'अनपुंसकस्य' इति वचनसामर्थ्येन क्वचिल्लक्ष्यानुरोधेन प्रसज्यप्रतिषेधेऽपि नञ्समासो भवतीति ज्ञापितं स्यात्। अन्यथा ''सुट् स्त्रीपुंसयोः'' इति सूत्रयेत् पाणिनिः। 'अनपुंसकस्य' इति निर्देशः प्रसज्यप्रतिषेधेऽपि नञ्समासो भवतीति ज्ञापयति। प्रसज्यप्रतिषेधे नञ्समासस्य सन्त्यनेकानि प्रयोजनानि उक्तानि। यथा— असूर्यंपश्यानि मुखानि। अपुनर्गेयाः श्लोकाः। अश्राद्धभोजी ब्राह्मणः। असूर्यंपश्यानि इत्यस्य सूर्यं न पश्यन्तीत्यर्थः। अत्र नञो दृशिनाऽन्वितत्वेन सूर्यशब्देनान्वयाभावादसमर्थसमासः।

'अपुनर्गेया' इत्यस्य ''पुनः गातुं योग्या नास्ति'' इत्यर्थः। अश्राद्धभोजी— श्राद्धं भोक्तुं शीलो नास्ति इत्यर्थः। एवम् अन्यान्यपि उदाहरणानि बोध्यानि।

**मूलग्रन्थपाठो व्याख्या च**

**(वा.) शि सर्वनामस्थानम् सुडनपुंसकस्येति चेज्जसि शि प्रतिषेधः**

**शि सर्वनामस्थानं सुडनपुंसकस्येति चेज्जसि शिप्रतिषेधः प्राप्नोति। कुण्डानि तिष्ठन्ति, वनानि तिष्ठन्ति।**

**व्याख्या—** शि = जस्शसोः स्थाने (नपुंसके) आदिष्टः, सर्वनामस्थानम् = सर्वनामस्थान-संज्ञकम्, सुट् = स्वादिपञ्चवचनानि (सु, औ, जस्, अम्, औट्), अनपुंसकस्य = नपुंसकभिन्नस्य पुँल्लिङ्गस्त्रीलिङ्गयोर्वा सर्वनामस्थानं भवतीति, चेत् = कर्त्तव्ये, जसि शि = जसः स्थाने जातस्य शि इत्यस्य सर्वनामस्थानसंज्ञायाः, प्रतिषेधः = निवृत्तिः, प्राप्नोति इति प्रथमः आक्षेपः।

नपुंसकस्य सुटः सर्वनामस्थानसंज्ञा न भवति चेत् तदा नंपुसकलिङ्गे जसः स्थाने आदिष्टस्य 'शि' इत्यस्य सर्वनामस्थानसंज्ञा प्रतिषिध्यति। तेन 'कुण्डानि' 'वनानि' इत्यादिषु उदाहरणेषु जसः स्थाने आदिष्टस्य 'शि' इत्यस्य सर्वनामस्थानसंज्ञाभावात् 'नपुंसकस्य झलचः' इति सूत्रेण प्राप्तः नुम् न भविष्यति तथा च ''सर्वनामस्थाने चाऽसम्बुद्धौ'' इति सूत्रेण य उपधादीर्घो भवति सोऽपि न भविष्यति। तथा च कुण्डानि वनानि इत्यादिरूपाणि न सेत्स्यन्ति।

**मूलग्रन्थपाठः**

**असमर्थसमासश्चायं द्रष्टव्यः- अनपुंसकस्येति। न हि नञो नपुंसकेन सामर्थ्यम्, केन तर्हि? भवतिना। न भवति नपुंसकस्येति।**

**व्याख्या—** अपर आक्षेपो भवति यत्-असमर्थसमासः = नञः तिङन्तेन यदा अन्वयो भवति तदा असमर्थसमासः भवति इति द्रष्टव्यः = चिन्तनीयः, अनपुंसकस्येति पदे = नपुंसकस्य न भवति इत्यर्थकरणे असमर्थसमासो भवति, न हि नञो = 'नञ्' इति अव्ययस्य, नपुंसकेन = नपुंसकशब्देन सह, सामर्थ्यम् = समासस्य शक्तिः अस्ति, केन तर्हि? = केन शब्देन सामर्थ्यमस्ति इति प्रश्ने— भवतिना = भूधातुना वर्तते। न भवति नपुंसकस्येति = नपुंसकस्य सर्वनामस्थानसंज्ञा न भवति इत्येवमन्वयः करणीयः।

**मूलग्रन्थपाठः**

**यत्तावदुच्यते-शि सर्वनामस्थानं सुडनपुंसकस्येति चेज्जसि शि प्रतिषेधः इति।**

**( वा. ) नाप्रतिषेधात्**

**नायं प्रसज्यप्रतिषेधो— नपुंसकस्य नेति।। किं तर्हि? पर्युदासोऽयम्— यदन्यन्नपुंसकादिति। नपुंसके न व्यापारः यदि केनचित् प्राप्नोति, तेन भविष्यति। पूर्वेण च प्राप्नोति।**

नञः अर्थःपर्युदासः इति पक्षेण समाधानं क्रियते— यत्तावद् उच्यते = यद् पूर्वम् आक्षिप्तम्-शि सर्वनामस्थानं सुडनपुंसकस्येति चेज्जसि शि प्रतिषेधः इति, तस्य आवश्यकता नास्ति। यतोहि

नायं प्रसज्यप्रतिषेधः = अनपुंसकस्येत्यत्र नञः अर्थः प्रसज्यप्रतिषेधो नास्ति, ''नपुंसकस्य न'' इत्येवंविधः। किं तर्हि = तदा किम् इति जिज्ञासायामुच्यते—

पर्युदासोऽयम् = पर्युदासरूपः, यद्अन्यद् नपुंसकाद् इति = नपुंसकादन्यं नपुंसकभिन्नं तत्सदृशं वा इत्यस्ति। नपुंसके = नपुंसकशब्दे, न = न हि, व्यापारः = प्रवृत्तिः, यदि केनचित् = केनचिद् विशेषनियमेन, प्राप्नोति = भवति, तेन भविष्यति। पूर्वेण = शि सर्वनामस्थानम् इति सूत्रेण, प्राप्नोति नपुंसकलिङ्गे जसः स्थानिनः 'शि' इत्यस्य, प्राप्नोति = सर्वनामस्थानसंज्ञा प्राप्नोति। सा भविष्यति।

**मूलग्रन्थपाठो व्याख्या च**

**( वा. ) अप्राप्तेर्वा**

**अथवा— अनन्तरा या प्राप्तिः सा निषिध्यते। कुत एतत्? अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति। पूर्वा प्राप्तिरप्रतिषिद्धा, तया भविष्यति।**

**व्याख्या—** प्रसज्यप्रतिषेधेऽपि न दोषः इत्यपरं समाधानं वक्ति—

अथवा, अनन्तरा = अव्यवहिता, या प्राप्तिः = सर्वनामस्थानसंज्ञायाः, प्राप्तिः = उपस्थितिः, सा = सुट् इत्यनेन या उपस्थितिः सा, निषिध्यते = अनपुंसकस्येति बाध्यते। कुत एतत्? = अत्र को नियमः?

''अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा'' इति परिभाषा अस्ति। पूर्वा प्राप्तिः = पूर्वसूत्रेण सर्वनामस्थानसंज्ञाप्राप्तिः, अप्रतिषिद्धा = प्रतिषेधरहिता, तया = परिभाषया, भविष्यति = शि सर्वनामस्थानमिति सर्वनामस्थानसंज्ञा भविष्यत्येव। अन्यथा सूत्रं निरवकाशं स्यात्।

**मूलग्रन्थपाठः**

**ननु चेयं प्राप्तिः पूर्वां प्राप्तिं बाधते।। नोत्सहते प्रतिषिद्धा सती बाधितुम्।।**

(शि सर्वनामस्थानमित्यतः अशिष्यो वा विदितत्वात् इति यावत्)

**यदप्युच्यते असमर्थसमासश्चायं द्रष्टव्यः इति।। यद्यपि वक्तव्यः। अथवा एतर्हि बहूनि प्रयोजनानि। कानि? असूर्यंपश्यानि मुखानि। अपुनर्गेया श्लोकाः। अश्राद्धभोजी ब्राह्मणः इति।**

**व्याख्या—** ननु चेयं प्राप्तिः = उत्तरसूत्रेण कृता सर्वनामस्थानसंज्ञा, पूर्वां प्राप्तिं = पूर्वसूत्रेण प्राप्तां संज्ञां, बाधते = परत्वात् बाधिष्यते इत्यर्थः। इत्याक्षेपो भवति। तत्रोच्यते—

न प्रवर्तते, प्रतिषिद्धा = अन्येन निषिद्धा सती, बाधितुम् = बाधनार्थम्। वस्तुतः शि सर्वनामस्थानमिति अपवादः। अपवादविषयस्य परिहारेण अस्याः प्रवृत्तिः स्यात्। स्वयं नपुंसके अप्रवर्तमाना कथं नपुंसकादेशे श्यां बाधितुं प्रवृत्ता भवेदित्याशयः।

असमर्थसमासरूपदोषस्य विषये समाधानं प्रस्तौति— यदपि उच्यते इति = यत् कथ्यते, असमर्थसमासः इति, द्रष्टव्यः = स्वीकर्तव्यः इति। यद्यपि वक्तव्यः = अस्ति असमर्थसमासः इति स्वीकर्तव्यः। अथवा एतर्हि = वा इदानीम्, बहूनि प्रयोजनानि = असमर्थसमासस्वीकारस्य अनेकानि प्रयोजनानि भवन्ति। कानि? इत्युक्ते असूर्यंपश्यानि मुखानि अपुनर्गेयाः श्लोकाः, अश्राद्धभोजी ब्राह्मणः = एतेषु सर्वेषु नञः सम्बन्धः क्रियया अस्ति। सूर्यं न पश्यन्ति, पुनः न गेयाः, श्राद्धं न भुङ्क्ते तच्छीलः इति। सर्वत्र असामर्थ्यं तथाऽपि समासो भवति। अस्मिन् सूत्रे स्त्रीपुंसयोरिति वक्तव्ये अनपुंसकस्येति वचनं ज्ञापयति— प्रसज्यप्रतिषेधेऽपि नञः समासो भवतीति।

**बोधप्रश्नः**

१. सर्वनामस्थानसंज्ञाविधायकानि कति सूत्राणि? कानि च तानि?

२. 'सुट्' इत्यत्र कति विभक्तयः? कास्ताः?

३. पर्युदासस्य प्रसज्यप्रतिषेधस्य च किं लक्षणम्?

**१३.३.४ निष्कर्षः**

सर्वनामस्थानसंज्ञाविधायकं 'शि सर्वनामस्थानम्' सुडनपुंसकस्य' इति सूत्रद्वयं वर्तते। तत्र शि सर्वनामस्थानम् इत्यनेन 'शि' इत्यस्य सर्वनामस्थानसंज्ञा। तत्र शि-स्थानिकस्य जसः सुटि अन्तर्भूतत्वात् 'सुडनपुंसकस्य' इत्यनेन जसः सर्वनामस्थानसंज्ञायाः प्रतिषेधः कर्त्तव्यः इत्याक्षेपो जायते।

''सुडनपुंसकस्य' इत्यत्र 'अनपुंसकस्य' इत्यत्र नञ् प्रसज्यप्रतिषेधः स्वीक्रियते। प्रसज्यप्रतिषेधे नञः क्रियया सहान्वयाद् नपुंसकपदेनान्वयाभावाच्चासमर्थसमासः स्यात्। तेन नपुंसकस्य सर्वनामस्थानसंज्ञा न भवतीत्यर्थो भवति इत्यपर आक्षेपो भवति।

**अत्र समाहितम्—** अनपुंसकस्येति पर्युदासः अस्ति। तेन नपुंसकभिन्नेऽस्य व्यापारः स्यात् नपुंसके शि सर्वनामस्थानमिति पूर्वसूत्रेण प्राप्तिः न निषिध्यते। किञ्च 'अनन्तरस्य विधिर्वाभवति प्रतिषेधो वा' इति न्यायात् पूर्वसूत्रस्य न निषेधः। किञ्च अनपुंसकस्येति पदेन असमर्थसमासो भवतीति ज्ञाप्यते। तेन असमर्थसमासरूपः दोषः न गणनीयः।

असमर्थसमासस्यापि भवन्ति बहूनि प्रयोजनानि। अतो लक्ष्यानुरोधादसमर्थसमासः स्वीक्रियत एव।

## १३.४ न वेति विभाषा-१/१/४४ ('अशिष्यो वा विदितत्वात्' इति यावत्)

### १३.४.१ सूत्रविमर्शः

संज्ञासूत्रेषु इदं विभाषासंज्ञासूत्रम्। न वा इति इतिच्छेदः। लोके विभाषाशब्दः केवले विकल्पेऽर्थेऽस्ति। शास्त्रेऽत्र निषेधविकल्पौ विभाषाशब्दार्थौ स्यातामिति बोधाय सूत्रं क्रियते। इति पदमर्थनिर्देशाय अस्ति। तस्य न वा इत्याभ्यां प्रत्येकं सम्बन्धो भवति। तेन न इति पदेन योऽर्थः ज्ञायते निषेधः, वा इति पदेन योऽर्थः ज्ञायते विकल्पः तयोः अर्थयोरियं विभाषासंज्ञा अस्ति। अर्थात् न इत्यस्यार्थः वा इत्यस्यार्थश्चात्र संज्ञी। न तु नवाशब्दौ। सूत्रार्थः— निषेधविकल्पयोः विभाषासंज्ञा भवति इति।

### १३.४.२ विभाषासंज्ञायामर्थसंज्ञाकरणविचारः

न वा इति शब्दयोः योऽर्थः तस्य विभाषासंज्ञा वक्तव्या येन निषेधविकल्पयो-र्विभाषासंज्ञा भवेदन्यथा स्वं रूपं शब्दस्याशब्दसंज्ञेति निर्देशात् विभाषापदार्थः नवा इति भवेत्। अत उक्तं भाष्ये न वा शब्दस्य योऽर्थस्तस्य विभाषासंज्ञायाः किं प्रयोजनम्? इति प्रश्ने उच्यते—

शब्दसंज्ञायां हि सत्यामर्थस्यासम्प्रत्ययः स्यात्। अन्यत्रापि हि शब्दसंज्ञायां शब्दस्यैव सम्प्रत्ययो भवति नार्थस्य। यथा 'दाधाघ्वदाप्' तरप्तमपौ घः इत्यादिषु घुघग्रहणेषु शब्दस्यैव बोधो भवति नार्थस्य इत्याक्षेपो भवति। तत्तर्हि वक्तव्यमिति तटस्थस्य प्रश्ने उक्तम्—

निषेधविकल्पयोर्विभाषासंज्ञाकरणार्थम् अर्थसंज्ञाकरणस्य आवश्यकता नास्ति। यतो हि सूत्रे इतिकरणमेवार्थं गमयति। अथवा 'इति' इति शब्दाधिक्यादर्थाधिक्यं लभ्यते। उक्तं च महाभाष्ये इतिकरणः क्रियते सोऽर्थनिर्देशार्थो भविष्यति।

किमितिकरणेन अर्थनिर्देशः सेत्यति? अथवा इति इत्यधिकस्य शब्दस्य करणादर्थाधिकस्य बोधो भवेदिति उपहासे सति समाधानसाधको ब्रवीति— इतिकरणेनार्थबोधो भवेदेव।

लोके शब्दविशेषणकार्थप्रतीतिः शास्त्रेऽर्थविशेषणकशब्दप्रतीतिः। इति शब्दसमभिव्याहारे विपरीतम्। लोके शब्दप्रयोगेण तेन बोध्यो योऽर्थः स बुध्यते। परं तत्र इतिकरणेन ज्ञायमानमर्थमवरुद्ध्य शब्दस्यैव बोधो भवति। यथा गोपदेन लोके सास्नादिमान् पदार्थो बुध्यते परं 'गौः' 'इत्ययमाह' इत्यत्र 'गो' पदादनन्तरमितिशब्दप्रयोगेण गोपदस्यैव बोधो भवति। तथैव शब्दसंज्ञायां शब्दस्यैव बोधो भवति। यथा ''दाधाघ्वदाप्' इत्यनेन घुसंज्ञा 'दा' 'धा' इत्यनयोर्धात्वोरेव, तरप्तमपौ घः इति घसंज्ञा तरप् तमप् एतयोः प्रत्यययोरेव। किन्तु 'नवेति विभाषा' इत्यत्र तु 'इति' इत्यधिकं पदम्, तेन न वा एतयोः पदयोर्न हि विभाषासंज्ञा अपितु एतयोर्निषेधविकल्परूपार्थयोर्भवेत्।

**मूलग्रन्थपाठो व्याख्या च**

**(वा.) न वेति विभाषायामर्थसंज्ञाकरणम्**

**न वेति विभाषायामर्थस्य संज्ञा कर्त्तव्या। न वा शब्दस्य योऽर्थस्तस्य संज्ञा भवतीति वक्तव्यम्। किं प्रयोजनम्?**

**(वा.) शब्दसंज्ञायां ह्यर्थासम्प्रत्ययो यथाऽन्यत्र**

**शब्दसंज्ञायां हि सत्यामर्थस्यासंप्रत्ययः स्यात्। यथाऽन्यत्र। अन्यत्रापि हि शब्दसंज्ञायां शब्दस्य सम्प्रत्ययो भवति नार्थस्य।**

**क्वान्यत्र?**

**''दाधाघ्वदाप्'' ''तरप्तमपौ घः'' इति। घुग्रहणेषु घग्रहणेषु च शब्दस्य सम्प्रत्ययो भवति, नार्थस्य**

(शि सर्वनामस्थानमित्यतः अशिष्यो वा विदितत्वात् इति यावत्)

**व्याख्या—** नवेति विभाषायाम् इति— नवेति विभाषा इति सूत्रेण नवा इत्यस्य या विभाषा संज्ञा क्रियते तत्र, अर्थसंज्ञाकरणम् = न वा इत्यनयोरर्थस्य विभाषा संज्ञा कर्तव्या। न वा शब्दस्य योऽर्थः तस्य संज्ञा = विभाषा संज्ञा भवतीति वक्तव्यमित्याक्षेपः। किं प्रयोजनम् = नवाशब्दार्थयोः विभाषा संज्ञाकरणे किम् अस्ति प्रयोजनमिति प्रश्ने उच्यते—

शब्दसंज्ञायां सत्यां हि = नवा-शब्दयोः विभाषासंज्ञायां कृतायाम्, अर्थस्य असम्प्रत्ययः स्यात् = न वा शब्दार्थयोरप्रतीतिः भवेत्। दृष्टान्तमाह— यथान्यत्रेत्यादिना। अन्यत्रापि हि = संज्ञाप्रदेशेषु, शब्दसंज्ञायां, शब्दस्यैव सम्प्रत्ययो भवति = बोधो भवति, नार्थस्य = अर्थस्य बोधो न भवति। क्वाऽन्यत्र = कुत्र अन्यत्र एवं भवतीति प्रश्ने उच्यते—

दाधाघ्वदाप्, तरप्तमपौ घः इति = आभ्यां सूत्राभ्यां क्रमशः घुसंज्ञा घसंज्ञा च क्रियते। घुग्रहणेषु घग्रहणेषु = घुघपदयोरुच्चारणेषु, शब्दस्य = घघुशब्दस्य, च = एव, सम्प्रत्ययो भवति = बोधो जायते, नार्थस्य = न दाधादीनामित्यर्थः।

**मूलग्रन्थपाठो व्याख्या च**

**तत्तर्हि वक्तव्यम्। न वक्तव्यम्।**

**( वा. ) इतिकरणोऽर्थनिर्देशार्थः**

**इतिकरणः क्रियते सोऽर्थनिर्देशार्थो भविष्यति। किं गतमेतदितिना, आहोस्विच्छब्दाधिक्यादर्थाधिक्यम्।**

**गतमित्याह। कुतः ?**

**( वा. ) लोकतः**

**तद्यथा- ''गौरित्ययमाह'' इति गोशब्दादितिकरणः प्रयुज्यमानो गोशब्दं स्वस्मात् पदार्थात् प्रच्यावयति। सोऽसौ स्वस्मात् पदार्थात् प्रच्युतः याऽसावर्थपदार्थकता तस्याः शब्दपदार्थकः संपद्यते। एवमिहापि न वा शब्दादितिकरणः प्रयुज्यमानो न वा शब्दं स्वस्मात् पदार्थात् प्रच्यावयति। सोऽसौ स्वस्मात् पदार्थात् प्रच्युतो यासौ शब्दपदार्थकता तस्याः लौकिकमर्थं सम्प्रत्यायति न वेति यद्गम्यते न वेति यत् प्रतीयते इति।।**

**व्याख्या—** तत्तर्हि वक्तव्यम् = नवा शब्दार्थयोः विभाषासंज्ञा इति वक्तव्यम् इति प्रश्ने उच्यते— न वक्तव्यम् = न वा शब्दार्थयोः संज्ञा न वक्तव्या। यतो हि— इतिकरणः अर्थनिर्देशार्थः = नवेति विभाषासूत्रे इति इतिपदं यत् क्रियते तत् अर्थस्य निर्देशाय भविष्यति। क्रियते इति करणः, इतिश्चासौ करणश्च इति समासः। किम् गतम् एतत् इतिना = उपहासपरम् इदं वचनमाक्षेप्तुः यत् किम् नवेति सूत्रे कृतेन इतिपदेन कार्यं सेत्स्यति? आहोस्वित् = अथवा, शब्दाधिक्यात् = सूत्रे इतिपदस्य आधिक्येन प्रयोगात्, अर्थाधिक्यम् = नवाशब्दार्थस्य अधिकस्य प्रतीतिः भवेत्?

समाधानसाधको ब्रूते— गतम् इत्याह = इतिकरणेन कार्यं सेत्स्यति। कुतः = कस्मात् सेत्स्यतीति प्रश्ने उच्यते—

लोकतः = लोकव्यवहारदर्शनेन अर्थस्य बोधः सिद्धोभवेत्। दृष्टान्तमाह— तद्यथा लोके गौरित्ययमाह = अस्मिन् वाक्ये, इति = इतिपदम्, गोशब्दात् इतिकरणः = गो इत्यस्मात् परः इति, प्रयुज्यमानः = प्रयुक्तो भवति तदा, गोशब्दं = वाक्ये प्रयुक्तं गोशब्दम्, स्वस्मात् पदार्थात् = गोशब्दस्य योऽर्थः सास्नादिमत्त्वरूपः, तस्मादर्थात्, प्रच्यावयति = शब्दमात्रम् अपकृष्य बोधयति। यद्यपि शब्दार्थयोः नित्यः सम्बन्धो वर्तते तत्र अर्थस्य त्यागः न सम्भवति तथापि प्रसिद्धिः ईदृशी लोकेऽस्ति। अतः उच्यते— योऽसौ स्वस्मात् पदार्थात् = शब्दस्य योऽर्थः तस्मात् अर्थात्, प्रच्युतः =

त्यक्तः, योऽसौ अर्थपदार्थकता = गोत्वादिरूपोऽर्थः, तस्याः = अर्थपदार्थकतायाः, शब्दपदार्थकः सम्पद्यते = स्वरूपपदार्थबोधकः गोशब्दः ज्ञायते। एवमिहापि = इत्थमत्रापि, नवाशब्दादितिकरणः = नवेति विभाषासूत्रे न वा इत्यस्मात् परः प्रयुक्तः इतिः, नवाशब्दम् = नवा इति शब्दमात्रबोधकम्, स्वस्मात् पदार्थात् = नवाशब्दमात्रबोधकात् प्रच्यावयति = दूरीकरोति। सोऽसौ स्वस्मात् पदार्थात् = नवा इति पदं शब्दमात्रार्थबोधकात्, प्रच्युतः = रहितः, याऽसौ शब्दपदार्थकता = नवा शब्दस्वरूपबोधकता, तस्याः = शब्दस्वरूपबोधकतायाः लौकिकम् अर्थम् = लोके प्रसिद्धं व्यवहृतं वा निषेधविकल्परूपमर्थम्, प्रत्याययति = बोधयति। अर्थात् — नवेति यद्गम्यते नवेति यत् प्रतीयते इति = न वा इत्यनेन योऽर्थः प्रतीतो भवति स एवात्र बुध्यते इति।

**बोधप्रश्नाः**

४. विभाषासंज्ञायाः किं सूत्रम् ?

५. 'न वा' शब्दयोः विभाषासंज्ञा कथं न भवति ?

६. इतिकरणसामर्थ्याद् अर्थस्य ज्ञाने किं प्रमाणम् ?

### १३.४.३ समानशब्दानां विभाषासंज्ञायाः प्रतिषेधविचारः

नवाशब्दार्थयोः विभाषासंज्ञायां समानशब्दानां विभाषासंज्ञायाः प्रतिषेधो वक्तव्यः अन्यथा नवा कुडिण्का नवा शाला इहापि विभाषासंज्ञा स्यात् इत्याक्षेपो जायते। समानशब्दानां विभाषासंज्ञायां को दोषः स्यात् इति प्रश्ने उच्यते यत् विभाषा दिक्समासे बहुव्रीहौ इति सर्वनामसंज्ञायां दक्षिणपूर्वस्यां शालायामिति प्रयोगे विभाषापदेन अभिनवरूपः अर्थः बुध्येत। तेन प्रत्यग्रवाची यो दिक्समासः इति बोधः स्यात्। समानशब्दप्रतिषेधाभावेऽत्र दक्षिणपूर्वस्याम् इत्यस्य अचिरकृतायां शालायामिति बोधो भविष्यति।

अस्य समाधानं तु इत्थं महाभाष्ये कृतम्—

नायं दोषो भवेत्। यतोहि—

विधिस्थलेषु पूर्वं किंचिद् विधाय अनन्तरं न वेत्युच्यते। तेन निषेध एव बुध्यते न तु नूतनोऽर्थः। यतोहि विभाषेति संज्ञा संज्ञाप्रदेशेषु अर्थपरिष्कारार्थं कृता वर्तते। तत्र विधिशास्त्रे प्रयुक्तो न वा शब्दो निषेधस्यैव प्रत्यायको भविष्यति। विधिवाक्यस्यानुकूल्यात् प्रकृतसंज्ञासूत्रेऽपि न वा निषेधार्थक एव स्वीक्रियते। यथा— लोके 'ग्रामो भवता गन्तव्यो नवा' इत्यत्र ग्रामशब्दाद् भिन्नलिङ्गको न वा इति शब्दप्रयोगः। निषेधविकल्पौ एव अर्थौ बोधयति।

अत्राक्षेपो जायते— अस्ति कारणं येन नवेति लोके प्रतिषेधवाचिनः सम्प्रत्ययो भवति। तत्र विलिङ्गो निर्देशः कारणम्। यदि समानलिङ्गो निर्देशः क्रियेत तदा प्रत्यग्रवाचिनो बोधो भवेत्। यथा ग्रामो भवता गन्तव्यो नवः। समाधाता वदति— क्वचिदपि व्याकरणे समानलिङ्गो निर्देशः न दृश्यते। अतः नवा इत्यनेन प्रत्यग्रवाचिनो बोधो न भवेत्। विभाषा सेनासुराच्छायेति सूत्रे समानलिङ्गो निर्देशः दृश्यते तथाऽपि भिन्नविभक्तिकारणात् तत्रापि सामानाधिकरण्यं नास्ति।

समाधाता युक्त्यन्तरं प्रस्तुवन् कथयति— प्रयोक्ता शब्दानामभिसम्बन्धे कामचारं प्रदर्शयति। यथा 'यवागूः भवता भोक्तव्या नवा' इत्युक्ते प्रयोक्ता यदि यवागूशब्दं भुजिना सम्बध्नाति, भुजिञ्च नवाशब्देन तदा प्रतिषेधार्थस्य बोधो भवति। किन्तु नवाशब्दं यवागूशब्देन सम्बध्नाति न तु भुजिना तदा प्रत्यग्रवाचिनः बोधो भवति।

अत्रापि 'विभाषा दिक्समासे बहुव्रीहौ' इति सूत्रे विभाषापदं सर्वादीनि इत्यनेन न

अभिसम्बध्नीमो वयम्, अपि तु विभाषापदं भवतिना अभिसम्बध्नीमः। तेन दिक्समासे बहुव्रीहौ सर्वादीनि विभाषा भवन्तीत्यर्थो जायते। न च दक्षिणपूर्वस्यां शालायामित्यत्र प्रत्यग्रकृतायां शालायामित्यर्थो बुध्यते।

(शि सर्वनामस्थानमित्यतः अशिष्यो वा विदितत्वात् इति यावत्)

**मूलग्रन्थपाठो व्याख्या च**

**( वा. ) समानशब्दप्रतिषेधः**

**समानशब्दानां प्रतिषेधो वक्तव्यः। नवा कुडिका नवा घटिकेति। किं च स्यात् यद्येतेषां विभाषा संज्ञा स्यात् ?**

**विभाषा दिक्समासे बहुव्रीहौ दक्षिणपूर्वस्यां शालायाम्। अचिरकृतायां सम्प्रत्ययः स्यात्।**

**( वा. ) न वा विधिपूर्वकत्वात् प्रतिषेधसम्प्रत्ययो यथा लोके**

**न वा एष दोषः।। किं कारणम् ?**

**विधिपूर्वकत्वात्। विधाय किंचिद् नवेत्युच्यते, तेन प्रतिषेधवाचिनः सम्प्रत्ययो भवति। तद्यथा लोके ग्रामो भवता गन्तव्यो न वा, नेति गम्यते।**

**व्याख्या—** यदि न वा शब्दार्थयोः विभाषासंज्ञा क्रियते तदा-समानशब्दानां नवा इति प्रत्यग्रवाचिनां निषेधो वक्तव्यः इत्याक्षेपो जायते। समानशब्दानाम् = समानः शब्दः वाचको येषाम् अर्थानां तेषां, प्रतिषेधः = विभाषासंज्ञायाः प्रतिषेधः वक्तव्यः। यथा नवा कुडिका नवा घटिका इत्यत्र। किञ्च स्यात् = किं भवेत्, यद्येतेषाम् अपि = समानशब्दानामपि, विभाषासंज्ञा भवेत् इति प्रश्ने उच्यते—

विभाषा दिक्समासे बहुव्रीहौ = इति सूत्रं विभाषया सर्वनामसंज्ञां करोति, दक्षिणपूर्वस्यां शालायाम्-इत्युदाहरणं वर्तते। अचिरकृतायां नूतननिर्मितायां, सम्प्रत्ययः स्यात् = बोधो भवेत्। अर्थात् नूतनार्थवाचकनवाशब्दस्य विभाषासंज्ञायां प्रत्यग्रवाची यो दिक्समासः इति बोधो भवेत्। तेन अभिनवा या दक्षिणपूर्वा शाला तत्र सर्वनामसंज्ञा स्यात्।

उपर्युक्तस्य आक्षेपस्य समाधानमेवमुच्यते— न वा विधिपूर्वकत्वादित्यादिना। न वा एष दोषः = उपर्युक्तो दोषो न भविष्यति। किं कारणम् = दोषाभावे को हेतुः इति प्रश्ने उच्यते- विधिपूर्वकत्वात् = विधिपूर्वकनिषेधाङ्गीकारादित्यर्थः। विधाय किञ्चित् = प्रदेशषु किञ्चित् कार्याणि सम्पाद्य, न वा इत्युच्यते = उच्चारितो विभाषाशब्दः नवार्थं बोधयति। तत्र तत्र लोकवत् नवेति निपातस्यार्थो बुध्यते। तद्यथा लोके 'ग्रामो भवता गन्तव्यो न वा' नेति गम्यते = ग्रामगमनं विधाय लोके यदा न वा इत्युच्यते तदा 'न' इत्यर्थो ज्ञायते।

**मूलग्रन्थपाठः**

**अस्ति कारणम्- येन नवेति लोके प्रतिषेधवाचिनः संप्रत्ययो भवति।**

**किं करणम् ?**

**विलिङ्गं हि भवान् लोके निर्देशं करोति। अङ्ग हि समानलिङ्गो निर्देशः क्रियतां प्रत्यग्रवाचिनः सम्प्रत्ययो भविष्यति। तद्यथा 'ग्रामो भवता गन्तव्यो नवः' प्रत्यग्र इति गम्यते।**

**एतच्चैव न जानीमः- क्वचिद्व्याकरणे समानलिङ्गो निर्देशः क्रियत इति**

**व्याख्या—** समाधानबाधको ब्रवीति— अस्ति कारणं = विद्यते हेतुः, येन नवेति लोके =

नवा इतिप्रयोगे लोके, प्रतिषेधवाचिनः = नवा इत्यस्य, सम्प्रत्ययो भवति = बोधो भवति। किं कारणं = को हेतुरिति जिज्ञासायामुच्यते—विलिङ्गं = भिन्नलिङ्गं नवाशब्दं हि भवान् लोके निर्देशं करोति।

अङ्ग = सम्बोधनेऽस्ति इदं पदम्। समानलिङ्गो निर्देशः क्रियताम् = समानं लिङ्गं यस्य तस्य नवा इत्यस्य प्रयोगं करोतु, प्रत्यग्रवाचिनः = अभिनववाचकस्य सम्प्रत्ययः = ज्ञानं भविष्यति। दृष्टान्तमाह— 'ग्रामो भवता गन्तव्यो नवः' = अत्र ग्रामसमानलिङ्गः नवः अस्ति, अतः, प्रत्यग्र इति गम्यते = नूतनः इति बुध्यते। समाधानसाधको ब्रवीति— एतच्चैव न जानीमः = इदमेव न बुध्यामहे, क्वचित् व्याकरणे = पाणिनीये तन्त्रे, समानलिङ्गो निर्देशः क्रियते = अर्थात् नैव कुत्रचित् समानलिङ्गेन निर्देशः अस्ति। अतो न दोषः स्यात्।

**मूलग्रन्थपाठः**

**अपि चात्र कामचारः प्रयोक्तुः शब्दानामभिसम्बन्धे। तद्यथा 'यवागूर्भवता भोक्तव्या नवा', यदा यवागूशब्दो भुजिना सम्बध्यते भुजिर्नवाशब्देन तदा प्रतिषेधवाचिनः संप्रत्ययो भवति-यवागूर्भवता भोक्तव्या न वा, नेति गम्यते। यदा यवागूशब्दो नवा शब्देनाभिसम्बध्यते न भुजिना तदा प्रत्यग्रवाचिनः सम्प्रत्ययो भवति। यथा यवागूर्नवा भवता भोक्तव्या, प्रत्यग्रेति गम्यते।**

**न चेह वयं विभाषाग्रहणेन सर्वादीन्यभिसंबध्नीमः-दिक्समासे बहुव्रीहौ सर्वादीनि विभाषा भवन्तीति। किं तर्हि ?**

**भवतिरभिसम्बध्यते — दिक्समासे सर्वादीनि भवन्ति विभाषेति।**

**व्याख्या—** समाधानान्तरमाह अपि चेत्यादिना। अपि चात्र = शब्दप्रयोगविषये, कामचारः = इच्छा, प्रयोक्तुः = प्रयोगकर्तुः, शब्दानाम् अभिसम्बन्धे = वाक्यघटकशब्दानां परस्परं सम्बन्धे। दृष्टान्तमाह— तद्यथेत्यादिना। कश्चित् 'यवागूः भवता भोक्तव्या नवा' इति वदति तथा च यदा यवागूशब्दस्य भुजिक्रियया सम्बन्धं करोति भुजिक्रियाञ्च नवाशब्देन सम्बध्नाति तदा 'नवा' इति प्रतिषेधार्थको भवति। 'यवागूः भवता भोक्तव्या न वा' इत्युक्ते नवा भोक्तव्या इति अर्थः प्रतीयते। यदा यवागू शब्दस्य न वा शब्देन अभिसम्बन्धो भवति न तु भोक्तव्या इत्यनेन, तदा 'यवागूः नवा भवता भोक्तव्या' इत्यत्र प्रत्यग्रेति = नवेत्यस्य, गम्यते = बोधो भवति। न चेह = विभाषादिक्समासे इत्यत्र न च, वयं = वैयाकरणाः, विभाषाग्रहणेन = विभाषापदेन, 'सर्वादीनि' इति सूत्रानुवृत्तपदम्, अभिसम्बध्नीमः = सम्बन्धं योजयामः, 'दिक्समासे बहुव्रीहौ सर्वादीनि विभाषा भवन्ति' इति न योजयामः। किं तर्हि = तदा कथं सम्बन्धं कुर्मः इति प्रश्ने उच्यते— भवतिः अभिसम्बद्ध्यते = भवतिक्रियाया अभिसम्बन्धं कुर्मः— 'दिक्समासे सर्वादीनि भवन्ति विभाषा' इत्येवं सम्बन्धं कृत्वा जानीमः। तेन दोषो न भवति।

**बोधप्रश्नः**

७. ''नवा कुण्डिका'' अत्र विभाषासंज्ञाया वारणं कथम् भवति ?

८. विभाषाग्रहणस्य दिक्समासे फलमुपपाद्यताम्।

**१३.४.४ विधेः अनित्यत्वानुपपत्तिप्रदर्शनं समाधानञ्च**

यदि क्रियया सह नवा इत्यस्याभिसम्बद्धान्निषेधोऽर्थो बोध्यते तदा विधेरनित्यस्यानुपपत्तिः अर्थात् विकल्पः नोपपन्नो भवति।

यथा 'विभाषा श्वेः' इत्यादेरनित्यत्वाभावात्—शुशाव शुशुवतुः। शुशुवुः। शिश्वाय।

शिश्वियतुः। शिश्वियुः इति विकल्पेन यानि रूपाणि भवन्ति तानि न स्युः। यतोहि प्रतिषेधस्येयं संज्ञा क्रियते तेन विभाषा प्रदेशेषु प्रतिषेधस्यैव ज्ञानं भविष्यति।

(शि सर्वनामस्थानमित्यतः अशिष्यो वा विदितत्वात् इति यावत्)

यतोहि नवा इत्येकनिपातस्य प्रतिषेधवाचिनः अत्र ग्रहणं भवति। उपर्युक्ताक्षेपस्य समाधानं प्रसज्यप्रतिषेधपक्षाश्रयेण कुर्वन्नाह भाष्यकारः यत्— 'विधाय किञ्चित् न वा इत्युच्यते' इति। अर्थात् प्रतिषेधात् विधेरनुमानं कृत्वा तदनन्तरं विकल्पः करिष्यते तेन शुशाव शिश्वायेत्यादौ न दोषो भवेत्। भवत्याक्षेपोऽत्र यत् एकविषययोः विधिप्रतिषेधयोः विरोधात् न ज्ञातं भवति— कुत्र कार्यं भवति कुत्र नेति?

समाधाता वदति— प्रसङ्गसामर्थ्यात् विधिर्भविष्यति प्रतिषेधविषयं परित्यज्य, प्रतिषेधसामर्थ्याच्च विधिविषयं परित्यज्य प्रतिषेधो भविष्यति इति न पूर्वोक्त आक्षेपः साधुः।

उपर्युक्तसमाधानं श्रुत्वा पुनराक्षिपति यत् अप्राप्तविभाषायां तु एवं सिद्ध्येत् किन्तु प्राप्तविभाषायां यत्र पूर्वेण प्राप्तिरस्ति तत्र तु निषेधमात्रस्य बोधो भवेदिति?

उपर्युक्ताक्षेपस्य समाधानं 'विभाषा' इति महती संज्ञा अन्वर्थसंज्ञाऽस्ति इत्यनेन क्रियते। महत्याः संज्ञायाः करणे प्रयोजनं तु न वा = निषेधविकल्पौ इत्युभयोः संज्ञा भवेदित्यस्ति। अनेन प्रकारेण अप्राप्तस्थले प्रतिषेध्यस्य अभावात् वा इति विकल्पं करिष्यति, प्राप्तस्थले च न वा इत्युभयोः उपस्थित्या नेत्यनेन प्राप्तस्य पूर्वं निषेधं कृत्वा ततः परं 'वा' इत्यनेन विकल्पः करिष्यते इति बोध्यम्।

नवेत्यनेन निषेधविकल्पयोरर्थयोरुपस्थित्या विधिप्रतिषेधयोः यौगपद्यवचनं नोपपद्यते इत्याक्षेपो भवति। यदि 'भवति' इत्यंशः स्वीक्रियते तदा प्रतिषेधो न प्राप्नोति, यदि 'न भवति' इत्यंशः अङ्गीक्रियते तदा विधिः न सिद्ध्यति। तेन शुशाव-शिश्वायेत्युभयं न सिद्ध्येदिति दोषो भवति।

अस्याक्षेपस्य समाधानं सिद्धं तु पूर्वस्योत्तरेण बाधितत्वादित्यादिना क्रियते। सूत्रे इति करणः अर्थनिर्देशाय अस्ति इति पूर्वमुक्तम्। उभयत्रविभाषास्थले 'न' इत्यंशेन समानीकृते विषये पश्चात् वा = विकल्पः प्रवृत्तो भविष्यतीति यौगपद्यवचनानुपपत्तिर्न भवति।

**मूलग्रन्थपाठो व्याख्या च**

**(वा.) विध्यनित्यत्वमनुपपन्नं प्रतिषेधसंज्ञाकरणात्**

**विधेरनित्यत्वं नोपपद्यते। शुशाव शुशुवतुः शुशुवुः। शिश्वाय शिश्वियतुः शिश्वियुः।**

**किं कारणम्? प्रतिषेधसंज्ञाकरणात्। प्रतिषेधस्येयं संज्ञा क्रियते। तेन विभाषाप्रदेशेषु प्रतिषेधस्यैव सम्प्रत्ययः स्यात्।**

**व्याख्या**- नवा इत्येकनिपातं प्रतिषेधवाचिनं मत्वा आक्षेपो जायते— विध्यनित्यत्वं = विधेः विकल्पत्वम्, नोपपद्यते = न संगतं भवति।

शुशाव शुशुवतुः शुशुवः—शिश्वाय शिश्वियतुः शिश्वियुः = श्विधातोः लिटि तिपि, अतुसि उसि च पूर्वं विभाषा श्वेरिति सम्प्रसारणे पूर्वरूपे शु अ, शु अतुम् शु उस् इति जाते द्वित्वादौ वृद्धौ आवादेशे शुशाव इति, उवङि च शुशुवतुः शुशुवुरिति भवति। पक्षे श्वि इत्यस्यैव द्वित्वादौ शिश्वायेत्यादिरूपाणि भवन्ति। एतानि नोपपपद्यन्ते। किं कारणम् = कस्मात् कारणात् इति प्रश्ने उच्यते— प्रतिषेधसंज्ञाकरणात् = नवेत्यनेन प्रतिषेधार्थः ज्ञायते तस्य संज्ञा क्रियतेऽतः, तेन विभाषाप्रदेशेषु = विभाषासूत्रेषु, प्रतिषेधस्यैव सम्प्रत्ययः स्यात् = निषेधस्यैव बोधः स्यात्। अत्र समाधानमुच्यते—

सिद्धं तु प्रसज्यप्रतिषेधात् इत्यादिना।

**मूलग्रन्थपाठो व्याख्या च**

**( वा. ) सिद्धं तु प्रसज्यप्रतिषेधात्**

**सिद्धमेतत्। कथम्? 'प्रसज्यप्रतिषेधात्'। विधाय किञ्चित् नवेत्युच्यते तेनोभयं भविष्यति।**

**( वा. ) विप्रतिषिद्धं तु**

**विप्रतिषिद्धं तु भवति। अत्र न विज्ञायते— केनाभिप्रायेण प्रसजति, केन निवृत्तिं करोति इति।।**

**व्याख्या—** 'प्रसज्यप्रतिषेध' इत्यस्यार्थो भवति विधाय प्रतिषेधः। विधाय किंचिन्नवेत्युच्यते तेनोभयं भविष्यति। 'विभाषाश्वेः' अत्र 'टुओश्वि' धातुर्वर्तते। अस्य यजादौ पाठः। 'वचिस्वपियजादीनाम् किति' इत्यनेन किति सम्प्रसारणं क्रियते। 'विभाषा श्वेः' इत्यत्र विभाषा इत्युक्ते निषिध्यते तेन पिति प्रत्यये परे विधेरनुमानं भविष्यति। विधाय किञ्चित् नवेत्युच्यते = पूर्वं सम्प्रसारणं कृत्वा तदनन्तरं निषेधे उच्यमाने, उभयम् = शुशाव शिश्वाय, इति भविष्यति।

अत्र पुनराक्षेपो जायते यत् विप्रतिषिद्धं तु = विरुद्धमेतदस्ति।

विप्रतिषिद्धं तु भवति = परस्परं विरुद्धत्वाद् रूपद्वयविरोधो भवति। अत्र न विज्ञायते = अस्मिन् स्थले विधिनिषेधयोः न ज्ञानं भवति, केनाभिप्रायेण प्रसजति केन निवृत्तिं करोति = एकविषययोःविधिनिषेधयोः विरोधात् कुत्र प्राप्तिः कुत्र च अप्राप्तिः इति न ज्ञायते।

**मूलग्रन्थपाठः**

**( वा. ) न वा प्रसङ्गसामर्थ्यादन्यत्र प्रतिषेधविषयात्**

**न वा एष दोषः।। किं कारणम्? प्रसङ्गसामर्थ्यात्। प्रसङ्गसामर्थ्याच्च विधिर्भविष्यति— अन्यत्र प्रतिषेधविषयात्।। प्रतिषेधसामर्थ्याच्च प्रतिषेधो भविष्यति अन्यत्र विधिविषयात्।।**

**तदेतत् क्व सिद्धं भवति? या अप्राप्ते विभाषा। या हि प्राप्ते विभाषा, कृतसामर्थ्यस्तत्र पूर्वेणैव विधिरिति कृत्वा प्रतिषेधस्यैव सम्प्रत्ययः स्यात्।।**

**व्याख्या—** उपर्युक्तस्याक्षेपस्य समाधानं क्रियते– न वा प्रसङ्गसामर्थ्यादित्यादिना। न वा एष दोषः = विप्रतिषेधरूपो विरोधो न भविष्यति। किं कारणम् = तत्र को हेतुः इति प्रश्ने उच्यते— प्रसङ्गसामर्थ्यात् = प्राप्तिसामर्थ्यात्। प्रसङ्गसामर्थ्यात् च = प्राप्तिसामर्थ्यात्तु, विधिर्भविष्यति–अन्यत्र प्रतिषेधविषयात् = यत्र प्रतिषेधविषयो नास्ति यथा शुशावेति तिपो णलि तत्र सम्प्रसारणकार्यं भवेत्। प्रतिषेधसामर्थ्याच्च = नेत्यर्थः निषेधः, तस्य सामर्थ्यात् च, प्रतिषेधः भविष्यति अन्यत्र विधिविषयात् = यत्र किति नित्यं सम्प्रसारणविधिरस्ति, तत्र नेत्यनेन प्रतिषेधो भविष्यति।

आक्षेपो भवति— तदेतत् = विधिप्रतिषेधरूपं कार्यं, क्व सिद्धं भवति = कुत्र जायते? उत्तरति— या अप्राप्ते विभाषा = अप्राप्तस्थले या विभाषा तत्रोभयं सिद्ध्यति इत्यर्थः। या हि प्राप्ते विभाषा = यत्र कार्ये नित्यं प्राप्ते विभाषा उच्यते, कृतसामर्थ्यः = पूर्वेण क्लृप्तशास्त्रेण विधिः इति कृतसामर्थ्यः— विहितविधिकल्पकनिषेधीयशक्तिकः, तत्र पूर्वेणैव विधिः = नेत्यंशेन निषेधकार्यं भवति, इति मत्वा = इति बुद्ध्वा, प्रतिषेधस्यैव सम्प्रत्ययः स्यात् = निषेधस्यैव प्रतीतिः भवेदित्यर्थः। एतेन श्विधातौ किति निषेध एव सिद्धः न विकल्पः इत्याक्षेपसारः।

(शि सर्वनामस्थानमित्यतः अशिष्यो वा विदितत्वात् इति यावत्)

**मूलग्रन्थपाठः**

**( वा. ) एतदपि सिद्धम् । कथम् । विभाषेति महती संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः । कुत एतत् । लघ्वर्थं हि संज्ञाकरणम् । तत्र महत्याः संज्ञायाः करणे एतत् प्रयोजनम् । उभयोः संज्ञा यथा विज्ञायेत नेति च वेति च । तत्र या तावद् अप्राप्ते विभाषा, प्रतिषेध्यं नास्तीति कृत्वा वेत्यनेन विकल्पो भविष्यति । या हि प्राप्ते विभाषा, तत्रोभयमुपस्थितं भवति— नेति च वेति च । तत्र नेत्यनेन प्रतिषिद्धे वा इत्यनेन विकल्पो भविष्यति ।**

**व्याख्या**- अत्रोच्यते समाधानं महती संज्ञाकरणादित्यादिना— एतदपि सिद्धम् = प्राप्तविभाषायामपि कार्यं सिद्धं भविष्यति । कथम् = केन प्रकारेणेति प्रश्ने उच्यते— विभाषेति महती संज्ञा क्रियते....लघ्वर्थं हि संज्ञाकरणम् = संज्ञाकरणस्य प्रयोजनं भवति लघुशब्देन बह्वर्थस्य प्रतिपादनम् । परं तदतिरिच्य यदि महती संज्ञा क्रियते तदा तस्याः संज्ञाया विशिष्टं प्रयोजनं भवति । विभाषेति महत्याः संज्ञायाः प्रयोजनं तु नेति च वेति च इत्युभयोः संज्ञाविज्ञानमस्ति । तत्र महत्याः संज्ञायाः करणे... नेति च वेति च तत्रयातावदप्राप्तेविभाषा = अप्राप्तस्थले या विभाषा क्रियते तत्र अप्राप्तविभाषास्थले, प्रतिषेध्यं किमपि न अस्ति = प्रतिषेधयोग्यं किमपि नास्ति, इति कृत्वा = इति मत्वा, वा इत्यनेन विकल्पो भविष्यति = वा इत्यंशेन विकल्पस्य विधानं भविष्यति ? तेन शुशाव शिश्वाय इत्यादि सिद्ध्येत् । या हि प्राप्ते विभाषा तत्र उभयम् उपस्थितं भविष्यति नेति च वेति च = यत्र लिटि अतुसादौ सम्प्रसारणं नित्यं प्राप्तं तत्र विभाषा श्वेरित्यस्य विभाषेति वचनात् न वा इत्युभयम् उपस्थितं भविष्यति । तत्र = प्राप्तस्थले नेत्यनेन = न इत्यंशेन, प्रतिषिद्धे = (सम्प्रसारण) प्रतिषेधे जाते, वा इत्यनेन = वा इत्यंशेन, विकल्पो भविष्यति—तेन शुशुवतुः शिश्वियुरित्यादेः सिद्धिः स्यात् ।

**मूलग्रन्थपाठो व्याख्या च**

**एवमपि**

**( वा. ) विधिप्रतिषेधयोर्युगपद्वचनानुपपत्तिः**

**विधिप्रतिषेधयोर्युगपद्वचनं नोपपद्यते । शुशाव । शुशुवतुः । शुशुवुः । शिश्वाय । शिश्वियतुः । शिश्वियुः ।**

**किं कारणम् ?**

**( वा. ) भवतीति चेन्न प्रतिषेधः**

**भवतीति चेत् प्रतिषेधो न प्राप्नोति ।**

**( वा. ) नेति चेन्न विधिः**

**नेति चेद्विधिर्न सिद्ध्यति ।।**

**( वा. ) सिद्धं तु पूर्वस्योत्तरेण बाधितत्वात्**

**सिद्धमेतत् ।। कथम् ? पूर्वविधिमुत्तरो विधिः बाधते । इति करणोऽर्थनिर्देशार्थ इत्युक्तम् ।।**

**व्याख्या—** एवमपि = महतीसंज्ञाकरणेन कार्ये सिद्धेऽपि, विधिनिषेधयोर्युगपद्वचनानुपत्तिः = सकृदेव विधिः निषेधश्चेत्युभयवचनं न उपपन्नं भवति इत्याक्षेपो भवति । शुशाव, शिश्वाय, शुशुवतुः-शिश्वियतुः शुशुवुः-शिश्वियुः इत्यादौ एकस्मिन्नेव सम्प्रसारणं तन्निषेधश्च न सिद्ध्यतः इति आक्षेपभाष्याशयः । किं कारणम् = अत्र को हेतुरिति जिज्ञासायामुच्यते- भवतीति चेन्न प्रतिषेधः =

यदि विधिमुखेन प्रवृत्तिस्तदा प्रतिषेधो न स्यात्। नेति चेन्न विधिः = निषेधमुखेन प्रवृत्तौ सत्यां विधिः न सिद्ध्यति। यतो हि विरुद्धयोरेकसंज्ञायां कृतायां विधिदेशेषु युगपदुभयोर्विरोधात् भावाऽभावौ कर्तुं न युज्येते इत्याशयः।

अत्रोच्यते समाधानं– सिद्धं तु पूर्वस्योत्तरेण बाधितत्वादित्यादिना। सिद्धमेतत् = विधिनिषेधयोर्युगपद्वचनता सिद्धा भविष्यति। कथमिति प्रश्ने वक्तव्यम्– उभयत्र विभाषास्थले प्रतिषेधेन समानीकृते सति पश्चाद् विकल्पः प्रवर्तते। पूर्वविधिम् = नेत्यप्राप्तविधिम्, उत्तरो विधिः = वेति विकल्पविधिः बाधते। इतिकरणः अर्थनिर्देशार्थ इत्युक्तम् = नवेति विभाषासूत्रे इतिपदम् न वा इत्यनयोरर्थयोः निषेधविकल्पयोः निर्देशाय अस्ति इति, पूर्वं = प्रारम्भे एव उक्तम्। वस्तुतः उभयत्र विभाषार्थमियं संज्ञा क्रियते। प्राप्तविभाषायामप्राप्तविभाषायाञ्च अस्य विभाषासंज्ञाकरणस्य उपयोगो नास्ति इति सारः।

**बोधप्रश्नाः**

९. विधेः अनित्यतायाः अनुपपन्नता कथम् आशङ्किता ?

१०. विभाषेति महत्या संज्ञया किं विज्ञायते ?

११. विभाषासंज्ञाया उपयोगः कुत्र भवति ?

### १३.४.५ विभाषाप्राप्तेरेव साधुत्वमुतान्यस्यापि इति विचारः, सूत्रखण्डनञ्च

अनुशिष्यन्ते अनेन इत्यनुशासनम्, शब्दानामनुशासनं शब्दानुशासनं नाम व्याकरणं यत् असाधुशब्देभ्यः साधुशब्दं पृथक् करोति। इत्थं साधुत्वप्रतिपादनपरे अस्मिन् शास्त्रे यस्य विभाषया सम्बन्धः भवेत् सः साधुः स्यात्। विभाषा श्वेः इति विभाषासम्बन्धेन यथा शुशावेत्यादीनां साधुत्वं भवेत् नतु शिश्वायेत्यादीनाम्। तथैव विभाषा दिक्समासे इत्यत्र समासस्य विभाषया सम्बन्धात् तस्यैव साधुत्वं भवेत् इत्याक्षेपो जायते।

यद्युच्येत यः साधुः तस्यैव प्रयोगं करिष्यामः न त्वसाधोः इति चेत् वक्तव्यम्– एवं सति शब्दः विकल्पेन साधुर्मन्येत। किन्तु राजपुरुषः इत्यादिः कदाचिदपि असाधुर्न मन्यते इति। किञ्च विभाषया सम्बन्धात् शिश्वाय शुशावेत्युभयविधोऽपि बोधः भवति सः न स्यात्। विभाषास्थले द्वैधं शब्दानां ज्ञानं वयं वाञ्छामः तन्न स्यात्। येषां मतेन शब्दानामुत्पादनं व्याकरणेन भवति तेषां तु सम्प्रसारणादिस्थले विभाषासम्बन्धात् अपूर्वविधेयत्वेन सम्प्रसारणं विकल्प्यते इति द्वेधा प्रतीतिः स्यात्, न तु शब्दनित्यतावादिनां मतेन इति अपरो दोषः।

यद्युच्येत शब्दनित्यतावादिनां मतेपि न दोषो भवेत्–यतो हि न विभाषापदेन साधुत्वस्य अभिसम्बन्धं करिष्यामः, अपि तु समाससंज्ञया अभिसम्बन्धं कृत्वा समास इतीयं संज्ञा विभाषा भवतीति वक्ष्यामस्तदा न दोषः। यथा 'मेध्यः पशुर्विभाषितः मेध्योऽनड्वान् विभाषितः' इत्युक्ते अनड्वान् न अनड्वान् इति विचारो न भवति, अपि तु आलब्धव्यः न आलब्धव्यः इत्येव विचारो भवति।

शब्दनित्यतावादी पुनराक्षिपति – कार्यशब्दवादिनां मते यौगपद्येन अन्वाचयेन यत् उच्यते–

तव्यत्तव्यानीयरः 'ढक् च मण्डूकात्' इत्यत्र समुच्चयेन चकारेण यदुच्यते 'अण्' इति, तेषां मतेन युगपद् सर्वेषां वचनानां तव्यादीनामुत्पत्तिः प्राप्नोति इति दोषः। अस्माकं शब्दनित्यतावादिनां मते तु प्रयुक्तानां साधुत्वमात्रम् उच्यते अतो न दोषः।

आक्षेपबाधको ब्रवीति — ये शब्दान् कार्यान् मन्यन्ते तेषां मतेऽपि न दोषो

भवति। यतो हि प्रकृतेः परः प्रत्ययो भवति। एकस्याः प्रकृतेः पराः युगपत् सर्वे प्रत्ययाः न भवितुमर्हन्ति।

(शि सर्वनामस्थानमित्यतः अशिष्यो वा विदितत्वात् इति यावत्)

यद्युच्येत भवान् प्रत्ययमालां न कथयति, अपि तु कर्तव्यम् इति प्रयोक्तव्ये युगपदेव अनीयरादीनामपि प्रयोगः प्राप्नोति इति चेत् वक्ष्यामि— नायं दोषो भवेत्। यतो हि अर्थबोधनाय शब्दस्य प्रयोगो भवति। एकस्मिन् अर्थे उक्ते 'उक्तार्थानामप्रयोगः' इति नियमात् द्वितीयस्य तृतीयस्य च प्रत्ययस्य प्रयोगो युगपद् न भविष्यति।

शब्दनित्यतावादी पुनराक्षिपति यत् 'इको ह्रस्वोऽङ्यो गालवस्य', 'प्राचामवृद्धात् फिन् बहुलम्' इत्यादिभिः आचार्यदेशसङ्कीर्तनेन यदुच्यते तस्य आचार्यदेशविषयता एव सिद्ध्येत्। अस्माकं तु आचार्यग्रहणं पूजायै देशग्रहणं च कीर्तये अस्ति इति न दोषः।

यद्युच्येत – कार्यशब्दवादिनामपि गालवादिग्रहणं पूजार्थं देशग्रहणञ्च कीर्त्यर्थन्तदा नाऽत्रापि दोषः।

कार्यशब्दवादिमते अपर आक्षेपः— शब्दनित्यतावादी आक्षिपति यत् आचार्यदेशसङ्कीर्तनेन द्वैधं शब्दानां ज्ञानं बोधः अपेक्षितोऽस्ति किन्तु सः बोधो न स्यात्। यस्मात् गालवेन ह्रस्वं प्रयुक्तं तस्मात् तत्प्रयोक्तव्यमित्यर्थो भवेत्, तेन विकल्पो न सिद्ध्येत्।

### १३.४.६ नवेति सूत्रप्रत्याख्यानम्

सिद्धान्तरूपेण उच्यते यत् नवेति विभाषेत्यस्य अनुशासनं न कर्तव्यम्। यतो हि अनेन सूत्रेण य इष्यते निषेधविकल्परूपोऽर्थः सः विदित एवास्ति। ये विभाषासंज्ञां न जानन्ति तेऽपि 'विभाषा' इत्युक्ते विधेरनित्यतां जानन्ति। याज्ञिकाः खल्वपि 'मेध्यः पशुर्विभाषितो मेध्योऽनड्वान् विभाषितः इति प्रयुक्ते आलब्धव्यो नालब्धव्यः इति जानन्ति। यद्यपि ते विभाषासंज्ञां नारभन्तेऽतोऽनभिज्ञाः संज्ञया। आचार्यः पाणिनिरपि यद्यपि संज्ञामारभते तथाऽपि विभाषार्थं बहुभिः अन्यैः शब्दैः– बहुलम्, अन्यतरस्याम्, उभयथा एकेषाम् इत्यादिभिः बोधयति। एतेन ज्ञायते यत् विभाषा इत्यस्यार्थः प्रसिद्ध एव। तदर्थं सूत्रं न करणीयम्। अत्र कैयटो ब्रवीति—'अशिष्यो वा पुनरयं योगः' इत्यत्र विकल्पार्थकवाशब्दप्रयोगेण ज्ञायते यत् जातिपक्षे उभयत्रविभाषार्थं सूत्रं करणीयं, न तु व्यक्तिपक्षे। तत्र लक्ष्यभेदेन लक्षणभेदात् क्वचित् किमपि लक्षणं विधिमुखेन प्रवर्तिष्यते क्वचिच्च किमपि लक्षणं निषेधमुखेन इति इष्टसिद्धिः स्यादेव, न सूत्रं कर्तव्यम्।

### मूलग्रन्थपाठो व्याख्या च

**(वा.) साध्वनुशासनेऽस्मिन् शास्त्रे यस्य विभाषा तस्य साधुत्वम्**

**साध्वनुशासनेऽस्मिन् शास्त्रे यस्य विभाषा क्रियते सा विभाषा साधुः स्यात्। समासश्चैव हि विभाषा क्रियते, तेन समासस्यैव विभाषा साधुत्वं स्यात्।।**

**अस्तु। यः साधुः स प्रयोक्ष्यते। असाधुर्नप्रक्षोक्ष्यते।**

**न चैव हि कदाचित् राजपुरुष इत्येतस्यामवस्थायामसाधुत्वमिष्यते।।**

**व्याख्या—** आक्षेपो जायते यत्— साध्वनुशासने अस्मिन् शास्त्रे = अनुशिष्यते येन तद् अनुशासनं-शास्त्रम्, साधूनामनुशासनम् साध्वनुशासनं तस्मिन्, शास्त्रे = व्याकरणे, यस्य विभाषा क्रियते = यस्य विभाषाविधानं, सा विभाषा साधुः स्यात् = विभाषा श्वेः इति विभाषाविधानं सम्प्रसारणस्य अस्ति, अतः शुशावेत्यादिरेव साधुः स्यात् न तु शिश्वायेत्यादिः। दृष्टान्तमाह— समासश्चैव हि विभाषा क्रियते = समासः विभाषाधिकारे कृतः, तेन समासस्यैव विभाषासाधुत्वं स्यात् = तेन समासः एव विभाषा साधुर्भवेत्।

आक्षेपबाधको ब्रतीति— अस्तु = भवतु, यः साधुः सः प्रयोक्ष्यते = विभाषास्थले यः

शुशाव समासस्थले वा राजपुरुषः तस्यैव प्रयोगो भविष्यति। असाधुर्नप्रयोक्ष्यते = शिश्वायेत्यादिः न प्रयोक्ष्यते। आक्षेपसाधको ब्रवीति— न चैव हि कदाचित् राजपुरुष इत्येतस्याम् अवस्थायाम् असाधुत्वमिष्यते = यदि व्याकरणे साधुत्वे विभाषाऽन्वयो भवेत्तदा शब्दः विकल्पेन साधुर्मन्येत। किन्तु राजपुरुषः इति कस्यामपि दशायाम् नअसाधुर्मन्यते। सर्वदा तस्य साधुत्वं न तु उभयरूपं भवति।

**मूलग्रन्थपाठो व्याख्या च**

**अपि च—**

**( वा. ) द्वेधाऽप्रतिपत्तिः**

**द्वैधं शब्दानामप्रतिपत्तिः स्यात्।**

**इच्छामश्च— पुनर्विभाषाप्रदेशेषु द्वैधं शब्दानां प्रतिपत्तिः स्यादिति, तच्च न सिध्यति। यस्य पुनः कार्याः शब्दाः विभाषाऽसौ समासं निर्वतयति।**

**व्याख्या—** अपि च = किञ्च, द्वेधा अप्रतिपत्तिः = द्विप्रकारकः बोधो न स्यात्। द्वैधं = द्वेधा शब्दानाम् अप्रतिपत्तिः स्यात् = शब्दानां द्विविधं रूपं न जायेत। इच्छामश्च = अथ वाञ्छामः, पुनः, विभाषाप्रदेशेषु = विभाषाविधिषु, द्वैधं = द्विप्रकारकं, शब्दानां प्रतिपत्तिः स्यात् = शब्दानां ज्ञानं स्यात्, इति, तच्च = द्वैधं रूपं, न सिद्ध्यति = न निष्पद्यते। यस्य पुनः कार्याः शब्दाः = येषां मते व्याकरणेन उत्पाद्यमानत्वात् शब्दाः अनित्याः सन्ति, विभाषाऽसौ समासं निर्वर्तयति = तेषां मते विभाषापदेन अपूर्वस्य विधेयत्वात् समासम् असौ विकल्पेन निष्पादयति इति द्वैधं शब्दानां सिद्धिर्जायते।

**मूलग्रन्थपाठः**

**यस्यापि नित्याः शब्दास्तस्याप्येष दोषो न भवति।। कथम्?**

**न विभाषाग्रहणेन साधुत्वमभिसंबध्यते।। किं तर्हि?**

**समाससंज्ञाऽभिसम्बध्यते—समास इत्येषा विभाषा भवति इति। तद्यथा— मेध्यः पशुर्विभाषितः मेध्योऽनड्वान् विभाषितः—इति। नैतद्विचार्यते अनड्वान् नानड्वानिति।। किं तर्हि? आलब्धव्यो नालब्धव्य इति।।**

**व्याख्या—** शब्दनित्यतावादी आक्षेपं बाधयन् यस्यापि नित्याः शब्दाः = यः शब्दान् नित्यान् मनुते, तस्याऽपि = शब्दनित्यतावादिनोऽपि, एष दोषो न भवति = शब्दानां द्वेधा अप्रतिपत्तिरूपो दोषो न भवति। कथमिति प्रश्ने उच्यते— न विभाषाग्रहणेन = न विभाषापदेन, साधुत्वम् अभिसम्बध्यते = साधुत्वस्य अभिसम्बन्धः क्रियते, किं तर्हि = तदा केन अभिसम्बन्धः भवति इति प्रश्ने उच्यते— समाससंज्ञा अभिसम्बध्यते = समाससंज्ञायाः विभाषेतिपदेन अभिसम्बन्धं कृत्वा, समास इत्येषा विभाषा भवति इत्येवम् उच्यते। अनेन साधुत्वस्य विभाषां नोक्त्वा समासस्य विभाषां कथयामः, द्वेधाप्रतिपत्तिरपि भवति अत्र। दृष्टान्तमाह—तद्यथेत्यदिना — तद् यथा = येन प्रकारेण, मेध्यः पशुर्विभाषितः मेध्योऽनड्वान् विभाषितः इति = इत्युभयोः वाक्ययोः प्रयुक्तद्वयविभाषाशब्दस्य अनड्वान् इत्यनेन सम्बन्धो नास्ति, अतः नैतद् विचार्यते अनड्वान् न अनड्वान् इति = अनड्वान् न अनड्वान् वा आलब्धव्यः इति विचारो न भवति। किं तर्हि = किं विचार्यते इति प्रश्ने उच्यते— आलब्धव्यो न आलब्धव्यः इति = आलम्भनक्रियया सम्बन्धे सति आलम्भनक्रियायां विकल्पो गम्यते–आलम्भनं कर्तव्यं न वा इति।

(शि सर्वनामस्थानमित्यतः अशिष्यो वा विदितत्वात् इति यावत्)

**( वा. ) कार्येषु युगपदन्वाचययौगपद्यम्**

**कार्येषु शब्देषु युगपदन्वाचयेन च यदुच्यते, तस्य युगपद्वचनता प्राप्नोति 'तव्यत्तव्यानीयरः' 'ढक् च मण्डूकात्' इति।**

**यस्य पुनर्नित्याः शब्दाः, प्रयुक्तानामसौ साधुत्वमन्वाचष्टे।।**

**व्याख्या—** शब्दनित्यतावादी शब्दानित्यत्वपक्षे दूषणमुपस्थापति—

कार्येषु शब्देषु = अनित्येषु शब्देषु, युगपत् = यौगपद्येन, अन्वाचयेन च = चकारार्थेन च, यदुच्यते = यत्कार्यमुच्यते, तस्य = कार्यस्य, युगपद्वचनता प्राप्नोति = यथा तव्यत्तव्यानीयरः इत्यनेन तव्यदादयः अन्वाचयेन ''ढक् च मण्डूकात् इत्यत्र'' चकारग्रहणेन 'अण्' इत्यनुवर्तते तेन ''ढक् अण्'' एतौ प्रत्ययौ भवतः तेषां सकृदेव प्राप्तिर्भवति। शब्दनित्यतावादिनस्तु तव्यदादीनां साधुत्वमात्रम् अन्वाख्यान्ति। तेषां मतेन नूतनाः शब्दा न निर्मीयन्ते अत एव नात्र दोषो भवति।

**मूलग्रन्थपाठः**

**ननु च यस्यापि कार्यास्तस्याप्येष न दोषः।। कथम् ?**

**प्रत्ययः परो भवतीत्युच्यते। न चैकस्याः प्रकृतेरनेकस्य युगपत् परत्वेन संभवोऽस्ति।**

**नापि ब्रूमः प्रत्ययमाला प्राप्नोतीति।। किं तर्हि? कर्त्तव्यमिति प्रयोक्तव्ये युगपद्द्वितीयस्य तृतीयस्य च प्रयोगः प्राप्नोति।**

**नैष दोषः। अर्थगत्यर्थः शब्दप्रयोगः। अर्थं सम्प्रत्याययिष्यामीति शब्दः प्रयुज्यते। तत्रैकेनोक्तत्वात्तस्यार्थस्य द्वितीयस्य च तृतीयस्य च प्रयोगेण न भवितव्यम्, उक्तार्थानामप्रयोगः'' इति।**

**व्याख्या—** शब्दानित्यतावादी आक्षेपबाधं कुर्वन् कथयति— ननु च यस्यापि कार्याः = यस्य मते शब्दाः उत्पाद्याः, तस्य अपि न दोषः = अनित्यतावादिमतेऽप्ययं दोषो न प्रवर्तते, यतोहि प्रत्ययः परो भवतीत्युच्यते = प्रत्ययः परश्च ''इति सूत्राभ्यां प्रकृतेः परएव प्रत्ययो विधीयते। न च एकस्याः प्रकृतेरनेकस्य युगपत् परत्वेन सम्भवोऽस्ति = एकस्मात् प्रातिपदिकधातुरूपाद् प्रकृतिशब्दात् सकृत् अनेकः प्रत्ययः परत्वेन प्रयोक्तुं न शक्यते। यतो हि प्रैषाद्यर्थप्रत्यायनाय तव्यत्, तव्य, अनीयरेषु अन्यतमः प्रत्यय एव विधीयते न तु युगपत् सर्वे प्रत्ययाः।

नापि ब्रूमः प्रत्ययमाला प्राप्नोति = एकस्याः प्रकृतेः सर्वे प्रत्ययाः भवन्ति इति अपि न वदामः। किन्तर्हि = तदा किं भवतोऽभिमतम् इति प्रश्ने उच्यते — कर्तव्यम् इति प्रयोक्तव्ये = कृ धातोः तव्यत् प्रत्ययेन निष्पन्नस्य कर्त्तव्यमिति शब्दस्य प्रयोक्तुमिच्छायां, युगपत् = सकृत्, द्वितीयस्य तृतीयस्य च प्रयोगः प्राप्नोति = अर्थात् तव्यानीयरादीनां प्रयोगः प्राप्नोति इति ब्रूमः।

पुनश्च ब्रवीति— युगपत् द्वितीयस्य तृतीयस्य च प्रयोगे प्राप्तेऽपि— न एष दोषः = प्राप्ति रूपोऽयं दोषः न भवति। यतो हि— अर्थगत्यर्थः शब्दप्रयोगः = अर्थानां बोधाय शब्दानां प्रयोगो भवति। अर्थं सम्प्रत्याययिष्यामि = अर्थं बोधयिष्यामि, इति शब्दः प्रयुज्यते = इति धिया शब्दप्रयोगो भवति। तत्र = तेषु युगपत्प्राप्तप्रत्ययेषु, एकेन उक्तत्वात् अर्थस्य = तव्यदित्येकप्रत्ययेन अर्थस्य कथितत्वात्, द्वितीयस्य तृतीयस्य च प्रयोगेण न भवितव्यम् = सकृदेव तस्यैव अर्थस्य बोधाय द्वितीयस्य तृतीयस्य च 'तव्यानीयर' इत्यस्य प्रयोगः न भवेत्। यतो हि— उक्तार्थानामप्रयोगः इति = येषाम् अर्थाः उक्ताः तेषां प्रयोगो न भवतीति नियमोऽस्ति।

**मूलग्रन्थपाठो व्याख्या च**

**( वा. ) आचार्यदेशशीलने च तद्विषयता**

**आचार्यशीलनेन देशशीलनेन च यदुच्यते, तस्य तद्विषयता प्राप्नोति। 'इको ह्रस्वोऽङ्यो गालवस्य', प्राचामवृद्धात् फिन् बहुलम्' इति गालवा एव प्रयुञ्जीरन्, प्राक्षु चैव हि फिन् स्यात्। तद्यथा- 'जमदग्निर्वा एतत्पञ्चमवदानम् अवाद्यत्। तस्मान्नाजामदग्न्यः पञ्चावत्तं जुहोति'।। यस्य पुनर्नित्याः शब्दाः, गालवग्रहणं तस्य पूजार्थम्, देशग्रहणं च कीर्त्यर्थम्।।**

**व्याख्या—** शब्दनित्यतावादी शब्दकार्यवादिनमाक्षिपन् ब्रूते— आचार्यदेशशीलनेन च तद्विषयता = यत्र सूत्रे आचार्यस्य देशस्य वा सङ्कीर्तनमस्ति तस्य सूत्रस्य लक्ष्ये तस्यैव आचार्यस्य देशस्य वा प्रयोगविषयता भवेत्, नान्यस्य। तदेवोच्यते— आचार्यशीलनेन = आचार्यस्य पुनः पुनः सङ्कीर्तनेन, देशशीलनेन च यदुच्यते = कार्यम्-ह्रस्वः फिन् इत्यादि, तस्य तद्विषयता = आचार्यदेशप्रयोगविषयता, प्राप्नोति। दृष्टान्तमाह— इको ह्रस्वोऽङ्यो गालवस्य = इत्यनेन सूत्रेण विधीयमानं ह्रस्वं, प्राचामवृद्धात् फिन् बहुलम् इति = अनेन विहितं फिन्प्रत्ययान्तं शब्दं च, गालवा एव प्रयुञ्जीरन् = गालवस्येति नियमार्थं भवेत् तेन तेषां मते एव ह्रस्वप्रयोगः, नान्येषां मते इति दोषः स्यात्, प्राक्षु चैव हि फिन् स्यात् = प्राचि देशवास्तव्ये एव फिन् इति नियमात् प्राग्देशवास्तव्या एव फिन्प्रत्ययान्तस्य प्रयोगं कुर्युः, नान्यदेशवास्तव्याः इति दोषो भवेत्। दृष्टान्तमाह— जमदग्निर्वा एतत्पञ्चमम् अवदानम् अवाद्यत् तस्मान्नाजामदग्न्यः पञ्चावत्तं जुहोति = ब्राह्मणग्रन्थवचनमिदमस्ति। अर्थस्तु एवम्-जमदग्निः इमं पुरोडाशं पञ्चधा विभक्तवान्। अतः जमदग्निगोत्रोत्पन्ना एव इमां पञ्चमाम् आहुतिं ददाति, न जमदग्निगोत्रभिन्नगोत्रे उत्पन्नाः। तथाऽत्र गालवादिग्रहणेऽपि स्यात्। नान्ये तान् प्रयुञ्जीरन् शब्दान्।

यस्य पुनर्नित्याः शब्दाः = ये शब्दान् नित्यान् मन्वते, गालवग्रहणं = तेषां मते गालवोच्चारणं, पूजार्थम् = आदरार्थम् अस्ति। देशग्रहणं च कीर्त्यर्थम् इति = शोच्चारणं तु यशोलाभाय अस्ति। एतेन तेषां मते निष्पादितशब्दाः प्रयोगार्हाः भवन्ति इति न दोषो भवति।

**मूलग्रन्थपाठो व्याख्या च**

**( वा. ) ननु च यस्यापि कार्याः शब्दाः, तस्यापि गालवग्रहणं पूजार्थं स्यात्, देशग्रहणं च कीर्त्यर्थम्।**

**( वा. ) तत्कीर्तने च द्वेधाऽप्रतिपत्तिः**

**तत्कीर्तने च द्वैधं शब्दानामप्रतिपत्तिः स्यात्। इच्छामश्च पुनराचार्यग्रहणेषु देशग्रहणेषु च द्वैधं शब्दानां प्रतिपत्तिः स्यादिति, तच्च न सिध्यति।**

**व्याख्या—** कार्यशब्दवादी आक्षेपबाधं कुर्वन् कथयति— ननु च यस्याऽपि कार्याः शब्दाः = यस्य मते शब्दा अनित्याः, तस्यापि गालवग्रहणं पूजार्थं स्यात् देशग्रहणं च कीर्त्यर्थम् = तस्य मतेऽपि आचार्यदेशसङ्कीर्तनम् आदराय कीर्तये च भविष्यतीति न दोषः।

शब्दनित्यतावादी दुष्परिहरम् आक्षेपं वदति— तत्कीर्तने च द्वेधाऽप्रतिपत्तिः = आचार्य-देशोच्चारणे विभाषाप्रदेशे द्वैधं शब्दानां प्रतीतिः न स्यात्। यतो हि अर्थो भविष्यति— यस्मात् गालवेन ह्रस्वता प्रयुक्ता तस्मात् सा प्रयोक्तव्या। एतेन ह्रस्वस्य विकल्पविधानं न सिद्ध्येत्। इच्छामश्च = वयं वाञ्छामश्च, पुनराचार्यग्रहणेषु = गालवाद्याचार्यपदप्रयोगेषु, देशग्रहणेषु च = देशोच्चारणेषु च, द्वैधं शब्दानां प्रतिपत्तिः = द्विधा शब्दानां बोधः, स्यादिति = भवेदिति, तच्च न सिद्ध्यति = द्विधा शब्दानां ज्ञानं न सिद्ध्यति। अस्मन्मते गालवो ह्रस्वस्य स्मर्ता अन्ये दीर्घस्येति विकल्पः सिद्ध्यति। अतः शब्दनित्यतापक्ष एव समीचीनः।

**मूलग्रन्थपाठः**

(शि सर्वनामस्थानमित्यतः अशिष्यो वा विदितत्वात् इति यावत्)

**( वा. ) अशिष्यो वा विदितत्वात्**

**अशिष्यो वा पुनरयं योगः। किं कारणम्? विदितत्वात्। यदनेन योगेन प्रार्थ्यते तस्यार्थस्य विदितत्वात्। येऽपि ह्येतां संज्ञां नारभन्ते तेऽपि विभाषेत्युक्ते अनित्यत्वमवगच्छन्ति।।**

**याज्ञिकाः खल्वपि संज्ञामनारभमाणा विभाषेत्युक्तेऽनित्यत्वमवगच्छन्ति। तद्यथा— मेध्यः पशुर्विभाषितो मेध्योऽनड्वान् विभाषितः इति आलब्धव्यो नालब्धव्य इति गम्यते।**

**आचार्यः खल्वपि संज्ञामारभमाणो भूयिष्ठमन्यैरपि शब्दैः एतमर्थं संप्रत्याययति- बहुलम्, अन्यतरस्याम्, उभयथा, वा, एकेषाम् इति।**

**व्याख्या—** सूत्रप्रत्याख्यानाय सिद्धान्त उच्यते— अशिष्यो वा विदितत्वात् = अयं योगः शासितुं योग्यो नास्ति, अस्यार्थस्य ज्ञातत्वात्। अशिष्योऽयं योगः = इदं सूत्रं न करणीयमित्यर्थः, किं कारणमिति प्रश्ने उच्यते—विदितत्वात् इति। यदनेन योगेन = नवेति विभाषेति सूत्रेण यत्, प्रार्थ्यते = इष्यते तस्यार्थस्य विदितत्वात् = निषेधविकल्पार्थस्य ज्ञानं वर्तते इत्यस्मात् कारणात्। येऽपि ह्येतां संज्ञां नारभन्ते = ये अवैयाकरणाः विभाषासंज्ञां न कुर्वन्ति न जानन्ति वा, तेऽपि विभाषा इत्युक्ते = विभाषापदप्रयोगे जाते सति, अनित्यत्वम् अवगच्छन्ति = तत्पदप्रयोगस्य अवश्यप्रयोक्तृतां न मन्वते। अयं शब्दः प्रयोक्तव्योऽथवाऽ स्य स्थानेऽयमिति जानन्ति। तद्यथा इत्यादिना उदाहरणं प्रस्तौति-मेध्यः पशुर्विभाषितः मेध्योऽनड्वान् विभाषितः इति = यज्ञप्रयोगविषयकेऽस्मिन् वचने विभाषितः इत्यस्य, मेध्यः = आलब्धव्यः इति पदेनान्वयं कृत्वा आलब्धव्यः न आलब्धव्यः इति क्रियाविकल्पं जानन्ति। तथैव व्याकरणेऽपि व्यक्तिपक्षे लक्ष्यभेदेन लक्षणभेदात् कुत्रचित् किमपि लक्षणं विधिमुखेन प्रवर्तिष्यते कुत्रचिच्च निषेधमुखेन इति इष्टसिद्धिर्भविष्यति नास्ति सूत्रस्य प्रयोजनम्। आकृतिपक्षे उभयत्रविभाषार्थं सूत्र मिति कैयटो ब्रूते। आचार्यः खल्वपि = पाणिनिरपि संज्ञामारभमाणः = विभाषासंज्ञां कुर्वाणः, भूयिष्ठम् = बाहुबारं, अन्यैरपि = विभाषाभिन्नैरपि शब्दैः, एतमर्थम् = निषेधविकल्परूपमर्थं, सम्प्रत्याययति = बोधयति। यथा— बहुलम्, अन्यतरस्याम्, उभयथा, वा, एकेषामित्यादीनां प्रयोगं कृत्वा तमेवार्थं बोधयति। अतः अस्य संज्ञासूत्रस्य प्रयोजनं नास्ति इति सिद्धान्तः।

**बोधप्रश्नः**

१२. द्वेधाऽप्रतिपत्तिः इत्यस्य कोऽर्थः?

१३. विभाषासंज्ञासूत्रं कथं प्रत्याख्यातम्?

**१३.४.६ निष्कर्षः**

'नवेति विभाषा' इति विभाषासंज्ञासूत्रे 'न' 'वा' इति पदद्वयं वर्तते। 'न' इत्यस्य निषेधः 'वा' इत्यस्य विकल्पोऽर्थो भवति। तेन निषेधविकल्पयोर्विभाषासंज्ञा क्रियते। अत्र सूत्रे इतिकरणसामर्थ्याद् 'न वा' इत्येतयोरर्थयोः संज्ञा विभाषा भवति। यतोहि लोके शब्दाः अर्थपराः शास्त्रे शब्दाः शब्दपरा भवन्ति। अतो लोके प्रयुज्यमानस्य शब्दस्य शब्दस्वरूपबोधनाय इतिकरणो भवति। अतः ''गौरित्ययमाह'' इत्यत्र इतिकरणसामर्थ्यात् गवार्थं निरुध्य 'गो' शब्द एव बुध्यते यत्र पूर्वेण केनापि विधिः अप्राप्तः स्यात् तत्र विकल्पमात्रं विदधाति, यत्र पूर्वेण केनापि प्राप्तं स्यात् तदा तत्र निषेधेन तन्निरुध्य विकल्पेन विदधाति। परं यदि एकस्मिन् अंशे अन्येन प्राप्तः अन्यस्मिन् अंशे अप्राप्तः तदा अनेन उभयत्र विकल्पं विदधाति। लोके विभाषासंज्ञाज्ञानं विनाऽपि मेध्यः पशुर्विभाषितः इत्यादौ विकल्पार्थस्य प्रतीतिर्भवति तद्वदेव शास्त्रेऽपि व्यक्तिपक्षे संज्ञाज्ञानं विनाऽपि कार्यं सेत्स्यति, सूत्रस्यावश्यकता नास्तीति प्रतिपादितमत्र। वस्तुतः उभयत्रविभाषार्थमस्ति सूत्रम्।

## १३.५ सारांशः

अस्मिन् पाठे शि सर्वनामस्थानं सुडनपुंसकस्येति सूत्रद्वयं 'न वेति विभाषा' इति सूत्रञ्च प्रत्याख्यानं यावत् व्याख्यातम्।

शि सर्वनामस्थानमिति नपुंसके शि इत्यस्य संज्ञायां सुडनपुंसकस्येत्यत्र अनपुंसकस्येति प्रसज्यप्रतिषेधपक्षाङ्गीकारे निषेधः प्राप्नोति। तेन कुण्डानि वनानि इत्यादौ सर्वनामस्थानसंज्ञाप्रयुक्तानि कार्याणि नुम्दीर्घादीनि न प्राप्नुवन्ति इत्याक्षिप्य पर्युदासपक्षेण समाहितं यत् सुडनपुंसकस्येत्यस्य अनपुंसके व्यापारः न तु नपुंसके। किञ्च अश्राद्धभोजी ब्राह्मण इत्यादिप्रयोगदर्शनात् प्रसज्यप्रतिषेधेऽपि समासो भवत्येवेति अनपुंसकस्येति पदेन ज्ञाप्यते। अस्मिन् पक्षेऽपि 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा, इति न्यायात् अनपुंसकस्येति व्यवहितस्य शि सर्वनामस्थानमिति शेः क्रियमाणां संज्ञां न प्रतिषेधति।

न वेति विभाषा इति विभाषासंज्ञाविधायकं सूत्रमस्ति। अत्र इतिपदं प्रयुज्यमानं न वा इति शब्दौ शब्दस्वरूपात् प्रच्याव्य अर्थपरौ करोति। तेन न वा शब्दार्थयोः निषेधविकल्पयोर्विभाषासंज्ञा विधीयते। आक्षेपो भवति यत् साधुशब्दानामनुशासनपरेऽस्मिन् व्याकरणे येन सह विभाषा इत्यस्याः सम्बन्धः तस्यैव साधुत्वं मन्येत नान्यस्य। समासेन सह विभाषा इत्यधिकृता तेन समासस्यैव साधुत्वं स्यादिति।

किञ्च साधुत्वविकल्पने विभाषापदस्योपयोगात् शिश्वियतुरित्यादीनां सिद्धिर्न स्यात् तेन द्विविधरूपस्य बोधो न भवेत्। यदि शब्दान् अनित्यान् मन्यामहे तदा विभाषया समासनिर्वर्तनं स्यात्। विधिसूत्रेषु यदुच्यते अन्वाचयेन च यदुच्यते तत्र यौगपद्येन तव्यदादीनां प्राप्तिर्भवति। अस्या क्षेपस्य समाधानं तु प्रत्ययः परश्च इत्यनेन कृतम्। एकस्याः प्रकृतेः सकृत् एक एव प्रत्ययो भवेत्। किञ्चार्थबोधाय शब्दप्रयोगो भवति। एकेन प्रत्ययेन अर्थज्ञाने जाते उक्तार्थानामप्रयोगः इति नियमात् अपरस्य प्रत्ययस्य तस्मिन्नेवार्थे सकृत् प्रवृत्तिर्न भवेत्।

**शब्दनित्यतापक्षे**- आचार्यदेशशब्दोच्चारणेन तयोर्नियमार्थत्वात् द्वैधं शब्दानां बोधो न प्राप्नोति इति अपरिहृतो दोषः। अतः शब्दनित्यतावादिमते द्वैधं शब्दप्रतिपत्तये आचार्यग्रहणं पूजार्थं देशग्रहणञ्च कीर्त्यर्थं स्वीक्रियते। इदं सूत्रं न कर्तव्यम् 'अशिष्यो वा विदितत्वात्' इत्यादिना सिद्धान्तितम्।

अनेन सूत्रेण निषेधविकल्पयोर्या विभाषासंज्ञा क्रियते सा लोके ज्ञाता एव अस्ति। व्याकरणशास्त्रीयामिमां संज्ञाम् अजानन् अपि जनः मेध्यः पशुर्विभाषितः मेध्योऽनड्वान् विभाषितः इत्यादिवाक्यस्थविभाषितशब्देन क्रियायाः अनित्यतां वैकल्पिकतां वा जानात्येव। अतः आलब्धव्यः न आलब्धव्यः इति बुध्यते। स्वयं पाणिनिरपि निषेधविकल्पार्थं बहून् शब्दान् प्रयुङ्क्ते। यथा बहुलम्, एकेषाम्, वा उभयथा, अन्यतरस्याम् इत्यादीन्। तेन ज्ञायते यत् व्यक्तिपक्षे लक्ष्यभेदेन लक्षणभेदात् क्वचित् लक्षणं विधिमुखेन, क्वचिच्च निषेधमुखेन प्रवर्तते एव। सूत्रं न कर्तव्यम् इति।

## १३.६ शब्दावली

| | | | |
|---|---|---|---|
| १. | असमर्थसमासः | — | यत्र नञः सुबन्तेन सामर्थ्यं न भवति क्रिययाभवति, तथाऽपि समासो दृश्यते सः असमर्थसमासः। |
| २. | पर्युदासः | — | नञः एकः अर्थः तत्सदृशस्तद्भिन्नः इति। |
| ३. | प्रसज्यप्रतिषेधः | — | नञः एकः भेदः — यत्र नञः अर्थः निषेधो भवति सः। |

| | | | |
|---|---|---|---|
| ४. | विभाषा | — | निषेध: विकल्पश्च |
| ५. | शब्दपदार्थक: | — | शब्द: एव अर्थ: यस्य स:। यथा गौरित्ययमाह। |
| ६. | विलिङ्गम् | — | भिन्नं लिङ्गं यस्य तम्। तत् |
| ७. | प्रत्यग्रवाचिन: | — | नूतनवाचिन:। |
| ८. | अभिसम्बध्नीम: | — | सम्बन्धम् अन्वयं वा कुर्म:। |
| ९. | साध्वनुशासनम् | — | अनुशिष्यन्ते अनेन इति अनुशासनं व्याकरणं शास्त्रम्। साधूनामनुशासनं साध्वनुशासनम्। |

(शि सर्वनामस्थानमित्यत: अशिष्यो वा विदितत्वात् इति यावत्)

## १३.७ सहायकग्रन्थ:

पातञ्जलमहाभाष्यम्।

## १३.८ सन्दर्भग्रन्थ:

१. छायाटीका-प्रदीपोद्योतटीके च

२. सिद्धान्तकौमुदी

३. भूषणसार:

४. परमलघुमञ्जुषा

५. लघुशब्देन्दुशेखर:

६. काशिका

## १३.९ बोधप्रश्नोत्तराणि

१. 'शि सर्वनामस्थानम्', सुडनपुंसकस्य इति सूत्रद्वयं सर्वनामस्थानसंज्ञा विधायकमस्ति।

२. 'सुट्' इत्यत्र पञ्च विभक्तय: सन्ति-सु। औ। जस्। अम्। औट् इति।

३. पर्युदास: सदृशग्राही यथा— अब्राह्मण:। प्रसज्य: निषेधकृत्। यत्र 'नञ्' धातुना सह सम्बध्यते स प्रसज्यप्रतिषेध:। यथा नपुंसकस्य न भवति इति अनपुंसकस्य।

४. 'न वेति विभाषा' इति विभाषासंज्ञाया: सूत्रम्।

५. 'न वेति विभाषा' इति सूत्रे इतिकरणनिर्देशात् न वा एतयो: शब्दार्थयो: विभाषासंज्ञा भवति नतु न वा एतयो: शब्दयो:।

६. 'लोक: प्रमाणम्'। लोके शब्दा: अर्थपरा भवन्ति। तत्र इतिकरणसामर्थ्यात् अर्थं परित्यज्य शब्दं च बोधयति यथा गवित्ययमाह इत्यत्र 'गो' शब्दस्य बोध:। तथैव शास्त्रे शब्दा: शब्दपरा भवन्ति। तत्र इतिकरणसामर्थ्यात् शब्दं प्रच्याव्य अर्थं बोधयति।

७. समानलिङ्गनिर्देशात् प्रत्यग्रवाचिनो बोधात् न वा कुण्डिका इत्यत्र विभाषासंज्ञावारणं

भवति। किञ्च शब्दानाम् अभिसम्बन्धे प्रयोक्तुः कामचारात् न वा इत्यस्य कुण्डिका इति अभिसम्बन्धात् निषेधविकल्पार्थराहित्याच्च विभाषासंज्ञावारणं भवति।

८. विभाषाग्रहणस्य दिक्समासे फलं दक्षिणपूर्वस्यां शालायामित्यत्र वैकल्पिकं सर्वनामत्वम्।

९. प्रतिषेधस्य संज्ञाकरणात् शुशाव शिश्वायेत्यादौ विधेः अनित्यताया अनुपपन्नता आशङ्किता।

१०. विभाषेति महत्या संज्ञया निषेधविकल्प इत्युभयोः विभाषासंज्ञा विज्ञायते।

११. उभयत्र विभाषास्थले यथा–विभाषाश्वेरित्यादौ विभाषासंज्ञाया उपयोगो भवति।

१२. साध्वनुशासनेऽस्मिन् शास्त्रे यस्य विभाषा तस्य साधुत्वमित्यङ्गीकारे विभाषास्थले शुशाव–शिश्वायेति यद् रूपद्वयं द्वैधं प्रतिपद्यते तन्न स्यात्। केवलं शुशाव इत्यस्यैव साधुत्वात् तस्यैव प्रतिपत्तिर्भवेत्।

१३. विभाषा पदार्थयोः निषेधविकल्पयोः लोके विदितत्वात् लोकव्यवहारेणैव शास्त्रे कुत्रचित् विधिमुखेन कुत्रचित् निषेधमुखेन प्रवृत्तिसम्भवात् अनावश्यकं सूत्रमिति कृत्वा प्रत्याख्यातम्।

## १३.१० अभ्यासप्रश्नाः

१. अनपुंसकस्येत्यत्र कीदृशः समासः ?

२. शब्दसंज्ञायामर्थस्य असम्प्रत्ययः कथं भवति।

३. इतिकरणम् सूत्रे किमर्थम् ?

४. विभाषा दिक्समासे बहुव्रीहौ इत्यत्र विभाषा केन अभिसम्बद्ध्यते

५. न वा प्रसङ्गसामर्थ्यादन्यत्र प्रतिषेधविषयात्' इत्यस्याः कः आशयः।

६. 'सिद्धं तु पूर्वस्य उत्तरेण बाधितत्वात्' व्याख्यायतामियं पङ्क्तिः।

७. 'आचार्यदेशशीलनेन तद्विषयता' इत्यस्याः व्याख्या कार्या ?

८. नवेति सूत्रार्थं सपदकृत्यं विमृश्य सूत्रप्रत्याख्यानं कथं भवतीति निरूपणीयम्।



# चतुर्दशः पाठः [नवेति विभाषा ( १-१-४३ ) अप्राप्ते त्रिसंशयाः इत्याभ्यान्तं यावत्]

**पाठसंरचना**



## १४.१ प्रस्तावना

इतः प्राक्तने पाठे भवन्तः अपठन् यत् 'नवेति विभाषा' इति सूत्रविहिता संज्ञा नवाशब्दर्थस्यैव भवति न तु नवाशब्दस्य इति।

नवा शब्दवाच्यार्थस्य संज्ञात्वेऽपि 'नवा' शब्दवाच्यनूतनाद्यर्थस्य एषा संज्ञा न भवति, अत्र नवाशब्दः, केवलं प्रतिषेधमात्रवाचकः एकः शब्दः न, अपि तु प्रतिषेध-विकल्पवाचकं न-वा इति पदद्वयरूपम् इति, किन्तु 'न-वा' शब्दात् क्रमेण उपस्थितयोः निषेध (= अभाव)- विकल्पयोर्द्वयोः विभाषासंज्ञा ज्ञायते। उभयत्रविभाषास्थले एव अस्य उपयोगः, न तु अप्राप्त-प्राप्तविभाषास्थले अपि भवति।

विभाषाविधिस्थले विधेयस्य भावाभावयोः पर्यायेण प्रवृत्तिः भवति।

नित्यशब्दवादे प्रधानतया साधुत्वबोधकान्यपि सूत्राणि विभाषापदसहितानि साधुत्वस्य विकल्पनं न वदन्ति, किन्तु अप्रधानभूतकार्यस्यैव विकल्पं वदन्ति इति।

वस्तुतः एषा संज्ञा नापेक्षिता, इष्टसिद्धिः भवत्येव इत्येवमादीन् विषयान् सम्यक् ज्ञातुमर्हामः पाठमाध्यमेन।

अस्मिन् पाठे प्राप्ताप्राप्तोभयत्रविभाषाविषये सन्देहोपस्थापनसहितं सिद्धान्तं पठिष्यति। का

तावत् प्राप्तविभाषेति वक्तुं शक्नुमः सूत्रान्तरेण क्वचित् लक्ष्ये नित्यतया प्राप्तस्यैव कार्यस्य या विभाषा विधीयते सा प्राप्तिविभाषा इत्युच्यते। यथा- त्वं करोषि - त्वङ्करोषि इत्यादौ 'अनुस्वारस्य ययि परसवर्णः ८-४-५८' इति सूत्रेण अपदान्तस्य पदान्तस्य वा अनुस्वारस्य नित्यतया प्राप्तस्यैव परसवर्णादेशस्य 'वा पदान्तस्य' ८-४-५९ इति सूत्रेण विभाषा विधीयते। अतः एषा प्राप्तविभाषा। अप्राप्तविभाषा तावत् - सूत्रान्तरेण क्वचिल्लक्ष्ये सर्वथा अप्राप्तस्यैव कार्यस्य या विभाषा विधीयते सा अप्राप्तविभाषा इत्युच्यते।

उभयत्रविभाषा खलु-सूत्रान्तरेण क्वचिल्लक्ष्ये नित्यतया प्राप्तस्य क्वचित् लक्ष्ये सर्वथा अप्राप्तस्य च कस्यचन कार्यस्य या विभाषा विधीयते सा उभयत्रविभाषा इत्युच्यते। अधुना अप्राप्ते त्रिसंशयाः इत्यस्मिन् विषये वयं पठिष्यामः।

## १४.२ उद्देश्यम्

**अनेन पाठेन भवान्-**

- विभाषा अप्राप्तविभाषा प्राप्तविभाषा उभयत्रविभाषा चेति त्रिविधा इति सोदाहरणं ज्ञातुं प्रभविष्यति।
- केषु केषु सूत्रेषु तद्विहितकार्यविभाषाविषये इयं अप्राप्तविभाषा वा? प्राप्तविभाषा वा? उभयत्रविभाषा वा? इति संशयो भवति? कया युक्त्या इयमप्राप्तविभाषा, इयं प्राप्तविभाषा, इयमुभयत्रविभाषा इति निर्णीयते? इत्यादीन् अंशान् सम्यक् ज्ञातुं प्रभविष्यति।
- विभाषाविधिलक्ष्याणि ज्ञात्वा सम्यक् प्रयोक्तुं समर्थो भविष्यति।
- प्राप्त-अप्राप्त-उभयत्रविभाषास्थले कथं वार्तिक-भाष्यकाराभ्यां विचारः कृतः? सम्यक् ज्ञातुं प्रभविष्यति।

## १४.३ प्राप्ताऽप्राप्तोभयत्रविभाषाविवेचनम्

प्राप्तविभाषा-सूत्रान्तरेण क्वचिल्लक्ष्ये नित्यं प्राप्तस्य विकल्पविधायकं शास्त्रं प्राप्तविभाषा।

अप्राप्तविभाषा = सूत्रान्तरेण क्वचित् लक्ष्ये सर्वथा अप्राप्तस्यैव कार्यस्य या विभाषा विधीयते सा अप्राप्तविभाषा इत्युच्यते।

यथा-एतदु-मुरारिः = एतन्मुरारिः इत्यादौ सूत्रान्तरेण सर्वथा अप्राप्तस्यैव अनुनासिकादेशस्य यरोऽनुनासिकेऽनुनासिको वा ८-४-४५ इति सूत्रेण विभाषा विधीयते। अतः इयमप्राप्तविभाषा।

उभयत्रविभाषा - सूत्रान्तरेण क्वचित् लक्ष्ये नित्यतया प्राप्तस्य क्वचित् लक्ष्ये सर्वथा अप्राप्तस्य च कस्यचन कार्यस्य या विभाषा विधीयते सा उभयत्रविभाषा इत्युच्यते।

यथा-श्विधातोः किति लिटि (=अतुस्प्रभतिषु प्रत्ययेषु परेषु) 'वचिस्वपियजादीनां किति' ६-१-१५ इति सूत्रेण नित्यतया प्राप्तस्य, पिति लिटि (=णल्प्रभृतिषु प्रत्ययेषु परेषु) सूत्रान्तरेण सर्वथा अप्राप्तस्य च संप्रसारणस्य 'विभाषा श्वेः' ६-१-३० इति सूत्रेण विभाषा विधीयते। अतः इयम् उभयत्रविभाषा इत्युच्यते।

### १४.३.१ सामान्यतः त्रिसंशयोपपादनप्रकारः

व्यापकस्थले नित्यतया किंचित्कार्यविधायकात् कस्माच्चन सूत्रात् किञ्चत्पदं

विभाषया तत्कार्यविधायके अन्यस्मिन् सूत्रे अनुवर्त्य तत्सूत्रं पूर्वसूत्रापेक्षया व्याप्यस्थले कार्यविधायकं सम्पाद्यते चेत्, सा व्याप्यस्थलीयसूत्रे विभाषा प्राप्तविभाषा भवति।

यदि व्यापकस्थले कार्यविधायकात् सूत्रात् विकल्पतया तत्कार्यविधायके अन्यस्मिन् सूत्रे, व्याप्यतासम्पादकं पदं नानुवर्त्यते चेत्, तदा विभाषासूत्रं नित्यतया तत्कार्यविधायकसूत्रस्थले तदतिरिक्तस्थले च प्राप्नोति। तदा अन्यत्र चरितार्थयोः द्वयोः एकत्र समावेशे, पूर्वविप्रतिषेधेन, क्वचित् परविप्रतिषेधेन वा ? नित्यसूत्रस्थले नित्यसूत्रस्यैव प्रवृत्तिस्वीकारे विभाषासूत्रं सर्वथा सूत्रान्तराप्राप्तिस्थले एव प्रवर्तते इति कृत्वा एषा अप्राप्तविभाषा भवति।

यदि नित्यशास्त्र-विकल्पशास्त्रयोः एकत्र समावेशे, परविप्रतिषेधेन, क्वचित् पूर्वविप्रतिषेधेन वा विभाषाशास्त्रस्यैव प्रवृत्तिस्वीकारः, तदा विभाषासूत्रं क्वचित् नित्यतया प्राप्तस्य क्वचित् सर्वथा अप्राप्तस्य च विभाषां विधत्ते इति उभयत्रविभाषा भवति।

अप्राप्तविभाषायाः उदाहरणम्- १ यथा 'सर्वादीनि सर्वनामानि १-१-२७' इति सूत्रं 'सर्व...उभय' इत्यादीनां नित्यतया सर्वनामसंज्ञा विधायकम्। 'प्रथम-चरम-तयाल्पार्ध-कतिपय-नेमाश्च १-१-३३' इति सूत्रं तु 'तय' प्रत्ययान्तस्य विकल्पतया सर्वनामसंज्ञाविधायकम्। यदि द्वितीयसूत्रे 'सर्वादीनि' इत्यनुवर्त्य तयप्रत्ययान्तस्य विशेषणं क्रियते, तदा 'सर्वादि यत् तयप्रत्ययान्तं तत् जसि वा सर्वनामसंज्ञं भवति इत्यर्थः भवति। तथा च - उभयशब्दस्य सर्वादित्वेन नित्यसर्वनामसंज्ञा प्राप्ता, तस्य तयप्रत्ययान्तत्वेन उभय-जस्-इत्यत्र विभाषा सर्वनामसंज्ञा प्राप्ता। परत्वात् च 'प्रथम-चरम' इत्यादिसूत्रेण विभाषा एव भवति इति यदि स्वीक्रियते तदा प्राप्तविभाषा भवति। तदा तस्य उभयशब्दभिन्नतयप्रत्ययान्तेषु द्वितीयादिशब्देषु विभाषा न प्रवर्तते।

यदि सर्वादीनि इति पदम् 'प्रथमचरमे' त्यादिसूत्रे नानुवर्त्यते, तदा 'प्रथमचरमे'त्यादिसूत्रं तयप्रत्ययान्ते उभयशब्दे द्वितयादिशब्देषु च प्राप्नोति। तत्र उभयशब्दस्थले नित्यसंज्ञायाः विकल्पसंज्ञायाश्च प्राप्तौ पूर्वविप्रतिषेधेन नित्या एव स्वीक्रियते चेत् विकल्पसंज्ञा द्वितयादिष्वेव प्रवर्तते। सा तु सर्वथा अप्राप्ता इति कृत्वा एषा अप्राप्तविभाषा भवति। तदा उभय-जस्-इत्यत्र विकल्पसंज्ञा न भवति।

यदि पूर्वोक्तरीत्या उभयशब्दस्थले द्वयोः संज्ञयोः प्राप्तौ, परिविप्रतिषेधेन विकल्पसंज्ञा एव स्वक्रियते, तदा उभयशब्दे प्राप्तसंज्ञायाः द्वितीयादिशब्देषु अप्राप्तसंज्ञायाश्च विभाषणात् 'प्रथम-चरम' इत्यादिसूत्रविहितविभाषा उभयत्रविभाषा भवति। एवं स्थिते का विभाषा अत्र स्वीकार्या इति संशये अत्र लक्ष्यैकचक्षुष्काभ्यां वार्तिक-भाष्यकाराभ्याम् 'सर्वादी'त्यस्यानुवृत्तिं स्वीकृत्य प्राप्तविभाषापक्ष एव सिद्धान्तितः। तेन द्वितीयादिशब्देषु विभाषा न प्रवर्तते इति सिद्धान्तः।

२. 'उपसर्गवियुक्तात्क्रमधातोः विभाषया आत्मनेपदविधायकम् अनुपसर्गाद्वा' १-३-४३ इति सूत्रम्। वृत्त्यादिष्वर्थेषु क्रमेर्धातोः नित्यमात्मनेपदविधायकं 'वृत्ति-सर्ग-तायनेषु क्रमः' १-२-२८ इति सूत्रम्। यदि, अस्मात् 'वृत्ति-सर्ग-तायनेषु' इति पदं 'अनुपसर्गाद्वा' इत्यत्र अनुवर्त्यते, तदा वृत्ति-सर्ग-तायनेष्वेव इति अनुपसर्गात् क्रमेः विभाषया आत्मनेपदं विदधत् एतत् सूत्रं व्याप्यसूत्रं भवति। अनुपसर्गे सोपसर्गे वा क्रमेः नित्यम् आत्मनेपदं विदधत् प्रथमसूत्रं व्यापकसूत्रं भवति। एवं सति एषा प्राप्तविभाषा भवति। तथा च 'वृत्तिसर्गतायनभिन्नार्थेषु' क्रमेः विभाषा न प्रवर्तते।

यदि 'वृत्ति-सर्ग-तायनेषु' इति पदं 'अनुपसर्गाद्वा' १-३-४३ इति सूत्रे नानुवर्त्यते, तदा 'अनुपसर्गाद्वा' १-३-४३ इति सूत्रं 'वृत्ति-सर्ग-तायनभिन्नार्थेषु' क्रमेः विभाषायाः चरितार्थत्वात् वृत्त्यादिष्वर्थेषु अनुपसर्गात् क्रमधातोः नित्य-विभाषयोः प्राप्तौ पूर्वविप्रतिषेधेन नित्यात्मनेपदमेव कुरुते इति निर्णीयते चेत्, तदा विभाषासूत्रं वृत्तिसर्गतायनभिन्नार्थेष्वेव अर्थेषु सर्वथा अप्राप्तस्य आत्मनेपदस्य विभाषया विधानात् इयमप्राप्तविभाषा सम्पद्यते। यदि अननुवृत्तिपक्षे एव, पूर्वोक्तरीत्या वृत्त्यादिष्वर्थेषु अनुपसर्गात् क्रमधातोः नित्य-विभाषयोः प्राप्तौ, परविप्रतिषेधेन विकल्पसंज्ञा एव

स्वीक्रियते, तदा वृत्त्यादिष्वर्थेषु प्राप्तसंज्ञायाः तद्भिन्नार्थेषु अप्राप्तसंज्ञायाश्च विभाषणात् 'अनुपसर्गाद्वा १-३-४३ इति विभाषा उभयत्रविभाषा भवति।

एवं स्थिते का विभाषा अत्र स्वीकार्या? इति संशये अत्र 'वृत्ति-सर्ग-तायनेषु' इत्यननुवृत्तिं स्वीकृत्य अप्राप्तविभाषापक्ष एव सिद्धान्तितः वार्तिक-भाष्यकाराभ्याम्। तेन वृत्ति-सर्गतायनभिन्नार्थेषु 'क्रमेः विभाषा न प्रवर्तते इति सिद्धान्तः।

**मूलग्रन्थपाठो व्याख्या च**

**(वा.) अप्राप्ते त्रिसंशयाः**

**इत उत्तरं या विभाषा अनुक्रमिष्यामः, अप्राप्ते ताः द्रष्टव्याः॥ त्रिसंशयास्तु भवन्ति-प्राप्ते, अप्राप्ते, उभयत्र वेति**

**(वा.) द्वन्द्वे च विभाषा जसि**

**प्राप्ते उभयत्र वेति सन्देहः॥ कथं वा प्राप्ते? कथं वाऽप्राप्ते? कथं वोभयत्र? उभयशब्दः सर्वादिषु पठ्यते। तयपश्चायजादेशः क्रियते। तेन वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति॥ अप्राप्ते। अयच्प्रत्ययान्तरम्॥**

**व्याख्या**- अप्राप्ते त्रिसंशयाः = अप्रप्तविभाषास्थलेऽपि प्राप्ताप्राप्तोभयत्रविभाषा वेति त्रिप्रकारकः सन्देहो जायते। किन्तु इतः उत्तरं याः विभाषाः अधिकारत्वेन गमिष्यन्ति ताः अप्राप्ते एव सन्ति। यद्यपि तत्र तत्र त्रिषु अर्थेषु सन्देहो जायते। यथा- द्वन्द्वे च-विभाषा जसि इत्यत्र सन्देहो भवति, 'द्वन्द्वे या सर्वनामसंज्ञा निषिध्यते-सा जसाधारे श्याख्ये विभाषा भवतीति, वर्णाश्रमेतरे-वर्णाश्रमेतराः इत्युदाहरणम्। अत्र प्राप्ताप्राप्तोभयत्रविभाषेति सन्देहो जायते।

सन्देहसाधकेन भाष्येण उच्यते - उभयशब्दः सर्वादिषु पठितोऽस्ति, तयपः अयच् भवति सर्वादीनि इति नित्यं संज्ञा प्राप्ता, प्रथमचरमेति तयप्प्रत्ययान्तस्य विकल्पेन प्राप्ता, अत्र परविप्रतिषेधे उभयत्रविभाषासन्देहः, पूर्वविप्रतिषेधे अप्राप्तविभाषासन्देहः।

सिद्धान्तस्तु 'उभादुदात्त' इति सूत्रे तयपोऽननुवृत्त्या अयचः प्रत्ययान्तरत्वे स्वीकृते अप्राप्तविभाषैव इयम्।

**मूलग्रन्थपाठः**

**यदि प्रत्ययान्तरम्, उभयतीति ईकारो न प्राप्नोति॥ मा भूदेवम्, मात्रजित्येवं भविष्यति। कथम्? मात्रजिति नेदं प्रत्ययग्रहणम्॥ किं तर्हि? प्रत्याहारग्रहणम्॥ क्व सन्निविष्टानां प्रत्याहारः? मात्रशब्दात् प्रभृति आ अयचश्चकारात्॥ यदि प्रत्याहारग्रहणम्। 'कति तिष्ठन्ति' अत्रापि प्राप्नोति॥ अत इति वर्तते॥ एवमपि 'तैलमात्रा घृतमात्रा' अत्रापि प्राप्नोति। सदृशस्याप्यसन्निविष्टस्य न भविष्यति प्रत्याहारेण ग्रहणम्॥**

**व्याख्या**- उभयशब्दे अयच् इति प्रत्ययान्तरस्वीकारे तत्र प्रथमचरमेत्यादेरप्राप्त्या द्वितय द्वितया इत्यादौ प्रथमचरमेति सूत्रस्य अप्राप्तविभाषात्वमेव यदि मन्यते तदा उभयीत्यत्र 'टिडढाणञ्' इति तयप्प्रत्ययान्ततया ङीप् (ईकारः) न प्राप्नोति इति समाधानबाधे सति उक्तम्- तत्र तयप्प्रत्ययान्ततया ङीप् माभूत्। मात्रच् इति प्रत्याहारग्रहणेन अयच्प्रत्ययस्य मात्रच्प्रत्याहारान्तर्गततया उभयी इत्यत्र मात्रच्प्रत्ययान्तत्वेन 'टिड्ढाणञ्' इति ङीप् स्यादेव। कति तिष्ठन्ति इत्यत्र ङीपः सम्भावना इत्थं स्वीकारे न वक्तव्या, यतो हि ङीब्विधौ 'अतः' इत्यस्यानुवृत्तिरस्ति। अतः कति इत्यत्र न दोषः भवेत्। तैलमात्रा घृतमात्रा इति प्रयोगे सदृशो मात्रशब्दः मानवाचकः प्रत्याहारे सन्निविष्टो नास्ति अतस्तत्र न दोषो भवेत्।

**मूलग्रन्थपाठः**

**(वा.) ऊर्णोतेर्विभाषा**

**प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः॥ कथं वा प्राप्ते? कथं वाऽप्राप्ते? कथं वोभयत्र?**

**'असंयोगाल्लिट् कित्' इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति॥ अप्राप्ते॥ अन्यद्धि कित्त्वम्, अन्यद्धि ङित्वम्॥**

**(वा.) एकं चेन्ङित्कितौ**

**यद्येकं ङित्कितौ, ततः सन्देह॥ अथ हि नाना, नास्ति सन्देहः॥ यद्यपि नाना, एवमपि सन्देहः- प्रौर्णुवीति। 'सार्वधातुकमपित्' इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति॥**

**व्याख्या**- ऊर्णोतेर्विभाषेति सूत्रम् उर्णोतेः परस्य इडादिलिटः कित्वं प्राप्ते अप्राप्ते उभयत्र वा विभाषा अस्ति इति सन्देहो भवति। यदि विभाषोर्णोः इति सूत्रम् असंयोगाल्लिट् कित् इत्यत्रानुवर्तेत तदा नित्यं कित्त्वे प्राप्तेऽनेन विकल्प्यते चेत् प्राप्तविभाषा भवति। अथ सूत्रं तत्र नानुवर्तते परविप्रतिषेधश्च तदा अप्राप्तविभाषा भवति। यदि पूर्वविप्रतिषेधः स्वीक्रियते उभयत्र विभाषा भवति। अत्र कित्त्वङित्त्वयोरैक्यबुद्ध्या एवमुच्यते। सिद्धान्तस्तु- अप्राप्तविभाषासूत्रमिदम् उर्णोतेर्विभाषा इत्यस्ति। यतो हि कित्त्वङित्त्वयोरस्ति भेदः।

गुणनिषेधरूपकार्यस्य ऐक्यात् यदि किन्ङितौ एकमेव स्यात्तदा सन्देहो भवितुमर्हति, यदि कित्त्वं (नाना) भिन्नं ङित्वं च भिन्नं तदा नास्त्यत्र सन्देहः। समाधाता वदति-कित्त्वङित्त्वयोः नानात्वेऽपि प्रौर्णुवि इत्यत्र लङ उत्तमपुरुषैकवचने सन्देहो भवत्येव। तथाहि सार्वधातुकमपि दित्यत्र 'विभाषोर्णोः' इति यदि वाक्यभेदेन अनुवृत्त्या सम्बध्यते तदा प्राप्तविभाषा भवति। अन्यत्र वा प्राप्ते=यदि न सम्बद्ध्यते, उभे सूत्रे स्वतन्त्रे भवतः तदा ऊर्णुविता इत्यत्र चरितार्थस्य विकल्पस्य ऊर्णुतः इत्यत्र चरितार्थस्य नित्यस्य ङित्त्वस्य च प्रौर्णुवि इत्यत्र प्राप्तौ सत्यां परविप्रतिषेधेन नित्ये ङित्त्वे जाते, विकल्पे प्रोर्णुविता इत्यादिमात्रविषयकतया अप्राप्तविभाषात्वमेव सिद्ध्यति। पूर्वविप्रतिषेधेन प्राप्तौ विकल्पः इष्टः, तदा प्रौर्णुवि इत्यत्र प्राप्तविभाषात्वम्, ऊर्णुविता इत्यत्र च अप्राप्तविभाषात्वमिति उभयत्रविभाषा भवति। इत्थं त्रिप्रकारकसंशये सिद्धान्तमाह भाष्यकारः- अप्राप्तविभाषात्वमेव उर्णोतेर्विभाषेत्यस्य।

**मूलग्रन्थपाठः**

**(वा.) विभाषोपयमने**

**प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः। कथं वा प्राप्ते? कथं वा अप्राप्ते? कथं वोभयत्र? 'गन्धन' इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति॥ अप्राप्ते। गन्धन इति निवृत्तम्॥**

**व्याख्या**- 'विभाषोपयमने' इति कित्त्वविधायकं सूत्रं, तत्र प्राप्ताप्राप्तोभयत्रविभाषायाः सन्देहो भवति। सूत्रे गन्धने इत्यस्यानुवृत्तिः स्यात् तदा 'यमो गन्धने' इति नित्यं प्राप्तं प्रबाध्य गन्धनसहिते उपयमने = स्वीकारे प्राप्ते विभाषा स्यात्। अननुवृत्तौ सत्याम् उपयमनमात्रे चरितार्था विभाषा गन्धनाङ्गे उपयमने यदि प्राप्ता तदा पूर्वविप्रतिषेधेन अस्यैव प्राप्तौ सत्यां विभाषा इयमप्राप्ता एव। उभयत्र वेति = परविप्रतिषेधेन यदि विकल्प एव इष्टः तदा उपयमने अप्राप्तविभाषा, गन्धनयुक्ते उपयमने (विवाहे) प्राप्तविभाषा इति उभयत्रविभाषात्वं भवति। इत्थं त्रिसंशये जाते 'अप्राप्तविभाषा एव इयम्', यतो हि अत्र 'गन्धनम्' इति नानुवर्तते इति सिद्धान्तः कृतः।

**मूलग्रन्थपाठः**

**( वा. ) अनुपसर्गाद् वा**

**प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः। कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ? 'वृत्तिसर्गतायनेषु क्रमः' इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति। अप्राप्ते। वृत्त्यादिष्विति निवृत्तम्॥**

**( वा. ) विभाषा वृक्षमृगादीनाम्**

**प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः। कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ? 'जातिरप्राणिनाम्' इति वा नित्ये प्राप्ते अन्यत्र वाऽप्राप्ते, उभयत्र वेति। अप्राप्ते। 'जातिरप्राणिनाम्' इति निवृत्तम्॥**

**व्याख्या**– 'अनुपसर्गाद् वा' इति क्रम्धातोरात्मनेपदं कुरुते विभाषया। तत्र सन्देहो भवति। यदिसूत्रे 'वृत्तिसर्गतायनेषु क्रमः' इत्यनुवर्तते तदा नित्यम् अनेन प्राप्ते विकल्प्यते इति प्राप्तविभाषा भवति। अननुवृत्तौ तु अनुपसर्गादौ एव प्राप्त्या अप्राप्तविभाषा भवति। परविप्रितिषेधेन वृत्त्यादौ प्राप्तविभाषा अवृत्त्यादौ च अप्राप्तविभाषा इति उभयत्रविभाषासन्देहः। अत्र सिद्धान्तस्तु अप्राप्तविभाषा एव। यतो हि सूत्रे वृत्तिसर्गादयो नानुवर्तन्ते। तेनावृत्त्यादिषु चरितार्था इयम् अप्राप्तविभाषा एव।

एवमेव विभाषावृक्षमृगेति विकल्पेन एकवद्भावं करोति तत्र सन्देहो जायते। जातिरप्राणिनामित्यस्य तत्रानुवृत्तौ नित्ये प्राप्ते विभाषा। अननुवृत्तौ च धानाशष्कुलि इत्यादौ अप्राप्तविभाषा एव। परविप्रतिषेधेन तु अप्राणिषु प्राप्तायां प्राणिषु अप्राप्तायां विभाषया प्रवृतौ उभयत्रेति सन्देहः। सिद्धान्तस्तु– अप्राप्ता एव विभाषा इयम्। यतो हि अत्र जातिरप्राणिनाम् इति नानुवर्तते।

**मूलग्रन्थपाठः**

**( वा. ) उषविदजागृभ्योऽन्यतरस्याम्**

**प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः॥ कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ? प्रत्ययान्तादिति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति॥ अप्राप्ते। प्रत्ययान्ता धात्वन्तराणि॥**

**व्याख्या**– उषविदजागृभ्योऽन्यतरस्याम् इत्याम्विधायके सनाद्यन्ता धातवः इत्यस्य सम्बन्धे प्रत्ययान्ताः उषादयः इत्यर्थोऽङ्गीक्रियते तदा प्राप्तविभाषा। असम्बन्धे अप्राप्ता। तन्निवृत्तौ परविप्रतिषेधेन प्रवृत्तौ उभयत्रविभाषासन्देहे अप्राप्तविभाषा इति सिद्धान्तः। यतो हि प्रत्ययान्ताः = सनाद्यन्ताः, धात्वन्तराणि। अतस्तत्र नास्य प्रवृत्तिः।

**मूलग्रन्थपाठः**

**( वा. ) दीपादीनां विभाषा**

**प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः। कथं वा प्राप्ते ? कथं वा अप्राप्ते ? कथं वोभयत्र ? भावकर्मणोरिति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति॥ अप्राप्ते। कर्तरि इति हि वर्तते॥ एवमपि सन्देहः– न्याय्ये वा कर्तरि, कर्मकर्तरि वेति॥ नास्ति सन्देहः। सकर्मकस्य कर्ता कर्मवद्भवति। अकर्मकश्च दीपादयः॥ अकर्मकाः अपि वै सोपसर्गाः सकर्मका भवन्ति॥**

**कर्मापदिष्टा विधयः कर्मस्थभावकानां कर्मस्थक्रियाणां वा भवन्ति। कर्तृस्थभावकाश्च दीपादयः॥**

[नवेति विभाषा (१-१-४३) अप्राप्ते त्रिसंशयाः इत्याभ्यान्तं यावत्]

**व्याख्या**– दीपजनबुधपूरितायिप्यायीभ्योऽन्यतरस्यामित्यत्र प्राप्ताप्राप्तोभयत्रेति सन्देहो भवति। यदि चिण्भावकर्मणोरित्यत्र दीपजनेत्याद्यनुवृत्तिस्तदा वाक्यभेदेन सम्बन्धे प्राप्तविभाषा। अननुवृत्तौ च परविप्रतिषेधस्वीकारे अप्राप्तविभाषा, पूर्वविप्रतिषेधे च उभयत्रेति सन्देहः। किन्तु दीपजन इत्यस्य कर्तरि चिणो विधानात् अप्राप्तविभाषात्वमेवेति सिद्धान्तः। यद्यपि न्याय्ये कर्तरि कर्मकर्त्तरि वा सूत्रप्रवृत्तेः सन्देहो जायते तथाऽपि सकर्मकस्य कर्तुः कर्मवद्भावविधानात् दीपादीनामकर्मकत्वाच्च नास्ति सन्देहः। यद्यपि अकर्मका अपि दीपादयः सोपसर्गा सकर्मका भवितुमर्हन्ति। तथापि वक्तव्यम्– कर्मापदिष्टाः विधयः कर्मस्थक्रियकाणां भवन्ति, दीपदिधातवः कर्तृस्थक्रियकाः सन्ति। अत एव जायते स्वयमेव इत्युदाहरणं सङ्गतं भवति।

**मूलग्रन्थपाठः**

**( वा. ) विभाषाग्रे प्रथमपूर्वेषु**

**प्राप्ते अप्राप्ते उभयत्र वेति सन्देहः। कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ? 'आभीक्ष्ण्ये' इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति॥ अप्राप्ते। 'आभीक्ष्ण्ये' इति निवृत्तम्।**

**( वा. ) तृन्नादीनां विभाषा**

**प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः ॥ कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोऽभयत्र ? 'आक्रोशे' इति वा नित्यं प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति॥ अप्राप्ते। आक्रोशे इति निवृत्तम्।**

**व्याख्या**– विभाषाग्रेप्रथमपूर्वेषु इति क्त्वाणमुल्विधायके सूत्रे विभाषा प्राप्ते अप्राप्ते उभयत्र वेति सन्देहो जायते। आभीक्ष्ण्ये णमुल् चेत्यस्यानुवृत्त्या तेन नित्ये प्राप्तेऽनेन विभाषेति प्राप्तविभाषा सन्देहः। अननुवृत्त्या अप्राप्ते इयं विभाषा। परविप्रतिषेधस्वीकारे विकल्पस्य इष्टत्वे आभीक्ष्ण्ये प्राप्ता, अनाभीक्ष्ण्ये च अप्राप्ता इति उभयत्रविभाषासन्देहो भवति। सिद्धान्ती तु आभीक्ष्ण्ये इत्यस्याननुवृत्त्या अप्राप्तविभाषामेवाङ्गीकरोति।

तृन्नन्नतीक्ष्णशुचिषु इति नञ उत्तरपदानां तृन्नन्तादीनामन्तोदात्तत्वे त्रिसंशयाः भवन्ति। आक्रोशे चेत्यस्यानुवर्तनात् आक्रोशे नित्ये प्राप्ते प्राप्तविभाषा। अननुवृत्तौ आक्रोशे विभाषा तृन्नादिविरहे 'अपचः' इत्यादौ सावकाशस्य नित्यस्य अन्तोदात्तस्य अनाक्रोशे 'अकर्ता' इत्यादौ सावकाशस्य विकल्पस्य च आक्रोशतृन्नन्तादिषु अकर्ता इत्यादिषु प्राप्तौ पूर्वविप्रतिषेधाङ्गीकारे नित्यमन्तोदात्तत्वे जाते 'विभाषाग्रे'– सूत्रम् अनाक्रोशे एव प्रवर्तते इत्यप्राप्तविभाषा। परिविप्रतिषेधाङ्गीकारे आक्रोशे प्राप्तविभाषा अनाक्रोशे चाप्राप्तविभाषेति उभयत्र विभाषा भवितुमर्हति। सिद्धान्ती अत्र वदति यद् 'आक्रोशे' इत्यस्याननुवर्तनात् अप्राप्तविभाषा एव इयम्।

**मूलग्रन्थपाठः**

**( वा. ) एकहलादौ पूरयितव्येऽन्यतरस्याम्**

**प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः॥ कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ? 'उदकस्योदः संज्ञायाम्' इति वा नित्यं प्राप्ते, अन्यत्र वा अप्राप्ते, उभयत्र वेति॥ अप्राप्ते। संज्ञायामिति निवृत्तम्॥**

**( वा. ) श्वादेरिञि पदान्तस्यान्तरस्याम्**

**प्राप्ते, अप्राप्ते उभयत्र वेति सन्देहः। कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ?**

**इञीति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति॥ अप्राप्ते। इञीति निवृत्तम्।**

**व्याख्या**– एकहलादौ पूरयितव्येऽन्यतरस्यामिति उदकुम्भः इत्यत्र विकल्पेन उदादेशं करोति। इयं विभाषा प्राप्ताऽप्राप्तोभयत्र वेति सन्देहो जायते। कथं सन्देहः ? इति प्रश्ने उच्यते – उदकस्योदः संज्ञायाम् इति संज्ञापदघटितस्यानुवृत्तौ सत्यां संज्ञायां सावकाशस्य पूर्वविप्रतिषेध पक्षाङ्गीकारे असंज्ञायां विकल्पप्राप्तिस्वीकारे तत्र संज्ञानिमित्तकस्य नित्यस्य प्राप्तेरभावाद् अप्राप्तविभाषापक्ष आयाति। परविप्रतिषेधपक्षाङ्गीकारे विकल्पप्रवृत्तेः स्वीकारेण संज्ञायां प्राप्तस्य असंज्ञायामप्राप्तस्य च विकल्पकरणादुभयत्रविभाषापक्ष आयाति इति त्रिसंशयाः भवन्ति। किन्तु संज्ञायामित्यस्य अनुवृत्तेरभावात् अप्राप्तविभाषैव इति सिद्धान्तः।

श्वादेरिञि इति सूत्रं श्वाभस्त्रिः इत्यादौ प्राप्तमैजागमं निषेधति। किन्तु पदान्तस्यान्तरस्यामिति शौवापदमित्यादौ विकल्पेन ऐजागमं शास्ति। अत्र प्राप्ताऽप्राप्तोभयत्रविभाषासन्देहो भवति। कथं सन्देहः इति प्रश्ने उक्तम् – इञीति वा नित्ये प्राप्ते इत्यादिना। अर्थात् पदान्तस्यान्यतरस्यामिति सूत्रे श्वादेः इञि इति सूत्रानुवर्तनेन 'इञि तद्धिते श्वादेरङ्गस्याचामादेः अचो वृद्धिबाधक ऐच् न' इत्यर्थे सति नित्ये निषेधे प्राप्ते अनेन विकल्पनात् प्राप्तविभाषा। अनुवृत्त्यभावे श्वापद् इ इत्यत्र पूर्वविप्रतिषेधेन नित्यनिषेधस्वीकारे इञ्रहितस्यैव विकल्पविषयत्वेन तत्र नित्यविधेरप्राप्त्या (शौवापदम्) अस्य च प्राप्त्या अप्राप्तविभाषात्वं भवति। इञ् इत्यस्यानुवृत्तौ परिविप्रतिषेधे इञि प्राप्ते अन्यत्राप्राप्ते विभाषा इति उभयत्रविभाषासन्देहः। सिद्धान्ती–इञीति निवृत्त्या पूर्वविप्रतिषेधस्वीकारेण च अप्राप्त–विभाषात्वमस्य साधयति।

**मूलग्रन्थपाठः**

**( वा. ) सपूर्वायाः प्रथमाया विभाषा**

**प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः। कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ? चादिभिर्योगे इति वा नित्ये प्राप्ते, अन्यत्र वा अप्राप्ते, उभयत्र वेति। अप्राप्ते। चादिभिर्योग इति निवृत्तम्॥**

**( वा. ) ग्रो यङ्य अचि विभाषा॥ प्राप्ते, अप्राप्ते, उभयत्र वेति सन्देहः। कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ? यङीति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति॥ अप्राप्ते। यङीति निवृत्तम्।**

**व्याख्या**– सपूर्वायाः प्रथमायाः विभाषेति सूत्रे 'न च वाहाहैवयुक्ते, पश्यार्थैश्चानालोचने इत्यनुवृत्त्या 'चादिपञ्चकपश्यार्थयोगे एते आदेशा न स्युः' इति व्यापकार्थेन नित्यनिषेधे प्राप्ते 'चादिपञ्चक पश्यार्थकधातुयोगे विद्यमानपूर्वप्रथमान्तात् परे एते आदेशाः वा स्यु' इति निषेधविकल्पनात् प्राप्तविभाषात्वसन्देहः। अनुवृत्त्यभावे 'सदा त्वां मां च रक्षतु' इत्यादौ सावकाशस्य नित्यनिषेधस्य 'भक्तस्त्वमप्यहं तेन हरिस्त्वां मां च त्रायते, इत्यत्र प्राप्तौ पूर्वविप्रतिषेधेन नित्यनिषेधस्यैव प्रवृत्तेः स्वीकारे निषेधविकल्पस्य चादिपञ्चकयोगरहिते प्रवृत्तेः स्वीकारेण तत्र नित्यनिषेधस्य प्राप्त्यभावात् अप्राप्तविभाषात्वसन्देहः। अननुवृत्तौ परविप्रतिषेधस्वीकारे चादिपञ्चकयोगे प्राप्ते तद्रहिते अप्राप्ते इति उभयत्रविभाषासन्देहो जायते।

सिद्धान्ती तु चादिपञ्चकानुवृत्तेः अभावात् अप्राप्तविभाषामेव स्वीकरोति। ग्रो यङि इति सूत्रं निजेगिल्यते इत्यत्र नित्यं लत्वं करोति। अचि विभाषा इति गिरति गिलति इत्यादौ विकल्पेन लत्वं करोति। अत्र ग्रो यङीति सूत्रात् यङीत्यस्यानुवृत्त्या अचि परे यङ्विषये रेफस्य वा लत्वमित्यर्थे सति निजेगिलः इत्यादौ नित्ये लत्वे प्राप्तेऽनया विकल्पनात् प्राप्ते विभाषा, यङीत्यस्याननुवृत्तौ समुदायलुकि न लुमताङ्गस्य इति निषेधात् न तस्य प्राप्तिरिति अप्राप्तविभाषात्वं भवति। ग्रो यङि इत्येतत् प्रति प्रकरणे प्रकरणमसिद्धम् इति विभाषाया असिद्धत्वाभावात् प्राप्ते सन्देहः,

यङ्भिन्नविषयोऽस्येति अप्राप्ते विकल्पनात् उभयत्रेति सन्देहः। किन्तु 'ग्रो यङीति' सूत्रस्य अनुवृत्तेरभावात् लक्ष्यानुरोधात् पूर्वविप्रतिषेधस्वीकारात् अप्राप्तविभाषात्वमेवास्य सूत्रस्येति सिद्धान्तः।

[नवेति विभाषा (१-१-४३) अप्राप्ते त्रिसंशयाः इत्याभ्यान्तं यावत्]

**बोधप्रश्नः**

१. कुत्र कुत्र सूत्रेषु अप्राप्तविभाषात्वं निर्णीतम्?

२. द्वन्द्वे च विभाषा जसि इति वार्तिकस्य विवक्षितार्थः कः?

३. का तावत् अप्राप्तविभाषा?

### १४.३.३ प्राप्तविभाषाप्रकरणम्, त्रिसंशयाः, निराकरणञ्च

प्राप्तविभाषासु-प्राचीनाचार्यैः अन्यथान्यथा व्याख्यानात्, सन्देहो भवति यत् इयं विभाषा प्राप्ते अप्राप्ते उभयत्र वा? इति त्रिष्वर्थेषु संशयः। यत्र संशयः भवति अर्थात् याः प्राप्तविभाषा एव, ताः अत्र प्रदर्श्यन्ते यत्र संशयं विनैव प्राप्तविभाषात्वनिश्चयो भवति ताः 'अनुस्वारस्य ययि परसवर्णः' ८-४-५८ 'वा पदान्तस्य' ८-४-५९ इत्यादयः अत्र न प्रदर्शिताः सन्ति।

१. विभाषा विप्रलापे १-३-५० २. विभाषोपपदेन प्रतीयमाने १.३.७७ ३. तिरोऽन्तर्धौ-विभाषा कृञि १.४.७२, ४. अधिरीश्वरे १.४.९६ ५. दिवस्तदर्थस्य, विभाषा कृञि १.४.९८ ६. विभाषोपसर्गे २.३.५९ इति सूत्रविहितविभाषाविषये प्राप्ताप्राप्तोभयत्रेति सन्देहः।

अत्र सिद्धान्ताः- एवमत्र संशये जाते वार्तिककारेण इमाः सर्वा अपि प्राप्तविभाषाः इति सिद्धान्तितम् तथाहि -

१. विभाषा विप्रलापे इति सूत्रे 'व्यक्तवाचां समुच्चारणे' इति सूत्रात् 'व्यक्तवाचाम्' इत्यस्यानुवृत्तिं स्वीकृत्य प्राप्तविभाषापक्ष एव सिद्धान्तितः वार्तिक-भाष्यकाराभ्याम्। तेन 'शकुनयः विप्रवदन्ति' इत्यादौ इयं विभाषा न प्रवर्तते।

२. विभाषोपपदेन प्रतीयमाने इति सूत्रे कर्त्रभिप्राये क्रियाफले इति सूत्रात् 'स्वरित-ञितः' इत्यस्यानुवृत्तिं स्वीकृत्य प्राप्तविभाषापक्ष एव सिद्धान्तितः वार्तिक-महाभाष्यकाराभ्याम्। तेन पञ्चसूत्रीतः प्राप्तात् भिन्ने प्रयोगे विभाषा न प्रवर्तते।

३. विभाषा कृञि इति सूत्रे 'तिरोऽन्तर्धौ' इति सूत्रात् 'अन्तर्धौ' इत्यस्य अनुवृत्तिं स्वीकृत्य प्राप्तविभाषापक्ष एव सिद्धान्तितः वार्तिक-भाष्यकाराभ्याम्। तेन अनन्तर्धौ इयं विभाषा न प्रवर्तते।

४. विभाषा कृञि इति सूत्रे 'अधिरीश्वरे इति सूत्रात् 'ईश्वरे' इत्यस्य अनुवृत्तिं स्वीकृत्य प्राप्तविभाषापक्ष एव सिद्धान्तितः वार्तिक-भाष्यकाराभ्याम्। तेन अधि भुवि नृप इत्यादौ इयं विभाषा न प्रवर्तते।

५. विभाषोपसर्गे इति सूत्रे 'दिवस्तदर्थस्य' इति सूत्रात् तदर्थस्य (=द्यूतार्थस्य) 'द्यूतार्थस्य सोपसर्गस्य दिवः कर्मणि षष्ठी इत्यर्थं स्वीकृत्य प्राप्तविभाषापक्ष एव सिद्धान्तितः वार्तिक-भाष्यकाराभ्याम्। तेन स्तुत्यर्थके 'ब्राह्मणं दीव्यति' इत्यत्र इयं विभाषा न प्रवर्तते।

**मूलग्रन्थपाठो व्याख्या च**

**( वा. ) प्राप्ते च**

**इत उत्तरं या विभाषा अनुक्रमिष्यामः प्राप्ते ता द्रष्टयाः। त्रिसंशयास्तु भवन्ति। प्राप्ते अप्राप्ते उभयत्र वेति।**

**व्याख्या**– पाप्ते अप्राप्ते उभयत्र वा इयं विभाषा ? इति त्रिष्वर्थेषु संशयः अत्र भवति, किन्तु वस्तुतः या प्राप्तविभाषा एव ताः पञ्च अत्र प्रदर्श्यन्ते इति वार्तिक–तद्भाष्ययोरर्थः। यत्र संशयं विनैव प्राप्तविभाषात्वनिश्चयो भवति ताः वा पदान्तस्य ८–४–५९ इत्यादयः अत्र न प्रदर्श्यन्ते इति, पूर्वोक्तवार्तिकम् अधिकारवार्तिकम् इति च ज्ञेयम्।

**मूलग्रन्थपाठः**

**( वा. ) विभाषा विप्रलापे**

**प्राप्ते अप्राप्ते उभयत्र वेति सन्देहः। कथं च प्राप्ते। कथं चाप्राप्ते। कथं वोभयत्र। व्यक्तवाचामिति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति। प्राप्ते। व्यक्तवाचामिति हि वर्तते।**

**व्याख्या**– विभाषा विप्रलापे १.३.५० इति सूत्रविहितविभाषाविषये यद्यपि त्रिसंशयाः भवन्ति, तथापि इयं प्राप्ते विभाषा ज्ञेया, 'व्यक्तवाचां समुच्चारणे' १.३.४८ इति सूत्रात् व्यक्तवाचामिति पदमनुवर्त्य नित्यशास्त्रप्राप्तिस्थले एव विभाषाशास्त्रस्यापि प्रवृत्तिस्वीकारात्, इति वार्तिक–तद्भाष्ययोरर्थः।

अत्र त्रिसंशयोपपादनाय नित्यसूत्रात्–विकल्पसूत्रे व्यक्तवाचामित्यस्य अनुवृत्ति–अननुवृत्ती, तयोः पक्षयोः फलभेदश्च द्रष्टव्यः। तदर्थं स्थलत्रयं परीक्षणीयं भवति। तत् अधस्तात् दीयते –

१. व्यक्तवाचां मनुष्याणां विप्रलापे विद्यमानः 'वद' धातुः। यथा–विप्रवदन्ते ब्राह्मणाः।

२. व्यक्तवाग्भिन्नानां शकुन्यादीनां विप्रलापे विद्यमानः 'वद' धातुः। यथा– विप्रवदन्ति खगाः।

३. व्यक्तवाचां विप्रलापभिन्नार्थे विद्यमानः 'वद' धातुः। यथा– सम्प्रवदन्ते ब्राह्मणाः।

यदि पूर्वसूत्रात् विभाषासूत्रे व्यक्तवाचामिति पदमनुवर्तते तदा प्रथमस्थले एव विभाषा भवति, सा च प्राप्तविभाषा। यदि नानुवर्तते, तदा द्वितीये अप्राप्तिस्थले विभाषा भवति, तदा सा अप्राप्तविभाषा। प्रथमे प्राप्तिस्थले तु पूर्वविप्रतिषेधेन नित्यशास्त्रमेव भवति, नित्यशास्त्रस्य विप्रलापभिन्नार्थे सम्प्रवदन्ते ब्राह्मणाः इत्यादौ, विभाषाशास्त्रस्य च व्यक्तवाग्भिन्नस्थले चारितार्थ्यात्। अननुवृत्तिपक्षे एव, प्रथमे प्राप्तिस्थले यदि परिविप्रतिषेधेन विभाषा भवति, तदा सा उभयत्रविभाषा। एवं त्रैविध्यसंभवे अनुवृत्तिमाश्रित्य लक्ष्यानुसारेण प्राप्तविभाषापक्षः एव सिद्धान्तितः।

**मूलग्रन्थपाठः**

**( वा. ) विभाषोपपदेन प्रतीयमाने**

**प्राप्ते अप्राप्ते उभयत्र वेति सन्देहः। कथं च प्राप्ते। कथं चाप्राप्ते। कथं वोभयत्र। स्वरितञित इति वा नित्ये प्राप्ते। अन्यत्र वाऽप्राप्ते। उभयत्र वेति। प्राप्ते। 'स्वरितञितः' इति हि वर्तते।**

**व्याख्या**– 'विभाषोपपदेन प्रतीयमाने' इति सूत्रविहितविभाषाविषये यद्यपि त्रिसंशयाः

भवन्ति, तथापि इयं प्राप्ते विभाषा ज्ञेया, 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इति सूत्रात् 'स्वरित ञितः' इति पदमनुवर्त्य नित्यशास्त्रप्राप्तिस्थले एव विभाषाशास्त्रस्यापि प्रवृत्तिस्वीकारात्, इति वार्तिक-तद्भाष्ययोरर्थः।

अत्र त्रिसंशयोपपादनाय नित्यसूत्रात्-विकल्पसूत्रे 'स्वरित-ञितः' इत्यस्य अनुवृत्ति-अननुवृत्ती, तयोः पक्षयोः फलभेदश्च द्रष्टव्यः। तदर्थं स्थलत्रयं परीक्षणीयं भवति। तत् अधस्तात् दीयते -

१. क्रियाफलस्य कर्तृगामित्वं यत्र उपपदेन प्रतीयते तादृशः स्वरितेत् ञित् वा धातुः। यथा- स्वं यज्ञं यजते कुरुते वा।

२. क्रियाफलस्य कर्तृगामित्वं यत्र उपपदेन प्रतीयते तादृशः स्वरितेद्भिन्नः ञिद्भिन्नश्च धातुः। यथा- स्वं पाठं पठति।

३. क्रियाफलस्य कर्तृगामित्वं यत्र उपपदेन प्रतीयते तादृशः स्वरितेत् ञित् वा धातुः। यथा-यज्ञं यजते कुरुते वा।

यदि पूर्वसूत्रात् विभाषासूत्रे 'स्वरित-ञितः' इति पदमनुवर्तते, तदा प्रथमस्थले एव विभाषा भवति, सा च प्राप्तविभाषा।

यदि नानुवर्तते, तदा द्वितीये अप्राप्तिस्थले विभाषा भवति, तदा सा अप्राप्तविभाषा। प्रथमे प्राप्तिस्थले तु पूर्वविप्रतिषेधेन नित्यशास्त्रमेव भवति, नित्यशास्त्रस्य उपपदेन न प्रतीतिः। यथा यज्ञं यजते कुरुते वा इत्यादौ, विभाषाशास्त्रस्य च स्वं पाठं पठति इत्यादौ स्वरिक्त ञिद्धातुभिन्नस्थले' चारितार्थ्यात्। अननुवृत्तिपक्षे एव, प्रथमे प्राप्तिस्थले यदि परविप्रतिषेधेन विभाषा भवति, तदा सा उभयत्रविभाषा। एवं त्रैविध्यसंभवे अनुवृत्तिमाश्रित्य लक्ष्यानुसारेण प्राप्तविभाषापक्षः एव सिद्धान्तितः।

**मूलग्रन्थपाठः**

**( वा. ) तिरोऽन्तर्द्धौ, विभाषा कृञि**

**प्राप्ते अप्राप्ते उभयत्र वेति सन्देहः। कथं च प्राप्ते। कथं चाप्राप्ते। कथं वोभयत्र। अन्तर्धाविति नित्ये प्राप्ते। अन्यत्र वाऽप्राप्ते। उभयत्र वेति। प्राप्ते। अन्तर्द्धाविति हि वर्तते।**

**व्याख्या**- विभाषा कृञि इति सूत्रविहितविभाषाविषये यद्यपि त्रिसंशयाः भवन्ति, तथापि इयं प्राप्ते विभाषा ज्ञेया। 'तिरोऽन्तर्द्धौ' इति सूत्रात् 'अन्तर्धौ' इत्यनुवर्त्य नित्यशास्त्रप्राप्तिस्थले, एव विभाषाशास्त्रस्यापि प्रवृत्तिस्वीकारात् इति वार्तिकतद्भाष्योरर्थः। परीक्षणञ्चेत्थम्-

अत्र त्रिसंशयोपादनाय नित्यसूत्रात्-विकल्पसूत्र 'अन्तर्धौ' इत्यस्य अनुवृत्ति-अननुवृत्ती, तयोः पक्षयोः फलभेदश्च द्रष्टव्यः। तदर्थं स्थलत्रयं परीक्षणीयं भवति। तत् अधस्तात् दीयते -

१. 'कृञ्' धातुयुक्तः अन्तर्धिविशिष्टः तिरश्शब्दः। यथा- तिरस्कृत्य = अर्न्धाप्य

२. 'कृञ्' धातुयुक्तः अन्तर्धिरहितः तिरश्शब्दः। यथा- तिरस्कृत्य = उपेक्ष्य

३. 'कृञ्' धातुरहितः अन्तर्धिसहितः तिरःशब्दः। यथा- तिरोभूय

यदि पूर्वसूत्रात् विभाषासूत्रे 'अन्तर्धौ' इति पदमनुवर्तते, तदा प्रथमस्थले एव विभाषा भवति, सा च प्राप्तविभाषा। यदि नानुवर्तते, तदा द्वितीये अप्राप्तिस्थले विभाषा भवति, तदा सा अप्राप्तविभाषा। प्रथमे प्राप्तिस्थले तु पूर्वविप्रतिषेधेन नित्यशास्त्रमेव भवति, नित्यशास्त्रस्य तिरोभूय इत्यादौ, विभाषाशास्त्रस्य च तिरस्कृत्य = उपेक्ष्य इत्यादौ चारितार्थ्यात्। अननुवृत्तिपक्षे एव, प्रथमे प्राप्तिस्थले यदि परविप्रतिषेधेन विभाषा भवति, तदा सा उभयत्रविभाषा। एवं त्रैविध्यसंभवे अनुवृत्तिमाश्रित्य लक्ष्यानुसारेण प्राप्तविभाषापक्षः एव सिद्धान्तितः।

**मूलग्रन्थपाठः**

**( वा. ) अधिरीश्वरे, विभाषा कृञि**

**प्राप्ते अप्राप्ते उभयत्र वेति सन्देहः। कथं च प्राप्ते। कथं चाप्राप्ते। कथं वोभयत्र। प्राप्ते। अधिरीश्वरे इति वर्तते।**

**व्याख्या**– विभाषा कृञि इति सूत्रविहितविभाषाविषये यद्यपि त्रिसंशयाः भवन्ति, तथापि इयं प्राप्ते विभाषा ज्ञेया, 'अभिरीश्वरे' इति सूत्रात् ईश्वरे (=स्वस्वामिसम्बन्धे द्योत्ये) इत्यनुवर्त्य नित्यशास्त्रप्राप्तिस्थले एव विभाषाशास्त्रस्यापि प्रवृत्तिस्वीकारात्, इति वार्तिक–तद्भाष्ययोरर्थः।

अत्र त्रिसंशयो पादनाय नित्यसूत्रात्–विकल्पसूत्रे 'ईश्वरे' इत्यस्य अनुवृत्ति–अननुवृत्ती, तयोः पक्षयोः फलभेदश्च द्रष्टव्यः। तदर्थं स्थलत्रयं परीक्षणीयं भवति। तत् अधस्तात् दीयते –

१. 'कृञ्' धातुयुक्तः ईश्वरत्वद्योतकः अधिशब्दः। यथा भूपो भुवि अधि करोति।

२. 'कृञ्' धातुयुक्तः ईश्वरत्वाद्योतकः अधिशब्दः। यथा अधि भुवि घटः क्रियते।

३. 'कृञ्' धातुरहितः ईश्वरत्वद्योतकः अधिशब्दः। यथा – अधि भुवि भूपः अस्ति।

यदि पूर्वसूत्रात् विभाषासूत्रे 'ईश्वरे' इति पदमनुवर्तते, तदा प्रथमस्थले एव विभाषा भवति, सा च प्राप्तविभाषा। यदि नानुवर्तते, तदा द्वितीये अप्राप्तिस्थले विभाषा भवति, तदा सा अप्राप्तविभाषा। प्रथमे प्राप्तिस्थले तु पूर्वविप्रतिषेधेन नित्यशास्त्रमेव भवति, नित्यशास्त्रस्य अधि भुवि भूपः अस्ति इत्यादौ, विभाषाशास्त्रस्य च अधि भुवि घटः क्रियते इत्यादौ चारितार्थ्यात्। अननुवृत्तिपक्षे एव, प्रथमे प्राप्तिस्थले यदि परविप्रतिषेधेन विभाषा भवति, तदा सा उभयत्रविभाषा। एवं त्रैविध्यसंभवे अनुवृत्तिमाश्रित्य लक्ष्यानुसारेण प्राप्तविभाषापक्षः एव सिद्धान्तितः।

**मूलग्रन्थपाठः**

**( वा. ) दिवस्तदर्थस्य, विभाषोपसर्गे**

**प्राप्ते अप्राप्ते उभयत्र वेति सन्देहः। कथं च प्राप्ते। कथं चाप्राप्ते। कथं वोभयत्र। तदर्थस्येति नित्ये प्राप्ते। अन्यत्र वाऽप्राप्ते। उभयत्र वेति। प्राप्ते। तदर्थस्येति वर्तते।**

**व्याख्या**– 'विभाषोपसर्गे' इति सूत्रविहितविभाषाविषये यद्यपि त्रिसंशयाः भवन्ति, तथापि इयं प्राप्ते विभाषा ज्ञेया, 'दिवस्तदर्थस्य' इति सूत्रात् 'तदर्थस्य' (=द्यूतार्थस्य) इति पदमनुवर्त्य नित्यशास्त्रप्राप्तिस्थले एव विभाषाशास्त्रस्यापि प्रवृत्तिः, इति वार्तिक–तद्भाष्ययोरर्थः।

अत्र त्रिसंशयोपपादनाय नित्यसूत्रात् – विकल्पसूत्रे 'ईश्वरे' इत्यस्य अनुवृत्ति–अननुवृत्ती– तयोः पक्षयोः फलभेदश्च द्रष्टव्यः। तदर्थं स्थलत्रयं परीक्षणीयं भवति। तत् अधस्तात् दीयते –

१. द्यूतार्थकः सोपसर्गः 'दिव्' धातुः। यथा– शतस्य प्रतिदीव्यति।

२. द्यूतभिन्नार्थकः सोपसर्गः 'दिव्' धातुः। यथा ब्राह्मणं दीव्यति = स्तौति

३. द्यूतार्थकः अनुपसर्गः 'दिव्' धातुः। यथा – शतस्य दीव्यति।

यदि पूर्वसूत्रात् विभाषासूत्रे 'तदर्थस्य' (=द्यूतार्थस्य) इति पदमनुवर्तते, तदा प्रथमस्थले एव विभाषा भवति, सा च प्राप्तविभाषा।

यदि नानुवर्तते, तदा द्वितीये अप्राप्तिस्थले विभाषा भवति, तदा सा अप्राप्तविभाषा। प्रथमे प्राप्तिस्थले तु पूर्वविप्रतिषेधेन नित्यशास्त्रमेव भवति, नित्यशास्त्रस्य शतस्य दीव्यति इत्यादौ अनुपसर्गे, विभाषाशास्त्रस्य च ब्राह्मणं दीव्यति = स्तौति इत्यादौ अद्यूतार्थे चारितार्थ्यात्। अननुवृत्तिपक्षे एव, प्रथमे

प्राप्तिस्थले यदि परविप्रतिषेधेन विभाषा भवति, तदा सा उभयत्रविभाषा। एवं त्रैविध्यसंभवे अनुवृत्तिमाश्रित्य लक्ष्यानुसारेण प्राप्तविभाषापक्षः एव सिद्धान्तितः।

[नवेति विभाषा (१-१-४३) अप्राप्ते त्रिसंशयाः इत्याभ्यान्तं यावत्]

**बोधप्रश्नः**

४. उर्णोतेर्विभाषा इति वार्तिकार्थः कः ?

५. कुत्र कुत्र सूत्रे प्राप्तविभाषात्वं स्वीकृतम्।

६. अधिरीश्वरे विभाषा कृञि इत्यत्र विभाषा प्राप्ते विभाषा कथं वर्तते ?

### १४.३.३ उभयत्र विभाषाप्रकरणनिरूपणम्

कासुचित् उभयत्र विभाषासु-प्राचीनाचार्यैः अन्यथान्यथा व्याख्यानात्, तद्दृष्टवताम्' इयं विभाषा पूर्वेण प्राप्ते अर्थे वा ? क्वचित् प्राप्ते अर्थे क्वचित् अप्राप्ते च अर्थे = उभयत्र वा ? इति त्रिष्वर्थेषु संशयः भवति। यत्र एवं संशयः भवति, वस्तुतः याः उभयत्रविभाषा एव, ताः त्रयोदश अत्र भाष्ये प्रदर्शिताः। यत्र संशयं विनैव उभयत्रविभाषात्वनिश्चयो भवति ताः 'ई चाक्रवर्मणस्य' इत्यादयः अत्र न प्रदर्शिताः।

अत्र सिद्धान्ताः- एवमत्र संशये जाते वार्तिककारेण महाभाष्यकारेण च इमाः सर्वा अपि उभयत्रविभाषाः इति सिद्धान्तितम्। तथाहि-

१. हृक्रोरन्यतरस्याम् इति सूत्रे 'गति-बुद्धि... इत्यादिसूत्रात् गत्यादिपदानि नानुवर्तन्ते। तेन, गत्यर्थादिभिन्नहृ-क्रोः प्रयोगे हारयति भारं देवदत्तम्/ हारयति भारं देवदत्तेन, कारयति कटं देवदत्तम्/ कारयति कटं देवदत्तेन, इत्याद्यप्राप्तिस्थले इयं विभाषा प्रवर्तते। अभ्यवहारयति सैन्धवान्/ अभ्यवहारयति सैन्धवैः। विकारयति सैन्धवान्/विकारयति सैन्धवैः, इत्यादिप्राप्तिस्थले च परविप्रतिषेधेन इयं विभाषैव भवति। अतः इयमुभयत्रविभाषा।

२. विभाषा साकाङ्क्षे इति सूत्रे पूर्वसूत्रात् 'यदि' इति नानुवर्तते। यच्छब्दरहित-स्मृतिवाचकोपपदकसाकाङ्क्षवक्तृकधातुप्रयोगे 'स्मरसि कृष्ण वने अवसाम तत्र गा अचारयाम' इत्यादौ पूर्वसूत्राप्राप्तिस्थले इयं विभाषा यच्छब्दसहित-स्मृतिवाचकोपपदकसाकाङ्क्षवक्तृक-धातुप्रयोगे 'स्मरसि कृष्ण यद्वने वत्स्यामः तत्र गाश्चारयिष्यामः' इत्यादौ पूर्वसूत्रप्राप्तिस्थले च परविप्रतिषेधेन इयं विभाषैव भवति। अतः इयमुभयत्रविभाषा।

३. 'विभाषा श्वेः' इति सूत्रे पूर्वसूत्रात् 'किति' इति नानुवर्तते। तेन अकिल्लिटि शुशाव-शिश्वाय इत्यादौ पूर्वसूत्राप्राप्तिस्थले इयं विभाषा प्रवर्तते। अकिल्लिटि शुशुवतुः-शिश्वियतुः इत्यादौ पूर्वसूत्रप्राप्तिस्थले च परविप्रतिषेधेन इयं विभाषैव भवति। अतः इयमुभयत्रविभाषा।

४. (अ) रुष्यमत्वर-सङ्घुषास्वनाम् ७.२.२८ इति सूत्रे पूर्वसूत्रात् अविशब्दने इति नानुवर्तते। तेन 'संघुष्टा' 'संघुषिता रज्जुः' इत्यादौ पूर्वसूत्राप्राप्तिस्थले इयं विभाषा प्रवर्तते। संघुष्टं-संघुषितं वा वाक्यम् इत्यादौ पूर्वसूत्रप्राप्तिस्थले च परविप्रतिषेधेन इयं विभाषैव भवति। अतः इयमुभयत्रविभाषा।

४. (आ) एवमेव अत्र 'रुष्यमत्वर इति सूत्रे 'क्षुब्ध-स्वान्त-ध्वान्त मन्थ मनस्' इति सूत्रात् 'मनसि' इति नानुवर्तते। तेन 'आस्वान्तः/आस्वनितो वा देवदत्तः' इत्यादौ पूर्वसूत्राप्राप्तिस्थले इयं विभाषा प्रवर्तते। 'आस्वान्तं आस्वनितं मनः' इति पूर्वसूत्रप्राप्तिस्थले च परविप्रतिषेधेन इयं विभाषैव भवति। अतः इयमुभयत्रविभाषा।

एवं सूत्रचतुष्टयविहितविभाषास्थले लक्ष्यैकचक्षुष्काभ्यां वार्तिक-भाष्यकृद्भ्याम् पूर्वसूत्रात् अननुवृत्तिं परविप्रतिषेधं च आश्रित्य उभयत्रविभाषापक्षः सिद्धान्तितः।

**मूलग्रन्थपाठो व्याख्या च**

**(वा.) उभयत्र च**

**इत उत्तरं या विभाषा अनुक्रमिष्यामः उभयत्र ताः द्रष्टव्याः। त्रिसंशयास्तु भवन्ति। प्राप्ते अप्राप्ते उभयत्र वेति।**

**व्याख्या**- कासुचिद्विभाषासु-प्राचीनाचार्यैः अन्यथान्यथा व्याख्यानात्, तद्दृष्टवताम् इयं विभाषा पूर्वेण प्राप्ते अर्थे वा? अप्राप्ते अर्थे वा? क्वचित् प्राप्ते अर्थे क्वचित् अप्राप्ते च अर्थे = उभयत्र वा् इति त्रिष्वर्थेषु संशयः भवति। यत्र एवं संशयः भवति, किन्तु वस्तुतः विचार्यमाणे याः उभयत्रविभाषा एव, ताः चतस्रः अत्र प्रदर्श्यन्ते इति वार्तिकतद्भाष्ययोरर्थः। यत्र संशयं विनैव उभयत्रविभाषात्वनिश्चयो भवति ताः 'ई३ चाक्रवर्मणस्य' ६.१.१३० इत्यादयः अत्र न प्रदर्श्यन्ते इति, पूर्वोक्तवार्तिकम् अधिकारवार्तिकम् इति च ज्ञेयम्।

**मूलग्रन्थपाठः**

**(वा.) ह्रक्रोरन्यतरस्याम्**

**प्राप्ते अप्राप्ते उभयत्र वेति सन्देहः। कथं च प्राप्ते? कथं चाप्राप्ते कथं चोभयत्र? 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ' इति नित्ये प्राप्ते, अन्यत्र वा प्राप्ते, उभयत्र वेति सन्देहः॥**

**उभयत्र। प्राप्ते तावत् अभ्यवहारयति सैन्धवान् अभ्यवहारयति सैन्धवैः। विकारयति सैन्धवान् विकारयति सैन्धवैः। अप्राप्ते-हरति भारं देवदत्तः। हारयति भारं देवदत्तम्, हारयति भारं देवदत्तेन। करोति कटं देवदत्तः, कारयति कटं देवदत्तम्, कारयति कटं देवदत्तेन।**

**व्याख्या**- 'ह्रक्रोरन्यतरस्याम् इति सूत्रविहितकर्मसंज्ञाविभाषाविषये यद्यपि त्रिसंशयाः भवन्ति, तथापि इयम् उभयत्रविभाषा ज्ञेया, 'गति-बुद्धि-प्रत्यवसानार्थ-शब्दकर्मा-कर्मकाणामणि कर्त्ता स णौ इति पूर्वसूत्रात् 'गति-प्रत्यवसानार्थ- अकर्मकपदानि अननुवर्त्य गत्याद्यर्थादि' हृ-क्रोः विषयेऽपि परविप्रतिषेधेन विभाषाया एव स्वीकारात्, इति वार्तिक-तद्भाष्ययोस्संपिण्डितार्थः। अत्र नित्यसूत्रात्-विकल्पसूत्रे गत्यादिपदानाम् अनुवृत्ति-अननुवृत्तिपक्षयोः फलभेददर्शनाय विभाषाविशेषनिश्चयाय च नित्यविभाषाशास्त्रयोराहत्य स्थलत्रयं परीक्षणीयं भवति। तत् स्थलत्रयमत्र अधस्तात् दर्शितम्, तस्य परीक्षणेन वार्तिक-तद्भाष्यार्थः सुज्ञातः स्यात्।

१. (क) गति-प्रत्यवसानार्थवृत्तिः अकर्मको वा 'हृ' धातुः कृञ् धातुश्च। यथा- अभ्यवहारयति सैन्धवान्/अभ्यवहारयति सैन्धवैः। विकारयति सैन्धवान्/विकारयति सैन्धवैः।

(ख) तदर्थावृत्तिः अकर्मकभिन्नश्च 'हृ' धातुः कृञ् धातुश्च। यथा- चैत्रः हारयति भारं देवदत्तम्/हारयति भारं देवदत्तेन। करोति कटं देवदत्तः। चैत्रः कारयति कटं देवत्तम्/कारयति कटं देवदत्तेन

(ग) गति-प्रत्यवसानार्थवृत्तिः अकर्मको वा 'हृ' कृञ्भिन्नधातुः। यथा- चैत्रः गमयति ग्रामं देवदत्तम्, चैत्रः आसयति देवदत्तम्, यदि पूर्वसूत्रात् विभाषासूत्रे गत्यादिपदानि अनुवर्तन्ते, तदा प्रथमस्थले एव विभाषा भवति, सा च प्राप्तविभाषा।

[नवेति विभाषा (१-१-४३) अप्राप्ते त्रिसंशयाः इत्याभ्यान्तं यावत्]

यदि नानुवर्तते, तदा द्वितीये अप्राप्तिस्थले विभाषा भवति, तदा सा अप्राप्तविभाषा। प्रथमे प्राप्तिस्थले तु पूर्वविप्रतिषेधेन नित्यशास्त्रमेव भवति, नित्यशास्त्रस्य 'हृ' कृञ्भिन्नधातुस्थले, विभाषाशास्त्रस्य च गत्यर्थादिभिन्न हृकृञ्-धातुस्थले च चरितार्थ्यात्। अननुवृत्तिपक्षे एव प्रथमे प्राप्तिस्थले यदि परविप्रतिषेधेन विभाषा भवति, तदा सा उभयत्रविभाषा। एवं त्रैविध्यसंभवे अननुवृत्तिपरविप्रतिषेधौ आश्रित्य च आश्रित्य लक्ष्यानुसारेण उभयत्रविभाषापक्षः सिद्धान्तितः।

**मूलग्रन्थपाठः**

**( वा. ) न यदि, विभाषा साकाङ्क्षे**

**प्राप्ते अप्राप्ते उभयत्र वेति सन्देहः। कथं च प्राप्ते, कथं चाप्राप्ते, कथं वोभयत्र? यदीति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते। उभयत्र वेति। उभयत्र। प्राप्ते तावत्। अभिजानासि देवदत्त यत्कश्मीरेषु वत्स्यामः। यत्कश्मीरेष्ववसाम। यत्तत्रौदनं भोक्ष्यामहे। यत्तत्रौदनमभुञ्ज्महि। अप्राप्ते। अभिजानासि देवदत्त? कश्मीरान्गमिष्यामः। कश्मीरानगच्छाम। तत्रौदनं भोक्ष्यामहे, तत्रौदनमभुञ्जमहि।**

**व्याख्या**- 'विभाषा साकाङ्क्षे इति सूत्रेण विहितलृण्णिषेधविभाषाविषये यद्यपि त्रिसंशयाः भवन्ति, तथापि इयम् उभयत्रविभाषा ज्ञेया, 'न यदि' इति पूर्वसूत्रात् 'यदि' इत्यननुवर्त्य यच्छब्दयुक्त-साकाङ्क्षस्थलेऽपि परविप्रतिषेधेन विभाषाया एव स्वीकारात्, इति वार्तिक-तद्भाष्ययोस्संपिण्डितार्थः।

अत्र नित्यसूत्रात्-विकल्पसूत्रे यदिपदस्य अनुवृत्ति-अननुवृत्तिपक्षयोः फलभेदर्शनाय विभाषाविशेषनिश्चयाय च नित्यविभाषाशास्त्रयोराहत्य स्थलत्रयं परीक्षणीयं भवति। तत् स्थलत्रयमत्र अधस्तात् दर्शितम्।

२.(क) यच्छब्दसहितः स्मृतिवाचकोपपदः साकाङ्क्षवक्तृकः धातुः। यथा - स्मरसि कृष्ण यद्वने वत्स्यामः तत्र गाश्चारयिष्यामः

(ख) यच्छब्दरहितः स्मृतिवाचकोपपदः साकाङ्क्षवक्तृकः धातुः। यथा - स्मरसि कृष्ण वने अवसाम तत्र गा अचारयाम

(ग) यच्छब्दसहितः स्मृतिवाचकोपपदः निराङ्क्षवक्तृकः धातुः। यथा - स्मरसि कृष्ण यद्वने गा अचारयाम

यदि पूर्वसूत्रात् विभाषासूत्रे यदि इति अनुवर्तते तदा प्रथमस्थले एव विभाषा भवति, सा च प्राप्तविभाषा। यदि नानुवर्तते, तदा द्वितीये अप्राप्तिस्थले विभाषा भवति, तदा सा अप्राप्तविभाषा। प्रथमे प्राप्तिस्थले तु पूर्वविप्रतिषेधेन नित्यशास्त्रमेव भवति नित्यशास्त्रस्य निराङ्क्षवक्तृकस्थले, विभाषाशास्त्रस्य च यच्छब्दसहितस्थले च चारितार्थ्यात्।

अननुवृत्तिपक्षे, एव, प्रथमे प्राप्तिस्थले यदि परविप्रतिषेधेन विभाषा भवति, तदा सा उभयत्रविभाषा। एवं त्रैविध्यसंभवे अननुवृत्ति-परविप्रतिषेधौ आश्रित्य च आश्रत्य लक्ष्यानुसारेण उभयत्रविभाषापक्षः सिद्धान्तितः।

**मूलग्रन्थपाठः**

**( वा. ) विभाषा श्वेः**

**प्राप्ते अप्राप्ते उभयत्र वेति सन्देहः। कथं च प्राप्ते, कथं चाप्राप्ते कथं वोभयत्र ? क्तिीति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति। उभयत्र। प्राप्ते तावत्। शुशुवुः। शिश्वियतुः, शिश्वियुः। अप्राप्ते-शुशाव-शुशविथ। शिश्वाय, शिश्वयिथ।**

**व्याख्या**- 'विभाषा श्वेः' इति सूत्रविहितसम्प्रसारणविभाषाविषये यद्यपि त्रिसंशयाः भवन्ति, तथापि इयम् उभयत्रविभाषा ज्ञेया, 'वचि-स्वपि-यजादीनां किति' इति पूर्वसूत्रात् 'किति' इत्यननुवर्त्य श्विधातोः किति लिटि अपि परविप्रतिषेधेन विभाषाया एव स्वीकारात्, इति वार्तिक-तद्भाष्ययोस्संपिण्डितार्थः। अत्र नित्यसूत्रात्-विकल्पसूत्रे 'किति' पदस्य अनुवृत्ति-अननुवृत्तिपक्षयोः फलभेददर्शनाय विभाषाविशेषनिश्चयाय च नित्यविभाषा शास्त्रयोराहत्य स्थलत्रयं परीक्षणीयं भवति। तत् स्थलत्रयमत्र अधस्तात् दर्शितम्।

क. किल्लिट्परकः श्विधातुः। यथा- शुशुवतुः शिश्वियतुः

ख. अकिल्लिट्पकरः श्विधातुः। यथा- शुशाव-शिश्वाय

ग. लिड्भिन्नकित्परकः श्विधातुः। यथा- शूयात्

यदि पूर्वसूत्रात् विभाषासूत्रे 'किति' इति अनुवर्तते, तदा प्रथमस्थले एव विभाषा भवति, सा च प्राप्तविभाषा। यदि नानुवर्तते, तदा द्वितीये अप्राप्तिस्थले विभाषा भवति, तदा सा अप्राप्तविभाषा। प्रथमे प्राप्तिस्थले तु पूर्वविप्रतिषेधेन नित्यशास्त्रमेव भवति, नित्यशास्त्रस्य 'शूयात्' इत्यादौ आशिषि लिङि विभाषाशास्त्रस्य च 'शुशाव-शिश्वाय' इत्यादौ अकिति लिटि चारितार्थ्यात्। अननुवृत्तिपक्षे एव, प्रथमे प्राप्तिस्थले यदि परविप्रतिषेधेन विभाषा भवति, तदा सा उभयत्रविभाषा। एवं त्रैविध्यसंभवे अननुवृत्ति-परविप्रतिषेधौ आश्रित्य च आश्रित्य लक्ष्यानुसारेण उभयत्रविभाषापक्षः सिद्धान्तितः।

**मूलग्रन्थपाठः**

**( वा. ) विभाषा संघुषास्वनाम्**

**सम्पूर्वाद् घुषेः-प्राप्ते अप्राप्ते उभयत्र वेति सन्देहः। कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ? 'घुषिरविशब्दने' इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति॥**

**उभयत्र। प्राप्ते तावत्-संघुष्टा रज्जुः, संघुषिता रज्जुः। अप्राप्ते-संघुष्टं वाक्यम् आह, संघुषितं वाक्यमाह॥ आङ्पूर्वात् स्वनेः-प्राप्ते अप्राप्ते उभयत्र वेति सन्देहः। कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ? मनसीति वा नित्ये प्राप्ते अन्यत्र वा अप्राप्ते, उभयत्र वेति।**

**उभयत्र। प्राप्ते तावत् आस्वान्तं मन आस्वनितं मनः। अप्राप्ते - आस्वनितो देवदत्तः आस्वान्तो देवदत्तः इति॥**

**व्याख्या**- रुष्यम-त्वर-सङ्घुषास्वनाम् (७.२.२८)

अनुपसर्गाद्वा 'सम्' उपसर्गसहितात् घुषधातोः अविशब्दनार्थात् (=शब्देन अभिप्राय-प्रकाशनार्थात्) निष्ठायां नित्यतया इडागमनिषेधकं 'घुषिरविशब्दने' इति सूत्रम्।

'सम्' उपसर्गसहितात् घुषेः विभाषया इण्निषेधकं 'रुष्यम-त्वर-संघुषास्वनाम्' इति सूत्रम्। यदि विभाषासूत्रे पूर्वसूत्रात् 'अविशब्दने' इत्यनुवर्तते, तदा 'संघुष्टं-संघुषितं वा वाक्यम्' इत्यादौ पूर्वसूत्रेण प्राप्तस्यैव अनिट्त्वस्य विभाषणात् इयं प्राप्तविभाषा भवति।

यदि नानुवर्त्यते, तदा 'संघुष्टा' 'संघुषिता रज्जुः' इत्यादौ विभाषायाः 'घुष्टा रज्जुः' इत्यादौ नित्यस्य च चारितार्थ्यात्, 'संघुषितं वाक्यम्' इत्यादौ उभयोः प्राप्तौ पूर्वविप्रतिषेधेन नित्यशास्त्राङ्गीकारे विभाषाशास्त्रं 'संघुषिता रज्जुः' इत्यादौ अप्राप्तिस्थले एव प्रवर्तते इति कृत्वा इयं विभाषा अप्राप्तविभाषा भवति।

[नवेति विभाषा (१-१-४३) अप्राप्ते त्रिसंशयाः इत्याभ्यान्तं यावत्]

अननुवृत्तिपक्षे एव, 'संघुषितं वाक्यम्' इत्यादौ परविप्रतिषेधेन विभाषा आश्रीयते चेत् इयं विभाषा, 'संघुष्टा' 'संघुषिता रज्जुः' इत्याद्यप्राप्तिस्थले 'संघुष्टं' 'संघुषितं वाक्यम्' इत्यादिप्राप्तिस्थले च प्रवर्तते, इति कृत्वा उभयत्रविभाषा भवति। एवं स्थिते का वा विभाषा अत्र ? इत्येवमत्र त्रिसंशयाः भवन्ति।

मनोरूपार्थे स्वनधातोः निष्ठायाः इण्निषेधविधायकम् 'क्षुब्ध-स्वान्त-ध्वान्त-लग्न-म्लिष्ट-विरिब्ध-फाण्ट-बाढानि मन्थ-मनस्-तमः सक्ताविस्पष्ट-स्वरानायास-भृशेषु' ७.२.१८ इति सूत्रम्। स्वान्तं मनः इत्युदाहरणम्।

आङ्पूर्वात् स्वनधातोः निष्ठायाः वा इण्निषेधविधायकं, 'रुष्यम-त्वर-सङ्घुषास्वनाम्' इति सूत्रम्। यदि पूर्वसूत्रात् विभाषासूत्रे 'मनसि' इत्यनुवर्त्यते, तदा 'आस्वान्तं मनः' इत्यत्र पूर्वसूत्रेण नित्यप्राप्तस्यैव अनिट्त्वस्य विभाषणात् इयं प्राप्तविभाषा।

यदि नानुवर्त्यते, तदा मनोरूपार्थे 'आस्वान्तं मनः' इत्यत्र नित्य-विभाषयोः प्राप्तौ पूर्वविप्रतिषेधेन नित्यानिष्ट्त्वस्यैव स्वीकारे मनोभिन्नार्थे 'आस्वान्तः/आस्वनितो वा देवदत्तः' इत्यादौ अप्राप्तिस्थले एव प्रवर्तनात् एषा अप्राप्तविभाषा।

अननुवृत्तिपक्षे एव, मनोरूपार्थे नित्य-विभाषयोः प्राप्तौ परविप्रतिषेधेन अनिट्त्वविभाषायाः एव स्वीकारे 'आस्वान्तं मनः' इत्यत्र क्वचित् प्राप्तस्य, 'आस्वान्तः/आस्वनितो वा देवदत्तः' इत्यादौ क्वचित् अप्राप्तस्य च विभाषणात् इयम् उभयत्रविभाषा भवति।

**बोधप्रश्नः**

७. उभयत्रविभाषात्वनिर्णयोपायः कः ?

८. 'ह्रक्रोरन्यतरस्याम्' इति विभाषा का ?

९. 'विभाषा श्वेः' इत्यत्र के त्रिसंशयाः ? तान् ? उपपादयत।

१०. घुषिरविशब्दने रुष्यम-त्वर-सङ्घुषास्वनाम् इत्यनयोः अन्यत्र चारितार्थ्यं दर्शयत।

## १४.४ सारांशः

अप्राप्तविभाषात्वेन अभिमतेषु 'प्रथमचरमे'त्यादित्रयोदशसूत्रेषु प्राचीनाचार्याणामन्यथान्यथास्थितव्याख्यानदर्शनेन जिज्ञासूनां मनसि जाताः त्रिसंशयाः (=इयं प्राप्तविभाषा वा ? अप्राप्तविभाषा वा ? उभयत्रविभाषा वा ? इत्याकाराः) आदौ विवृताः। ततः पूर्वसूत्रात् अननुवृत्तिं नित्य-विभाषयोः समावेशस्थले पूर्वविप्रतिषेधं च आश्रित्य अप्राप्तविभाषापक्षः सिद्धान्तितः। ततः प्राप्तविभाषात्वेन अभिमतेषु 'विभाषा विप्रलापे' इत्यादिषु पञ्चसूत्रेषु पूर्वोक्तरीत्या त्रिसंशयाः प्रदर्शिताः,। ततः पूर्वसूत्रात्, विभाषासूत्रे प्राप्तविभाषात्वबोधकपदस्य अनुवृत्तिं स्वीकृत्य प्राप्तविभाषापक्षः सिद्धान्तितः।

ततः उभयत्रविभाषात्वेन अभिमतेषु 'ह्र- क्रोरन्यतरस्याम्' इत्यादिपञ्चसूत्रेषु पूर्वोक्तरीत्या त्रिसंशयाः प्रदर्शिताः,। ततः पूर्वसूत्रात्, विभाषासूत्रे प्राप्तविभाषात्वबोधकपदस्य अननुवृत्तिं, नित्य-विभाषयोः समावेशस्थले परविप्रतिषेधेन विभाषायाः एव प्रवृत्तिं च आश्रित्य उभयत्रविभाषापक्षः सिद्धान्तितः। कासुचित् विभाषासु, प्राचीनाचार्यैः अन्यथान्यथा व्याख्या न कृता इति हेतोर्वा, तत्र 'प्रकारान्तरेण प्राप्तविभाषात्वादिसंशयः नोदेति, उदितोऽपि सन् प्रकारान्तरेण निवर्तते' इति भावनाद्वा हेतोः त्रिसंशयाः प्रदर्शिताः, सिद्धान्तश्च न प्रदर्शितः। तत्र अस्माभिः प्राचीन-प्रामाणिकव्याख्यादर्शनेन संशयो वारणीयः यदि संशयो जायते। अत्रेदमवधेयम्-वार्तिक-भाष्यकारयोः लक्ष्यैकचक्षुष्कत्वात् तथा ताभ्यां कृतः निर्णयः अस्माभिः स्वीकार्यः। तत्र सूत्रे कुतः नानुवर्तते ? अत्र सूत्रे कुतः अनुवर्तते ? इत्याद्यनुयोग-पर्यनुयोगौ अस्माभिः न कार्यौ इति।

अत्र मध्ये प्रसङ्गवाशात् बहवो विषयाः प्रस्तुताः भाष्ये – उभशब्दे अयच् न तयस्यादेशः, किन्तु स्वतन्त्रप्रत्ययः इति, 'टिड्ढाणञ् 'सूत्रे 'मात्रच्' इति प्रत्याहारः इति, दीपादयः धातवः कर्तृस्थक्रियकाः, नतु कर्मस्थक्रियकाः इति, इत्येवमादयः। एतादृशवार्तिक भाष्योक्तार्थव्याख्याने एकदेशिनामभिप्रायस्य सिद्धान्तिनः अभिप्रायस्य च उन्नयने प्रदीप–उद्योतकाराभ्यामपि बहवः विषयाः प्रतिपादिताः। एत्सर्वम् अध्येतृजनबुद्धिवैशद्याय अवश्यम् उपकरोतिति तत्र तैः श्रद्धा देया इति।

## १४.५ शब्दावली

| | | | |
|---|---|---|---|
| १. | पूर्वविप्रतिषेधः | – | यत्र विप्रतिषेधे पूर्वमिष्टं भवति। पर शब्दः सूत्रेऽस्मिन् पक्षे इष्टवाची। |
| २. | मात्रच् इति प्रत्याहारः | – | प्रमाणे द्वयसचृदध्नञ्मात्रचः इति मात्रशब्दात् अयचः चकारं यावत्। |
| ३. | उपयमनम् | – | विवाहः/अङ्गीकारः |
| ४. | अकर्मकाः | – | कर्मरहिताः धातवः |
| ५. | कर्मस्थभावकाः | – | कर्मणि स्थितः भावः येषां ते, |
| ६. | कर्तृस्थभावकाः | – | कर्तरि स्थितिः भावः येषां ते, |
| ७. | कर्मवद्भावः | – | कर्मवत्कर्मणा तुल्यक्रियः इति सूत्रविहितः। |
| ८. | कर्मकर्ता | – | कर्म एव कर्तृत्वेन यदा विवक्षितोभवति। |
| ९. | आभीक्ष्ण्यम् | – | पौनःपुन्यम्, समभिव्याहारः |
| १०. | विप्रलापः | – | विरुद्धवचनम् |
| ११. | अन्तर्द्धिः | – | अन्तर्धानम्, तिरोभवनम् |
| ३.२ | साकाङ्क्षे | – | आकाङ्क्षया सह वर्तते, तस्मिन् |

## १४.६ सन्दर्भग्रन्थः

१. व्याकरणमहाभाष्यम् तस्य व्याख्या प्रदीपः, तस्य व्याख्या, उद्योतः छायाटीका च (विशिष्य–नवाह्निकभागः)

## १४.७ सहायकग्रन्थः

१. काशिकावृत्तिः वामन–जयादित्यकृता

२. वैयाकरणसिद्धान्तकौमुदी 'बालमनोरमा–तत्त्वबोधिनी' व्याख्योपेता,

३. प्रौढमनोरमा भट्टोजिदीक्षितकृता

४. शब्दकौस्तुभः

५. लघुशब्देन्दुशेखरः

६. परिभाषेन्दुशेखरः

७. वैयाकरणसिद्धान्तकौमुदी लक्ष्मीव्याख्योपेता (प्रथम–द्वितीयांशौ)

## १४.८ बोधप्रश्नोत्तराणि

१. प्रथम–चरम–तयाल्पार्ध कतिपय नेमाश्च १–१–३३

२. विभाषोर्णोः १-२-३

३. विभाषोपयमने १-२-१६

४. अनुपसर्गाद्वा १-३-४३

५. विभाषा वृक्ष-मृग-तृण-धान्य-व्यञ्जन-पशु-शकुन्यश्ववडव-पूर्वापराधरोत्तराणाम् २-४-१२

६. उष-विद-जागृभ्योऽन्यतरस्याम् ३-१-३८

७. दीप-जन-बुध-पूरि-तायि-प्यायिभ्योऽन्यतरस्याम् ३-१-६१

८. विभाषाग्रे-प्रथम-पूर्वेषु ३-४-२४

९. विभाषा तृन्-अन्न-तीक्ष्ण-शुचिषु ६-३-५९

१०. एकहलादौ पूरयितव्येऽन्यतरस्याम् ६-३-५९

११. श्वादेरिञि पदान्तस्यान्तरस्याम् ७-३-९

१२. सपूर्वायाः प्रथमाया विभाषा ८-१-२६

१३. ग्रो यङि अचि विभाषा ८-२-२१ इति त्रयोदशसूत्रेषु तद्विहितविभाषाविषये अप्राप्तविभाषात्वम् निर्णीतम्।

**२. 'द्वन्द्वेच- विभाषा जसि' इति वार्तिकस्य विवक्षितार्थः कः ?**

उत्तरम्– अत्र वार्तिके 'द्वन्द्वे च-विभाषा जसि' इति सूत्रे, 'सर्वादीनि सर्वनामानि' १.१.२७ 'प्रथम-चरम-तयाल्पार्ध-कतिपय-नेमाश्च' १.१.३३ इति सूत्रोपलक्षणतया उपात्ते सर्वनामसंज्ञाप्रकरणसंबन्धिविभाषा अत्र प्रस्तुता इति सूचनाय लाघवाय च एवं निर्दिष्टम्। ततश्च 'विभाषा जसि' इत्यतः विभाषापदानुवृत्तिसहिते 'प्रथमचरमे'त्यादिसूत्रे यद्यपि, त्रिसंशयाः भवन्ति (=इयं प्राप्तविभाषा वा अप्राप्तविभाषा वा उभयत्रविभाषा वा इति संशयो भवति।) तथापि एषा अप्राप्तविभाषैव, इति ज्ञेयम् इति वार्तिकार्थः।

**३. कुत्र कुत्र सूत्रेषु अप्राप्तविभाषात्वं निर्णीतम्?**

उत्तरम्– का तावत् अप्राप्तविभाषा?

यत्र नित्यसूत्रात् विभाषासूत्रे प्राप्तविभाषात्वसम्पादकं पदं नानुवर्तते, यत्र च नित्य-विभाषयोः उभयोः अन्यत्र चारितार्थयोः कवचित् समावेशे पूर्वविप्रतिषेधादिना नित्यशास्त्रमेव प्रवर्तते, तत्रत्या विभाषा केवलमप्राप्तविभाषा भवति।

**४. 'ऊर्णोतेर्विभाषा' इति वार्तिकार्थः कः ?**

उत्तरम्– अत्र वार्तिके 'ऊर्णोतेर्विभाषा' इत्यनेन विभाषोर्णोः १.२.३ इति सूत्रं विवक्षितम्। 'विभाषोर्णोः' १.२.३ इति सूत्रविहितविभाषाविषये यद्यपि इयमप्राप्तविभाषा वा प्राप्तविभाषा वा उभयत्रविभाषा वा इति संशयः भवति, तथापि इयमप्राप्ते विभाषा ज्ञेया इति वार्तिकस्यार्थः।

**५. कुत्र-कुत्र सूत्रेषु प्राप्तविभाषात्वं निर्णीतम् ? विवृणुत**

उत्तरम्– (१) विभाषा विप्रलापे १.३.५. (२) विभाषोपपदेन प्रतीयमाने १.३.७७, (३) (तिरोऽन्तर्धौ) विभाषा कृञि १.४.७२, (४) (अधिरीश्वरे १.४.९६) 'विभाषा कृञि' १.४.९८ (५) 'विभाषोपसर्गे' २.३.५९ इति पञ्चसूत्रविहितविभाषाविषये प्राप्तविभाषात्वं निर्णीतं भाष्ये।

**६. अधिरीश्वरे-विभाषा कृञि इत्यत्र विभाषा प्राप्ते विभाषा कथम् ?**

उत्तरम्– ईश्वरे (=स्वस्वामिसम्बन्धे द्योत्ये) कृञ्धातुयोगे वा तद्भिन्नधातुयोगे वा 'अधि' शब्दस्य

नित्यतया कर्मप्रवचनीयसंज्ञाविधायकम् 'अधिरीश्वरे १.४.९६' इति सूत्रम्। कृञ्धातुयोगे 'अधि' शब्दस्य विकल्पतया कर्मप्रवचनीयसंज्ञाविधायकम्। 'विभाषा कृञि' १.४.९८ इति विभाषासूत्रे यदि पूर्वसूत्रात् 'ईश्वरे' इत्यनुवर्तते तदा पूर्वसूत्रप्राप्तसंज्ञाया एव विभाषणात् **एषा प्राप्तविभाषा भवति।**

७. **उभयत्रविभाषात्वनिर्णयोपायः कः ?**

उत्तरम्– यत्र नित्यसूत्रात् विभाषासूत्रे प्राप्तविभाषात्वसम्पादकं पदं नानुवर्तते, यत्र च नित्य–विभाषयोः उभयोः अन्यत्र चारितार्थयोः क्वचित् समावेशे परिविप्रतिषेधादिना विभाषाशास्त्रमेव प्रवर्तते, तत्रत्या विभाषा उभयत्रविभाषा भवति। ततश्च नित्यसूत्रात् विभाषासूत्रे प्राप्तविभाषात्व–सम्पादकपदाननुवृत्तिः। नित्य–विभाषयोः समावेशे परविप्रतिषेधादिना विभाषाशास्त्रस्यैव स्वीकारः, इत्येतद्द्वयम् उभयत्रविभाषात्वनिर्णयोपायः।

८. **'ह्क्रोरन्यतरस्यम्' इति विभाषा का विभाषा ?**

उत्तरम्– ह्कोरन्यतरस्याम् १.४.५३ इति सूत्रे विभाषा उभयत्रविभाषा। 'चैत्रः हारयति भारं देवदत्तम्/हारयति भारं देवदत्तेन, कारयति कटं देवदत्तम्/कारयति कटं देवदत्तेन, इत्याद्यप्राप्तिस्थले इयं विभाषा प्रवर्तते। अभ्यवहारयति सैन्धवान्/अभ्यवहारयति सैन्धवैः। विकारयति सैन्धवान्/विकारयति सैन्धवैः, इत्यादिप्राप्तिस्थले च परविप्रतिषेधेन इयं विभाषैव भवति। अतः इयमुभयत्रविभाषा।

९. **विभाषा श्वेः इत्यत्र के त्रिसंशयाः? तान् उपादयत।**

उत्तरम्– 'विभाषा श्वेः' इत्यत्र के त्रिसंशयाः ? तान् उपपादयत– यदि 'वचि–स्वपि–यजादीनां किति' इति सूत्रात् 'विभाषा श्वेः' इति सूत्रे 'किति' इत्यनुवर्त्यते, तदा शुशुवतुः–शिश्वियतुः इत्यादौ पूर्वसूत्रप्राप्तिस्थले एव प्रवर्तनात् इयं प्राप्तविभाषा भवति।

यदि नानुवर्त्यते, तदा श्वि + अतुस् (=शिश्वियतुः–शुशुवतुः) इत्यादौ पूर्वसूत्रप्राप्तिस्थले, श्वि + अ (=शुशाव –शिश्वाय) इत्यादौ पूर्वसूत्राप्राप्तिस्थले च प्राप्तावपि, श्वि + अतुस् इत्यादौ पूर्वविप्रतिषेधेन नित्यस्यैव स्वीकारे इयमप्राप्तविभाषा भवति। अननुवृत्तिपक्षे एव, यदि परविप्रतिषेधः आश्रीयते तदा विभाषा, क्वचित् प्राप्तस्य क्वचिदप्राप्तस्य च सम्प्रसारणस्य विभाषणात् उभयत्रविभाषा भवति। एवं स्थिते का विभाषा अत्र ? इत्येवमत्र त्रिसंशयाः भवन्ति।

१०. **'घुषिरविशब्दने'-रुष्यमत्वर-सङ्घुषास्वनाम् इत्यनयोः अन्यत्र चारितार्थ्यं दर्शयत।**

उत्तरम्– 'घुषिरविशब्दने' इति सूत्रात् 'अविशब्दने' इति रुष्यम–त्वर–सङ्घुषास्वानाम् इत्यत्र यदि नानुवर्त्यते, तदा 'संघुष्टा' 'संघुषिता रज्जुः' इत्यादौ विभाषा चरितार्था 'घुष्टा रज्जुः' इत्यादौ नित्यानिट्त्वं च चरितार्थम्। एवमुभयोः अन्यत्र चारितार्थ्यमस्ति। अतः 'सङ्घुषितं वाक्यम्, इत्यादौ उभयोः प्राप्तौ पूर्वविप्रतिषेधो वा परविप्रतिषेधो वा आश्रयणीयो भवति।

## १४.९ अभ्यासप्रश्नाः

१. विभाषा कतिधा भवति ? तेषां स्वरूपं किं भवति ? तत्र प्रत्येकं सोदाहरणं विवृणुत।

२. त्रिसंशयेषु सत्सु, एकैकस्य विभाषाप्रकारस्य संभवः केन प्रकारेण भवति ?

३. अप्राप्तविभाषायाः उदाहरणतया प्रदर्शितानि सूत्राणि कति ? तानि च कानि ?

४. प्राप्तविभाषायाः उदाहरणतया प्रदर्शितानि सूत्राणि कति ? तानि च कानि ?

५. उभयत्रविभाषायाः उदाहरणतया प्रदर्शितानि सूत्राणि कति ? तानि च कानि ? तत्र एकस्य सूत्रस्य विषये त्रिसंशयाः कथं भवन्ति ? उभयत्रविभाषात्वनिर्णयः तत्र कथम् ?